श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावळी ।




## शतदूषणी ।

### एकत्रिंशो वादः ।

अन्ते विरोधिजनसङ्क्रमणीयमर्थं
पूर्वोत्तराघनिवहप्रतिबन्धकेन ।
यद्ध्यानसन्ततिलताप्रथमाङ्कुरेण
मुक्ता इवात्र मुनयः स गतिर्म्ममास्तु ॥

समन्वयाधिकरणभाष्ये परेषां मयूख्यकल्पमुपक्षिप्य जीवन्मुक्त पक्षः प्रतिक्षिप्तः, तदेवात्र पूर्वापरसङ्गतेर्व्याकुर्मः ।

---

चण्डमारुतः ।

अन्त इति । विरोधिजनसङ्क्रमणीय सर्वत्र पूर्वोत्तराघनिवहस्य प्रतिबन्धकं येनेति विग्रहः । उपासनाप्रारम्भदशायामेव प्रारब्धेतरपूर्वाघं अबुद्धिपूर्वोत्तराघं च उपासननिर्वृत्त्यनन्तरं शरीरपातसमये द्विषति सङ्क्रमयिष्यतीति भगवता सङ्कल्प्यते, तस्य च स्वानुभाव्यत्वेन स्वस्याविद्यमानतुल्यत्वात् तन्मात्रेण मुक्तप्राया भवन्ति विद्यानिष्ठाः, इयमेव जीवन्मुक्तिरुपचर्यत इत्यभिप्रायः । पूर्वापरवादानां प्रथमसूत्रभाष्याभिप्रायविवरणरूपत्वात् समन्वयाधिकरणस्थजीवन्मुक्तिभङ्गभाष्यविवरणस्यात्रासङ्गतिमाशङ्क्याह समन्वये ति । वेदान्तानां तत्त्वज्ञानहेतुत्वासम्भवः पूर्ववादेषूक्तः, इह ब्रह्मणि प्रामाण्याधीनाद्वाक्यार्थतत्त्वज्ञानमात्राज्जीवन्मुक्तिरयमित्यर्थः प्रतिक्षिप्यते । अतो वादद्वयस्यापि पौर्वापर्यप्रयोजकसङ्गतिविशेषादिह निरूपणं युक्तमिति भावः ।

यदाहुः — ब्रह्मात्मैक्योपदेशपरतत्त्वमसिवाक्यश्रवणजनिततत्त्वाध्यवसायादेव जीवन्नपि मुच्यते पुरुषः, ज्ञानस्यैव स्वाभाविकमोक्षप्रतिबन्धनिवर्तकत्वात्, तस्यच निष्पन्नत्वात्; बाधातिरिक्ताया श्च विरोधिनिवृत्तेरभावात् । नहि रज्जुयाथात्म्यज्ञानातिरेकेण मिथ्याभूतसर्पभयनिवृत्तेः सर्पविनाशो ऽप्यपेक्षितः । नच शरीरादेस्सत्यत्वमिच्छाम, येन ज्ञानमात्रान्न निवर्तेत । श्रूयतेच— 'तमेव विद्वानमृतइह भवति' 'तमेव विदित्वा ऽतिमृत्युमेति' 'यदा सर्वे प्रमुच्यन्ते कामा येस्य हृदि स्थिता । अथ मर्त्यो मृतो भवति अत्र ब्रह्म समश्नुते' इति । जीवन्मुक्तिशब्द एव च कचित्पुराणेषु पठ्यते 'जीवन्मुक्ता भवन्ती' त्यादि । यः पुनर्जीवन्मुक्तस्यापि यथापूर्वं देहाद्यनुबन्धः, सोपि दग्धपटवन्नबन्धकः; स्वयमेवच कदाचिन्नकुक्रमस्वप्नादिवदत्यन्तप्रतिभास

---

ज्ञानस्यैवे ति । जीवस्य ब्रह्मभावो हि मोक्षः, सच स्वाभाविक एव, तादृशस्यापि कर्णचामीकरवदविद्यावशादतात्त्विका प्राप्तिरित्यप्राप्तिहेतुत्वेनाज्ञान प्रतिबन्धकम्, तन्निवृत्तिश्च ज्ञानमात्रात् भवतीत्यर्थः । ननु अविद्यानिवृत्तिर्मोक्षः, ज्ञानेन तु मिथ्याभूतस्य बाध एव न निवृत्तिरिति कथ ज्ञानमात्रान्मुक्तिरित्यत्राह बाधे ति । ननु ज्ञानेन निवृत्तावपि प्रतिबन्धकध्वंसासिद्धेः कथ मोक्ष इत्यत्राह नही ति । सत्यसर्पस्थल एव भयनिवृत्तेर्मुद्गरादिजन्यसर्पविनाशापेक्षा, मिथ्यासर्पस्थले रज्जुयाथात्म्यज्ञानान्निवृत्तिमात्रमेवापेक्षितम्, एवमिहापीत्यर्थः । नचे ति । ज्ञानमात्राधीना निवृत्तिः, सा तु सत्यत्वे सति न स्यात्, तच शरीरादेर्नास्तीत्यर्थः । तमेवमि ति । इह जीवद्दशायामित्यर्थः । तमेवे ति । त विदित्वैवेत्यन्यपादन्यानिरपेक्षात् ज्ञानादेर्मोक्षश्रुतेर्जीवत एव मोक्षस्सिद्ध इत्यर्थः । यदे ति । अत्र अथेत्युक्तेरनेत्युक्तेश्च जीवत एव मुक्तिर्गम्यते । ननु मुक्तावपि यदि देहाद्यनुबन्धानुवृत्तिः तर्हि पश्चादपि कथमत्यन्तानिवृत्तिरित्यत्राह स्वयमेवे ति ।

स्यमेष्यति। 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' 'न कर्म लिप्यते नरे' 'यस्य नाहङ्कृतो भाव' इत्यादिभिर्ब्रह्मविदां कर्मालेपोपदेशश्च जीवन्मुक्तिमन्तरेण न घटते । 'तस्यकार्यं नविद्यत' इति सर्वोपायानुष्ठाननिवृत्तिरपि तेषान्तदेव मुक्तिमावेदयति । अतो वयन्निर्गुणब्रह्मविदस्सर्वस्वैरयोग्या — इति ।

अत्र ब्रूम - यदुक्तं ज्ञानस्यैव मोक्षप्रतिबन्धकनिवर्तकत्वात्तस्य च निष्पन्नत्वात्तदानीमेवासौ मुक्त इति ; तदसत्, असकृदावृत्तस्या प्रयाणादनुवृत्तस्य ज्ञानविशेषस्य मुक्तिसाधनत्वस्थापनात् ; तस्य च प्रक्रान्तस्याप्यन्तिमप्रत्ययसावधिकत्वेन निश्शेषनिष्पन्नत्वाभावात्। भवतुवोपायभूतज्ञानं निष्पन्नम्, तथापि तदानीमेव फलसिद्धिरिति नायन्नियमः, स्वर्गादिसाधनेषु सगुणानुष्ठितेषु यज्ञादिष्विव प्रतिबन्धेन फलविलम्बोपपत्तेः । नच प्रतिबन्धकमपि मिथ्यात्वाविशेषात्तत्त्वज्ञानेनैव निवृत्तमिति वाच्यम्, तथासति जीवनादेरपि निवृत्तिप्रसङ्गेन जीवन्मुक्तिश्चोद्युक्तेरेवायुक्तेः । शरीरादिमिथ्यात्ववर्णनदूषणमपि विस्तरेणान्यत्र द्रष्टव्यम् । इहामृतत्वश्रुत्यादिकमपि प्रत्यक्षादिविरोधात् बहुविधश्रुतिस्मृत्यादिविरोधाच्च उत्तरपूर्वाघाश्लेषविनाशरूपमुक्तिकल्पावस्थाविशेषाभिप्रायमिति व्यवस्थाप्यते । एतदभिप्रायेण ह्युक्तं महाभारते 'मुक्तानां लक्षणं ह्येतच्छ्वेतद्वीपवासिनामि' ति । 'अत्र ब्रह्म समश्नुत' इत्येदपि

---

स्थापनादिति। अविघेदज्ञानमङ्गे। फलविलम्बोपपत्ते रिति। तथापि प्रबलारब्धकर्मप्रतिबन्धादेव निश्शेषाविद्यानिवृत्त्यभाव इति भावः। श्रुतिस्मृतीति । ध्यानादिविधिः 'तम्यतार' दित्यादिश्च श्रुतिः, 'बुद्धेचेदि' त्यादिस्तु स्मृतिः ध्यानादिस्मृतिश्च । अश्लेषविनाशे ति तत्सङ्कल्पाभिप्रायम् । ननु 'मुक्तानांलक्षण' मिति वचनेन जीवतोऽपि मुक्तिप्रतीतेः सिद्धान्ते कथं तन्निरास इत्यपेक्षायामाह एतदि ति ।

समाधिदशाभाविब्रह्मानुभवपरम्। नच सैव साक्षाद्ब्रह्मप्राप्ति , अन्या नुकूल विच्छेदात् ; अपुनर्विच्छेदस्य निरवशेषब्रह्मानुभवस्य सिषाधयिषितत्वात् ।

यत्तु यथा पूर्वं देहानुबन्धस्य दग्धपटवत्रबन्धरूपमिति , तदपि स्वहृदयविसंवादेनोक्तम् । नहि तत्त्वमस्यादिवाक्यश्रवण समनन्तरमप्यनुवर्तमानदेहेन्द्रियादिभिर्दुःखादिक न जायते । काचेयं जीवन्मुक्ति ? किं जीवत एव देहादिभेदनिवृत्ति , उत तत्प्रतिभासस्य, अथ तदर्थनिमवृत्ते , यद्वा तन्मूलपुण्यपापादे , अथवा तत्प्रयुक्तसुखदुःखादे , यद्वान्यस्य कस्यचिदिति । नाद्य , व्याघातात्, जीवनस्य शरीरादिसम्बन्धात्मकत्वात् । सशरीरत्व बन्ध , अशरीरत्व मोक्ष इति त्वयैव श्रुतिभिरुपपादितत्वात्। अथ सशरीरत्वप्रतिभासे सत्यपि बाधात् सशरीरत्व निवृत्तमिति न विरोध इति चेत् ? सशरीरत्वे निवृत्ते कथमशरीरस्य सतो जीव

---

सिसाधयिषितत्वा दिति । मुमुक्षुणा सिसाधयिषितत्वात् सैव मुक्तिरितिभाव । द्वितीयादिकल्पेषु निवृत्तिरित्यध्याहार । चतुर्थे निवृत्तिरनुत्पत्ति । व्याघातादि ति । शरीरसम्बन्धतन्निवृत्त्यो परस्पर व्याघात बन्धमोक्षयो परस्पर व्याघात इति व्याघातद्वय विवक्षितम् । इदञ्च क्रमेण जीवनस्येत्यादिपक्षस्य तद्द्वयविवक्षितहेतुद्वयेनोपपाद्यते । श्रुतिभिरि ति 'नह वैसशरीरस्ये'त्यादि श्रुति । द्वितीयव्याघातपरिहार शङ्कते अथेति । सशरीरत्व निवृत्तौ परममुक्त्यपेक्षया जीवन्मुक्ते को विशेष इत्यपेक्षाया प्रतिभासो विशेष इत्याह सशरीरत्वप्रतिभास इति । कथ मिति । जीवनाभावादिति भाव । ननु शरीर प्रतिभासो जीवनम् , अतो न विरोध इत्यत आह अजीवत इति । सम्प्रति पक्षाया ज्ञानजन्याया अशरीरनिवृत्ते तत्प्रतिभासनिवृत्त्यात्मकत्वात् जीवतोऽपि त्वदिष्टज्ञानजन्यसशरीरत्वनिवृत्ति प्रतिभासनिवृत्तिरेव वाच्या, एवञ्च शरीर प्रतिभासात्मकजीवनस्याभावाज्जीवन्मुक्तिविरोध इत्यर्थ । अथवा– कथ मिति ।

न्मुक्ति ? अजीवतोपि हि मुक्ति सशरीरत्वरूपमिथ्यार्थाध्यवसाय निवृत्तिमात्रात्मा, ननु त्वन्मते तदधिका वस्तुस्वरूपनिवृत्तिरिति जीवन्मुक्तेरजीवन्मुक्तेश्च न विशेष पश्याम । सशरीरत्वप्रतिभास बाधेपि द्विचन्द्रज्ञानादिवत्तदनुवृत्त्या विशेष इति चेन्न,— त्वत्पक्षे बाधितानुवृत्त्यसम्भवस्योक्तत्वात् । प्रत्यक्षविरोधाच्च । निवृत्तमप्यनुवृत्तवद्भातीति चेन्न,— स्वरूपतो नित्यनिवृत्तस्य प्रतिभासमात्राधीनसिद्धितया भिमतस्य प्रतिभासानुवृत्तौ निवृत्तिवचनायोगात् । न द्वितीय, बाधादेव, जीवनविरोधाच्च। नच देहादिभेदप्रतिभासात्यन्तनिवृत्ता जीवनन्नाम किमपि । नच सुषुप्तवदसौ जीवन्मुक्तो निवृत्तप्रतिभास एव प्राणिति, तथासति यथापूर्वं प्रवृत्तिविरोधात् । अत एव न तृतीय ।

---

शरीरसम्बन्धस्यैव जीवनत्वादिति भाव । मुक्त्योरविशेषपक्षे दूषणान्तरमाह अजीवतोऽपिही ति । मुक्तिसामान्यस्य सिद्धे हि जीवन्मुक्तिरिति विशेषो वाच्य, अत शरीरनिवृत्तिस्सामान्यमिति वाच्यम्, ततश्च परममुक्तौ प्रतिभासनिवृत्त्यतिरेकेण शरीरनिवृत्त्यभावात् जीवन्मुक्तावपि प्रतिभासनिवृत्तिर्वाच्या, ततश्चोभयोरविशेष इत्यर्थ । मिथ्यार्थाध्यवसाय - मिथ्याभूतस्यार्थस्याध्यवसाय । मिथ्यार्थतत्प्रतिभासनिवृत्त्योस्समव्याप्तत्व ननुत्वन्मत इत्यादिना विवक्षितम् । सशरीरत्वेति । बाधात् प्रतिभासोऽपि विषयेण सहैव निवृत्त, तथापि प्रतिभासान्तरोत्पत्त्या प्रतिभासानुवृत्तिरुच्यते, अप्रामाण्याध्यवसायलक्षणबाधे सत्यपि द्विचन्द्रज्ञानानुवृत्तिवदित्यर्थ । त्वत्पक्ष इति । अनुवृत्तिहेतुभूतदोषस्यापि मिथ्यात्वात्सहैव निवृत्तेरित्यर्थ । प्रत्यक्षविरोधाच्चे ति । नाद्य इत्यनेनान्वय । बाधादेवे ति । आद्यस्योक्तत्वात् प्रत्यक्षविरोधादित्यर्थ । नचे ति । जीवनस्य तद्व्याप्तत्वादिति भाव । किमपि देहसम्बन्धो वा प्राणसम्बन्धो वेत्यर्थ । यथे ति । सुषुप्तदेवेति भाव । अत एवे ति

ननु यत्किञ्चित्प्रवृत्तिशून्यः कश्चिदद्वैतनिष्ठः पश्याम शृणुमो वा । प्रतिष्ठिताद्वैतविज्ञानैरेवाहि भवत्सिद्धान्तः ग्रन्थाः शतानि निर्मितानि । नापि चतुर्थ , जातिवर्णाश्रमाद्युपाधिकाना विधिनिषेधाना ब्रह्मविदोऽप्यनुवर्तनीयत्वस्य " नाविरतो दुश्चरितात् " " नियतस्य तु सन्न्यास कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामस परिकीर्तित । " इत्यादिभिस्सिद्धत्वात् । अलेपकमतभङ्गश्चास्य प्रपञ्चो ग्राह्य । अथ मन्यसे अबुद्धिपूर्वकेषु न लेप इति, अस्त्वेव, तथापि नासौ मुक्त , बुद्धिपूर्वे प्रारब्धेश्च बन्धानुवृत्ते । एतावन्मात्रजीवन्मुक्तेरश्लेषश्रुतिवशेनास्माभिरपीष्यमाणत्वात् । अत एव न पञ्चम , ग्रामादिके कर्मभि ब्रह्मविदा फलारम्भानभ्युपगमात् । बुद्धिपूर्वे प्रारब्धेश्च फलस्य प्रत्यक्षादिसिद्धस्य दुरपह्नवत्वात् । अनिर्वचनीयत्वादिमात्रेण तदपह्नवे तत्त्वज्ञानात्प्रागपि वस्तुतो मुक्तत्वेन जीवन्मुक्तिपर्वकल्पनानुपपत्ते । नापि षष्ठ , अन्यस्यापि निवृत्ति जीवनविरोधिनी नवा ? आद्ये विरोधादेव जीवन्मुक्त्यसम्भव । द्वितीयेपि जीवनाविनाभूत दु खादेरेवावर्जनीयत्वान्न मुक्त्युपपत्ति । अन्ततो अविद्याशेषमन्तरेण जीवनानुपपत्ति । तच्छेषेच मुक्त्यनुपपत्ति ।

---

प्रत्यक्षविरोधादेव । तद्विवृणोति नचे ति । नापी ति । अस्मिन् कल्पे अभ्याहृतस्य निवृत्तिपदस्यानुत्पत्तौ तात्पर्यम् । प्रत्यक्षत सिद्धस्यापि परमार्थतो भाव एव मुक्तिरित्याह अनिर्वचनीयत्वादी ति । नमुक्त्युपपत्ति रिति । दु खविरोधिन एव मुक्तित्व युक्तम् , न तत्सहभूतस्ये ति भाव । तच्छेषेचे ति ।

एतेनेद निरस्तम् , यदाह नवीन — प्राथमिकसाक्षात्कारात् सञ्चितस्याप्यादानाशानाशाविनाश , प्रारब्धकर्मोपादानाशानाशस्य प्रारब्धकर्मणा प्रतिबन्धात् तदा नाश , किन्तु भोगेन प्रारब्धनाशे सत्येव, यथाच व्युत्प

त्रिमतो वेदान्ताध्ययनमात्रजन्यात् साक्षात्कारादविद्यानिवृत्तौ अपि शरीराद्यापि विपरीतवासना प्रतिबन्धिका तथा अज्ञानकार्यमपि प्रारब्धकर्माविद्यानुवृत्तौ प्रतिबन्धकम्, बिम्बसाक्षात्कारेऽप्युपाधिना प्रतिबन्धात् प्रतिबिम्बभ्रमानिवृत्तिवदज्ञाननिवृत्तिरपि ब्रह्मसाक्षात्कारेऽपि युज्यते; देहस्थापकप्रारब्धकर्मणेवाश्रमेधर्म्य निःश्रेयसस्यापि शुद्धेनापि कर्मणा प्रतिबन्धोऽपि न विरुद्धः. शुकादीनां विदुषामपि शरीरश्रवणानुपपत्त्या प्रारब्धकर्मणो ज्ञानप्रतिबन्धकत्वकल्पनायात्र प्रमाणाभावः शङ्कनीयः, प्रारब्धकर्मक्षयानन्तरमुत्पन्नवृत्त्यानुवृत्तस्याविद्यालेशस्य निवृत्तिः; यद्वा प्राथमिकसाक्षात्कारादावरणशक्तिमदज्ञानांशनिवृत्तिः, प्रतिबन्धनिवृत्त्यनन्तरं तेनैव निवृत्तावरणचैतन्येन विक्षेपशक्तिमदज्ञानांशस्यापि निवृत्तिः; तावत्पर्यन्तं विक्षेपानुवृत्तेः जीवन्मुक्तिः; नन्वेवं घटाद्यवच्छिन्नचैतन्यस्यापि सकृदुत्पन्नवृत्तिनिवृत्तस्य पश्चादप्यनवस्थानसम्भवात् कालान्तरे वृत्त्यन्तरं विनापि तदज्ञाननिवृत्तिः स्यादिति चेन्न;— प्राथमिकवृत्तेर्घटमात्रविषयत्वेऽपि कालान्तरीयघटाविषयत्वात् सर्वात्मना तदनभिव्यञ्जकतया तदर्थं वृत्त्यन्तरापेक्षणात्, अज्ञानान्तरेण पुनरावृतत्वादपि तस्यापेक्षितत्वाच्च; वेदान्तानां सर्वात्मना ब्रह्मबोधनसमर्थत्वात् तज्जनितसाक्षात्कारः सर्वात्मनाभिव्यञ्जकः, मानाभावाच्च नाज्ञानान्तरमिति वैषम्यम्; प्राथमिकवृत्त्यभिव्यक्तचैतन्यस्य कालान्तरे अज्ञाननिवर्तकत्वे मानं तु 'तस्याभिध्यानादि' ति श्रुतिः; तस्य— शास्त्रयुक्तिभ्यां निश्चितस्य, अभिध्यानात् - सजातीयप्रत्ययप्रवाहरूपात्, प्रपञ्चे पारमार्थिकत्वभ्रमप्रयोजकविपरीतवासनाहेतुमायांशस्य निवृत्तिः, ततः, युज्यतेऽनेनेति योजनम् - अपरभावनाद्यसहकृतसाक्षात्कारः, तस्मात्, प्रपञ्चे व्यावहारिकत्वभ्रमप्रयोजकानारम्भमायांशस्य, ततस्तद्भावः - अभिव्यक्तब्रह्मात्मनावस्थानम्, तस्मादन्ते प्रारब्धकर्मक्षये बाधितानुवृत्त्या प्रतिभाससमानप्रपञ्चहेतुमायांशस्य, इत्येवं तदा सर्वमायानिवृत्तिरिति श्रुत्यर्थः । तदुक्तं- 'शास्त्रेण नश्येत् परमार्थरूपं कार्यक्षमं नश्यति चापरोक्ष्यात् । प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥' इति ।

किञ्च सञ्चितं प्रारब्धं वा कर्म नैतत्पुरुषीयाज्ञानकल्पितम्, अतो नैतत्पुरुषीयाज्ञाननिवर्त्यं तादृशाज्ञानम्, तस्मात् ज्ञानाग्निरित्यादिप्रमाणबलात् कर्मणा

मेव तत्वज्ञानेन निवृत्तिर्युक्ता, प्रमाणनलावधार्यज्ञानस्याज्ञानेतरानिवर्तकत्वादद्श नात् कर्मनिवर्तकत्वं न सम्भवतीयुक्तौ तनैवादर्शनेन ज्ञानेनाज्ञाननिवृत्तौ कर्मण प्रतिबन्धकत्वमपि न स्यात्।

ननु व्यावहारिकार्थकल्पनाऽनवच्छिन्नब्रह्मकर्तृकैव, अनवच्छिन्नस्यावच्छिन्नापेक्षया भेदाभावात् एतत्पुरुषीयतत्वज्ञानमपि ब्रह्मण एवेति तेन तत्वज्ञानेन ब्रह्मकर्तृककल्पनोपादानाज्ञाननिवृत्तिर्युक्ता, नचैव सति पुरुषद्वयस्य युगपच्छुक्तिरजताध्यासे तयोरन्यतरस्य शुक्तिसाक्षात्कारेण तदध्यासवत् इतराध्यासस्यापि निवृत्त्यापात, सर्वब्रह्मणोभिन्नतया अध्यासतत्वज्ञानयोस्तदीयत्वादिति वाच्यम्, प्रातिभासिकाध्यासस्यावच्छिन्नब्रह्मकर्तृकतया तदन्त करणावच्छिन्नकर्तृकाध्यासस्य तदीयतत्वज्ञाननिवर्तकत्वात्, अनवच्छिन्नब्रह्मकर्तृकाध्यासस्यत्ववच्छिन्नसम्बन्धि तत्वज्ञानेन निवृत्तिर्युक्तैव, ब्रह्मणस्तदभिन्नतया तत्वज्ञानस्यापि तदीयत्वात्, इति चेत्,– तथा सति एकस्य तत्वज्ञानादेव युगपत्सर्वेषा मुक्तिप्रसङ्गात्।

इष्टमेवेदम्, नचैव शुकादिमुक्तिवचनविरोध, तद्वचनस्य जीवन्मुक्तिविषयत्वात् इतिचेत्? तर्हि जीवन्मुक्तिरेव सर्वेषा युगपत्स्यात्, एतत्पुरुषीयसञ्चितकर्मादिवत् सर्वपुरुषीयसञ्चितकर्मादेर्ब्रह्मसम्बन्धित्वाविशेषात्।

किञ्चानादौ ससारे जीवन्मुक्तपरम्पराया अप्यनादित्वात् एतावत्काल प्रारब्धकर्म तैरनुभूत इत परञ्च मुक्तिपर्यन्त तैश्शुकादिभिश्च प्रारब्धकर्मानुभोक्ष्यत इति महदिदं साहसम् इत पर मुक्तिरस्मिन्काल इत्यनिर्णयात् शुकादीनामपि सुबहुसहस्रब्रह्मकल्पेषु प्रारब्धानुभवप्रसङ्गात्। नच कर्मणामेतदज्ञानोपादानत्वमेवास्त्विति वाच्यम्, तथासति शुक्तिरजतादिवदनन्यानुभाव्यत्वप्रसङ्गात्। कर्मसाध्यादृष्टस्य त प्रत्यापरोक्ष्यप्रसङ्गाच। अतस्तत्वज्ञानेन कर्मोपादानाज्ञाननिवृत्तिर्युक्ता। अतएव न प्रारब्धकर्मण प्रतिबन्धकत्वकल्पनापि युक्तिमती। प्रारब्धकर्मभि प्रतिबन्धे च प्रथमस्त्दृष्टान्त सोऽनुपपन्न, अध्ययनमात्रजन्यस्य तत्वज्ञानस्य विरोधिवाक्यश्रवणेनानिर्धारणरूपतया तस्याविद्यानिवर्तौ सामर्थ्याभावात् तत्र प्रतिबन्धाकल्पनात्। द्वितीयदृष्टान्तोप्यनुपपन्न, जलाद्युपाधिविम्बितवशात्प्रतिबिम्बनया तन्नोपाधिना प्रतिबन्धाभावात् कर्मकृत र

ज्ञाननिवर्त्यमिति कथं तस्य प्रतिबन्धकता । ननु अज्ञानस्य ज्ञानेन निवृत्तौ सत्यां तथैवाज्ञाननिवृत्त्या अज्ञानोपादानकर्मनिवृत्तिरिति चेत् ? एवं [कर्म] भ्रमकल्पनायां मानाभावात् । रजतज्ञानमुपरतमिति प्रतीतेः त्वया रजतज्ञानस्य साक्षिरूपतया तस्योत्पत्त्यभावेन रजतविषयत्वाङ्गीकारातुल्यन्यायेन शुक्तिदर्शनेन रजतज्ञानं निवृत्तमिति प्रतीतेरेव ज्ञानेनाज्ञानकार्यनिवृत्तौ मानाभावात् । ननु निवर्त्यं यदि स्वनिवृत्तिप्रतिबन्धकम् तथाहि दोषः, तत्सत्त्वे निवृत्तेरसम्भवात्, तन्निवृत्तौ पुनर्निवृत्त्यसम्भवेन निवर्तकत्वाभिमतस्य तन्निवर्तकत्वाभावप्रसङ्गात्, निवर्त्यस्य निवर्त्यान्तरनिवृत्तिप्रतिबन्धकत्वे को दोषः इति चेन्,– एतन्निवृत्ते प्रतिबन्धकान्तरकल्पनापत्तेः, नचेष्टापत्तिः, तस्यैवाज्ञाननिवृत्तिप्रतिबन्धकत्व कल्पनौचित्यात् ।

किञ्चाद्वितज्ञानाधीनाज्ञाननिवृत्तिर्ब्रह्मस्वरूपैव, तदधीना कार्यनिवृत्तिः का नाम ? अश्वमेधदृष्टान्तोऽप्यनुपपन्नः, अश्वमेधात् प्रारब्धस्य प्रबलता का नाम ? प्रारब्धत्वादेव प्राबल्यात् । तथापि वैदिककर्मणा फलजनकत्वावश्यम्भावाविशेषात्, प्रारब्धस्य मध्ये विरामहेत्वभावाच्च प्रारब्धभोगानन्तरमेव तद्देहवियोगसाध्य कर्मफलभोगो युक्तः, अतः तत्र प्रारब्धेन प्रतिबन्धकल्पना युज्यते, अत्र तथा कल्पकं न किञ्चित् पश्यामः, प्रत्युत ज्ञाननिवर्त्यत्वादप्रतिबन्धकल्पना युज्यते । ननु विदुषः शरीरधारणानुपपत्तिः कल्पिका, तच्छरीरस्य तदज्ञानो पादानकत्वाभावेन तदीयतत्त्वज्ञानानिवर्त्यत्वात् । शरीरस्य तदज्ञानकार्यत्वे शुक्तिरजतवदसाधारण्यप्रसङ्गः, मासासृगाद्यान्तरविनाशप्रतिपत्तिप्रसङ्गः, इन्द्रि- यापरोक्षप्रसङ्गः, सुषुप्त्यादौ शरीरानुपलम्भप्रसङ्गश्च । तदज्ञानकार्यत्वे हि तत्कर्तृकाध्यासस्स्यात् । सुषुप्त्यादौ च न देहाद्यध्याससम्भवः, तद्दशायां स्वरूप मात्रानुभवस्य त्वयैवाभिधानात् । ननु शरीरमेतदज्ञानोपादानकं माभूत्, न तत्र प्रतिबन्धः कल्प्यते, किन्तु शरीरस्थितये प्रारब्धानुवृत्त्यर्थं प्रारब्धोपादाना ज्ञाननिवृत्तेरेवेति चेत् ? न, प्रारब्धस्याप्येतदज्ञानकार्यत्वाभावस्योक्तत्वात् ।

किञ्च सञ्चितकर्मोपादानाज्ञाननिवृत्तिः कुतोऽङ्गीक्रियते ? तत्त्वज्ञानस्योत्पन्न त्वादिति चेत् ? तर्हि प्रारब्धोपादानाज्ञानमपि निवर्त्येत । तन्नोपपद्यते, शरी

रानुवृत्तेरिति चेत्? तर्हि सञ्चितमपि न निवर्त्येत। मुक्तिश्रवणात्तन्निवृत्तिरिति चेत्? तर्हि कृत्स्नाज्ञाननिवृत्तिप्रसङ्गः; किञ्चिदज्ञाननिवृत्तेस्संसारदशासाधारणत्वात्। बह्वज्ञानं निवृत्तम्, अल्पीय एव प्रारब्धमिति चेत्? तर्हि किञ्चिदूना मुक्तिरित्यौपचारिकत्वमेव समर्थितं स्यात्। मुख्यत्वव्यपदेशस्तु स्वैराभिलापनिबन्धनो युष्माकमिति वयं पश्यामः।

वृत्त्यन्तरेण प्रारब्धकर्माविद्यानिवृत्तिरित्यप्यनुपपन्नम्। अहमभ्यासानुवृत्तौ न मुक्तिः, तथा सति संसार एव मुक्तिरिति सुवचनत्वात्। अहमभ्यासनिवृत्तौ तु न वृत्त्युत्पत्तिः, उत्पन्नापि वा नैतदीया। प्राथमिकसाक्षात्कारादावरणाज्ञाननिवृत्तिरित्यप्यनुपपन्नम्; एवमज्ञभेदकल्पनायां विक्षेपकस्याज्ञानस्य एव मानाभावप्रसङ्गात्। इदं न जानामीत्यनुभवो हि अज्ञाने मानम्, तत्वतस्तत्र इदं नेच्छामि इदं च द्वेष्मीत्यादिवत् अभावप्रतियोगिभूतज्ञानगततया सकर्मकत्वस्य भासमानत्वेऽपि सकर्मकत्वं भावरूपाज्ञानगततया भासत इति त्वया कल्प्यते, एवं कल्पनेऽपि आवारकाज्ञानस्यैव सकर्मकतया भानं स्यात्, न तु विक्षेपकस्यापि, उभयोस्सकर्मकत्वे मानाभावात्। निरुक्तानुभवधर्मिकेणापि चारितार्थ्यो नोभयं विषयीकरोति, गौरवात्; तन्नावरणदशावच्छेदेन इदं नाशासिषमिति प्रतीयमानत्वात्, जलाद्युपाधिस्थले निवृत्ते आवरणे विक्षेपकाज्ञानस्य सत्वेऽपि न जानामीति प्रतीतेरदर्शनाच्च निरुक्तानुभवस्यावारकाज्ञानविषयत्वमेव युक्तम्, भूतले घटादिजनकस्य दण्डादेर्भूतलविषयत्ववत्। शुक्त्यादौ विक्षेपकस्यापि शुक्त्यादिविषयत्वाभावात् न तस्याज्ञानत्वे किञ्चिन्मानं पश्याम.। विक्षेपकस्यापि सविषयत्वे सोपाधिकभ्रमस्थले जानामि न जानामीति च प्रतीतिप्रसङ्गः।

किञ्च - ज्ञानविरोधितया ह्यज्ञानं भास्यते, आवारकाज्ञानमेव च ज्ञानविरोधि, न तु विक्षेपकम्, सोपाधिकभ्रमे ज्ञानविरोधादर्शनात्; रजतादिभ्रमेऽपि शुक्तिज्ञानेन तद्विरोध्यावरणे निवृत्ते तत एव तन्निमित्तविक्षेपाभावः, न तु विक्षेपकस्य ज्ञानेन निवृत्तत्वात्, विक्षेपकस्य ह्युभयनिमित्तं आवरणम्। उपादानसहकारिभूतम्। निमित्तनिवृत्त्यापि कार्यनिवृत्तिः युज्यत एव, विद्ते

प्यन्तःकरणे इन्द्रियसन्निकर्षरूपनिमित्तनिवृत्त्या वृत्तिनिवृत्तेः । एवं च घटस्यैवाज्ञानस्याच्छादकविक्षेपकत्वम्, शुक्तिरजतादिस्थले आवरणनिवृत्तिरज्ञाननिवृत्तिर्वा, सोपाधिकस्थले विक्षेपानुवृत्तेरावरणस्यैव निवृत्तिः, इति वाच्यम्, ततश्चात्रापि विक्षेपानुवृत्तेरावरणनिवृत्तिरेव तत्त्वज्ञानेन जातेति अज्ञाननिवृत्तेरभावात् कथं तद्रूपामुक्तिः? तदभावे कथं तद्विदो जीवन्मुक्तिः ?

पूर्ववृत्त्यभिव्यक्तमेव चैतन्यमनुवृत्ताज्ञानांशनिवर्तकमिति चाप्यनुपपन्नम्, वृत्तिमनपेक्ष्य निवर्तकत्वे तत एव सर्वेषामप्यज्ञाननिवृत्तिप्रसङ्गात्, चैतन्यस्य तदीयत्वतदभावयोरविशेषात्, स्वरूपाभेदात्तदीयत्व तदीयवृत्त्यवच्छेदाभावात्तदभावश्चैव हि तुल्ये । तदीयवृत्तिनिवृत्ताकारकत्वमेव तदीयत्वमिति चेन्न, सुखदुःखादिप्रकाशस्य तदीयत्वाभावप्रसङ्गात् । नन्वन्तःकरणावच्छिन्नचैतन्यस्यैवानया चरमवृत्त्यावच्छेदात् तस्यैव चैतन्यस्यैतदीयत्वमिति नोक्तातिप्रसङ्ग इति चेन्न; तथा सति तत्त्वमस्यादिवाक्यस्य परिच्छिन्नब्रह्मबोधकतया पूर्णाखण्डब्रह्मबोधकत्वाभावप्रसङ्गात्, एतदन्तःकरणानवच्छिन्नब्रह्माकाराकारकाविद्यानिवृत्त्यभावप्रसङ्गात्; एकदेशस्फुरणमात्रेण सर्वांशेऽप्यविद्यानिवृत्तौ घटावच्छिन्नचैतन्यस्फुरणेऽपि सर्वस्मिन्नपि चैतन्यांशे अविद्यानिवृत्तिप्रसङ्गात्, एकदेशावारकाज्ञाननिवृत्तिमात्रेण जीवन्मुक्त्युक्तावतिप्रसङ्गाच्च ।

किञ्चैवं सकृद्घटवृत्त्यभिव्यक्तचैतन्यं कालान्तरे घटविक्षेपकाज्ञानान्तरं निवर्तयेत्, प्रागभिव्यक्तेः कालान्तरीयत्वागोचरतायामपि घटगोचरत्वात्; अज्ञाननिवृत्तौ सर्वात्मनाभिव्यक्त्यपेक्षायां स्पर्शगन्धाद्यनभिव्यक्तेश्चाभ्युपगत्या अज्ञाननिवृत्तिर्न स्यात्, एवमन्यत्रापीत्यज्ञाननिवृत्तिरेव क्वापि न स्यात् । अज्ञानान्तरेणावरणमप्यसङ्गतम्, विरोधिसन्निधाने तदयोगात् । अन्यथा ब्रह्मणोऽपि पुनरावरणप्रसङ्गात्, वेदान्तानां सर्वात्मना ब्रह्मबोधनसमर्थत्वादिति निरर्थकोऽयं तव प्रलापः ।

ब्रह्मणि मानाभावाच्चाज्ञानान्तरमित्यनुपपन्नम्, विक्षेपकस्याप्यभावप्रसङ्गात् । न च देहानुवृत्तिर्विक्षेपकाज्ञानसत्त्वे मानम्, देहस्यैतत्पुरुषीयाज्ञानकार्यत्वाभावस्योक्तत्वात् ।

ईश्वरानताराणामिव ब्रह्मविदामपि जीवतान्दु खाद्यभिनयमात्रमिति चेत् ?

'तस्याभि यानादि' ति व्याख्यान चा सङ्गतम्, ज्ञानस्याज्ञानतया माया निवर्त्तकत्वासम्भवात्। ब्रह्मसत्ताप्रतीत्यतिरेकेण पारमार्थिकसत्वप्रतीति व्यावहारिकसत्वप्रतीतिरिति प्रतीतिद्वयाभावात्। तत्त्वभावपदस्याभिव्यक्तब्रह्मात्मनावस्थाने व्युत्पत्त्यभावात्। बाधितानुवृत्तिशब्दस्य वृषलोद्वाहमन्त्रतुल्यत्वात्। विक्षेप काशस्य त्वयैवाबाधितत्वोक्ते तस्यैतदीयत्वाभावेन एतदीयज्ञाननिवर्त्यत्वासम्भवादभिध्यानादीना समानविषयतया भिन्नविषयज्ञानान्निवर्त्तकत्वासम्भवात्, निवृत्तिभयाप्रतीते। निवृत्तिपदस्याऽऽवृत्त्यान्वये वाक्यभेदप्रसङ्गात्। विश्वस्या अपि मायाया अन्ते निवृत्तिप्रतीते विश्वगोचरमायानिवृत्तिरिति षष्ठीसमासाङ्गीकारे निपादस्थपत्यधिकरणविरोधात्। तत्वभावात् श्रवणरूपतत्वमानात्, तत्सिद्धात्, योजनात् युक्तित, स्थिरीकरणरूपान्मननात्, तत्साध्यात् भूयो भूयस्तस्याभिध्यानाच, प्रारब्धकर्मावसाने कृत्स्नस्यापि प्रारब्धेतरकर्मण तदधीन भगवद्विचिन्तनसङ्कल्पस्य वा निवृत्तिरित्येकवाक्यतयान्वयप्रतीते आकाङ्क्षानुसारा दुत्पत्तिक्रम परित्यज्यावरोहक्रमेण निर्देशोपपत्ते। भूय पद श्रवणादि नयेणापि चा चेत्।

नन्वभि यानान्मायानिवृत्ति, तत्त्वभावान्मायानिवृत्ति, एव विश्वमायानिवृत्ति इत्येव निवृत्तिपदावृत्त्या भेदेन नान्वय, किन्त्वभिध्यायोगतत्त्वभावैर्विश्वमायानिवृत्तिरिति चत्? एव तर्हि इद मायाया निवृत्तित्रये न मान स्यात्, अभिध्यानान्मायानिवृत्तिर्भवति, तत्त्वभावादपि भूयो मायानिवृत्तिर्भवतीत्येवमर्थे हि निवृत्तित्रय शङ्क्येतापि, एकवाक्यतया तु निवृत्तित्रयस्य न प्रसङ्ग। नच साधनत्रयकीर्त्तनान्निवृत्तित्रयसिद्धि, तस्य तदसाधकत्वात् गाभायार भयाभ्यामकार्यान्वयोपपत्तेरुपपादितत्वात्।

ननु अस्तु पञ्चम पक्ष, नच मत्य गादिविरोध, परकीयप्रत्यक्षे विप्रतिपत्त, दु खप्रत्यक्षरूपकव्यापाराणाञ्चाभिनयनमात्रत्वादित्याशयेन शङ्क ईश्वरे ति। मुखदु खानुत्पाद इति पञ्चमपक्षे स्वप्रयोजनाभिरहस्य सिद्धान्

हन्त स्वानुभवविरुद्धं धार्ष्ट्यम् । शक्यञ्चेदं मैवंवक्तुम् । नच स्वपर प्रयोजनविरहे मन्दोपि कश्चित्प्रवर्तेत । नच मुक्तस्य लीलाप्रसङ्गमप्यनु मन्यसे, जक्षदादिवाचामेव भक्षणात् । अतो जीवतिचेन्न मुक्तः. मुक्तश्चे-न्नजीवतीति न कथञ्चिदपि जीवन्मुक्तिस्सम्भवतीति ।

यत्तु चक्रभ्रमादिदृष्टान्तेनानुवृत्तस्य स्वयमेव विलय इति, तदप्यहेतुकविनाशाद्यनुपपत्त्या बाधितानुवृत्तिभङ्गे निरस्तम् ।

यत्पुनरन्येपोपदेशो जीवन्मुक्तिमन्तरेण न घटत इति, तदपि प्रामादिकविषयत्वस्थापनादेव परिहृतम् । "तस्य कार्यं न विद्यत" इत्यादिसर्वोपायानुष्ठाननिवृत्तिवादाश्च मुक्तविषयतया समाध्यवस्था विषयतया च यथासम्भवं व्यवस्थाप्याः । अन्यथा ब्रह्मविदामेव यावज्जीवानुष्ठानस्य निषिद्धपरिहारस्य च श्रुतिस्मृतिसिद्धस्य बाध प्रसङ्गात् ।

किञ्च निर्गुणविषयत्वाभिमतसद्विद्यानिष्ठस्यैव "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातमात्रमपेक्षते मोक्ष इति विलम्बावधिमुपदिशन्ती श्रुतिरेव जीवन्मुक्तिं वारयति । तथा "नह वै सशरीरस्य सत प्रियाप्रिययोरपहतिरस्ति, अ-शरीरं वा व सन्तं न प्रियाप्रिये स्पृशत" इति श्रुतिमप्यधीमहे ।

---

स्वप्रयोजनविरहानुवादः । भक्षणादि ति । अन्यपरत्वोक्तेरित्यर्थः । यद्वा अस्यस्य निवृत्तिर्जीवनाविरोधिन्येव, नचजीवनाविनाभूतदुःखादिप्रसङ्गः, जीव-नस्य दुःखाद्यप्रयोजकत्वात् ; नापि प्रत्यक्षविरोधः. अभिनयमानत्वादिति

अत्राशरीरत्वञ्च कर्माधीनशरीरवैधुर्यमित्यन्यत्र स्थापितम् । आपस्तम्बेनोपासनगत्यादिविषयबहुविधाध्यात्मशास्त्रार्थतत्वपारदृश्वना निराकृतेयं जीवन्मुक्तिः— "वेदानिमं लोकममुंच परित्यज्यात्मान मन्विच्छेत्, बुद्धे क्षेमप्रापणम्, तच्छास्त्रैर्विप्रतिषिद्धम्, बुद्धे चेत् क्षेम प्रापणमिहैव न दुःखमुपलभेत, एतेन परं व्याख्यात" मिति । एतेन- निर्विशेषवादिनां जीवन्मुक्तिनिराकरणेन, तत्कल्पितं निराकरणीयं सर्वं तुल्यन्यायतया निराकृतमित्यर्थः । अतः प्रत्यक्षश्रुतिस्मृत्यादिविरोधात्, स्वैराभिलापिभिः स्वैरजनसङ्ग्रहश्रद्धाल्यामुग्धैर्वा कल्पितेयं जीवन्मुक्तिरिति प्रत्यक्षीकृतस्वदु खैर्मुमुक्षुभिरुपेक्षणीयेति ।

इति शतदूषण्यां जीवन्मुक्तिभङ्ग

एकत्रिंशोवादः ।



---

पञ्चमं एव शङ्कते ईश्वरे ति । नन्वीश्वरस्यापि प्रियाप्रियस्पर्शप्रसङ्ग इत्यत्राह अत्राशरीरत्वमि ति । तुल्यन्यायतामाह अत इति ॥

इति वाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध

*महाचार्यापरनामधेयेन रामानुजदासेन विरचितायाः*

शतदूषणीव्याख्याया चण्डमारुताख्याया

जीवन्मुक्तिभङ्ग

एकत्रिंशस्कन्धः ।



श्रीरस्तु।

अथ द्वात्रिंशोपाठः।

यदधिकरणमेतद्यद्विधेयं यदर्थं
यत उदितमपीति प्रोच्यते यद्धि विश्वम्।
तमजमजडमन्तर्यामिणं सर्वजन्तोः
निरवधिमहिमानं देवमाराधयामः ॥

यदाहुः—य इह निर्विशेषचिन्मात्रब्रह्माविद्याविवर्तरूपाणां तत्तत्पदार्थानां तत्त्वोपदेशपरेषु वाक्येषु ब्रह्मणा सह सामानाधिकरण्यनिर्देशः स बाधार्थ एव, अर्थान्तरासम्भवात् तस्यैव विवक्षितत्वात्। तथाहि—अन्धकारादिषु स्थाणुमविशिष्टमवलोक्य यश्चोर इति मुह्यति तं प्रति तत्त्वदर्शी कश्चिद्वदति त्वद्दृष्टश्चोरः स्थाणुरिति। तस्य कोऽर्थः? चोरत्वाभिमानविषयः ते न चोर इति। नहि कल्पान्तरादिष्वपि चोरस्यैव स्थाणुत्वं स्थाणोर्वा चोरत्वं प्रतीतिमधिरोहेत्। नचासौ व्याहतं भाषते। नच स्थाणुत्वं तदानीमुपदेष्टव्यम्,

---

यदधिकरणमिति। यत् ब्रह्म अधिकरणत्वादिभिर्हेतुभिर्विश्ववाचिपदैः प्रोच्यते तदेनमाराधयाम इत्यर्थः। पूर्वार्धेनोपचारनिमित्तान्युच्यन्ते। तत्र विधेयमिति राजादिवन्नियाम्यत्वं विवक्षितम्। अन्तर्यामिणमित्यनेन मुख्यवृत्तिनिबन्धनं शरीरित्वं विवक्षितम्। अजमित्यनेन प्रकृतिवत् स्वरूपविकाराभावो विवक्षितः। अजडमित्यनेन जडांश एव बाधार्थसामानाधिकरण्यं चिदंशे तादात्म्यमिति 'सर्वं खल्वि'त्यादौ सामानाधिकरण्यवैरूप्यं स्यादिति सूचितम्। निरवधिमहिमानमिति हेयसंसर्गप्रयुक्तदोषाभावो विवक्षितः। 'सर्वं खल्वि'ति बुद्धिस्थश्रुतिगतब्रह्मपदापेक्षया यद्धीति नपुंसकनिर्देशः। य इहेति। ब्रह्मणो निर्विशेषचिन्मात्रत्वात् सर्वे पदार्थाः तदविद्याविवर्तभूताः, अतस्तेषामधिष्ठानभूतब्रह्मणा सामानाधिकरण्यनिर्देशो बाधार्थ इत्यर्थः। तत्त्वोपदेशपरेष्विति 'मनो ब्रह्मेत्युपासीते'त्यादिव्यावृत्तिः। ते चोरत्वाभिमानविषय इत्यन्वयः। ननु चोरत्वाभिमानविषये स्थाणुत्वविधानान्न बाधार्थतेत्यत आह नच स्थाणुत्वमिति।

अनपेक्षितत्वाच्छ्रोतु । अतोवसीयते चोरत्वबाधार्थ एवायमुपदेश इति। तत्रादिहापि 'इदं सर्वं यदयमात्मा' 'पुरुष एवेदं सर्वम्' 'जगच्च स' 'ज्योतींषि विष्णुर्भुवनानि विष्णु' रित्यादिषु सत्यासत्यसामानाधिकरण्येषु स्वरूपस्यासम्भवादसत्यांशबाध एवाभिमत । नच स्थाणावारोपितचोरबाधेपि चोरमात्रस्थितिवत् ब्रह्माध्यस्तप्रपञ्चबाधेपि प्रपञ्च स्वरूपस्थितिश्शङ्क्या, इदं सर्वमिति कृत्स्नानुवादेन बाधेऽवशिष्टा सम्भवात् । अतश्चोरभयनिवृत्त्यर्थं स्थाणुत्वोपदेशेन चोरत्वबाधवत् 'द्वितीयाद्वै भयं भवती' त्यादिप्रतिपन्नसमस्तसांसारिकभयनिवृत्तये सर्वस्यात्मत्वोपदेशेन सर्वस्य बाध एव विवक्षित इति ।

अत्र वदाम — किमिह प्रपञ्चमिथ्यात्वं सिद्धं कृत्वा सामानाधिकरण्यस्य तद्बाधपरता स्वीक्रियते, उत सामानाधिकरण्यशक्त्यैव प्रपञ्चमिथ्यात्वपर्यवसितो बाधस्साध्य इति ? नाद्य, विश्वलुण्टाकवैयात्यवात्यावेगस्य सर्वत प्रशमितत्वात् । अस्तु वा प्रपञ्चमिथ्यात्वम्, तथाप्यत्र न बाधार्थतैवेति निश्चेतु शक्यम्, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्यत्र शान्त्यर्थं ब्रह्मात्मकसर्वानुसन्धानविधानस्य भवद्भिर्व्याख्यातत्वात्, तस्यैवच लक्षणादिदोषदवीयस शास्त्रार्थस्यान्यत्रापि नेतु शक्यत्वात् । नच विधिसन्निधानासन्निधानाभ्यां विशेष, सर्वत्र प्रकरणे व्यवहित-

---

अनपेक्षितत्वाच्छ्रोतु रिति । चारभ्रमजन्यभयनिवृत्तये चोरबुद्धिमात्र निवर्त्यमित्यर्थ । अनिर्वचनीयचोरबाधेपि तन्निवृत्तिस्सिद्ध्यतीत्याह अत इति । तल्लिङ्गोपदेशादपि तदुपदेशो वर लाघवादिति भाव । सत्ये ति । सत्यासत्ययोरन्योन्य सामानाधिकरण्येष्वित्यर्थ । इदं सर्वं मिति । अनिर्वचनीयचोरबाधेपि गृहादौ शयमानस्य चोरस्याबाधात्तत्सिद्धि, इह तु द्वितीयप्रतीतिस्थले सर्वत्र श्रुतिबाधावतारान्न कस्यापि सिद्धिरित्यर्थ । सर्वत्रे ति । प्राकरणिकस्य व्यवहितस्य वा विधेस्सत्त्वादित्यर्थ । कल्पस्त्वनुपपत्तेरसम्भवात्

स्यान्यवहितस्य वा विधे स्थितत्वात् ; अनेकपदलक्षणादिदोषगत परिग्रहाद्विप्रकृष्टविधिसमन्वयमात्रस्वीकारस्य समीचीनत्वात् । तत्र सम्यादिवाक्यप्रस्तावे तदेतत्सर्वमभिप्रेत्याह 'बाधार्थत्वे च सामानाधिकरण्यस्य तत्त्वम्पदयोराधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणाद्वयस्त एव दोषा ।' इति ।

नापि द्वितीय, प्रवृत्तिनिमित्तभेदेनैकार्थ्यपर्यवसानमात्रे सामानाधिकरण्यशक्तिस्थापनात् । प्रवृत्तिनिमित्तयोरेकाश्रयत्वविरोधादत्र सामानाधिकरण्यस्य बाधार्थता स्वीक्रियत इतिचेत्[1] तथापि न सामानाधिकरण्यशक्त्या बाधप्रतीतिः, व्यधिकरणवाक्य इव विरोधादेवार्थान्तरपरत्वे विवक्षिते प्रकृत्यंशेनैव समन्वययोग्ये निमित्ते लक्ष्यमाणे तद्विशिष्टैकार्थविषयत्वात् सामानाधिकरण्यस्य । तथापि

---

सामानाधिकरणस्य बाधे व्युत्पत्ति कल्प्यत इति शङ्कते प्रवृत्तिनिमित्तयोरिति । तथापी ति । मुख्यप्रवृत्तिनिमित्तयोरेकाश्रयत्वविरोधेऽपि न व्युत्पत्त्यन्तर कल्पनीयम्, यथा गङ्गाया घोष इत्यादौ विभक्त्यनुसारेण प्रकृतेरेव लक्षणा कल्प्यते, न तु अन्यत्र सिद्ध आधाराधेयसंसर्गबोधनसामर्थ्यं विहाय वाक्ये शक्त्यन्तर कल्प्यते, तथात्रापि समानविभक्त्यनुरोधेन प्रकृतेर्वृत्त्यन्तरस्वीकारेण क्लृप्तव्युत्पत्तेर्निर्वाहादित्यर्थ । ननु न वयं व्युत्पत्त्यन्तर स्वीकुर्म, किन्तु क्लृप्तव्युत्पत्त्यनुरोधेन प्रकृतेर्बाधलक्षकत्वमित सामानाधिकरण्यस्य बाधार्थतेति शङ्कायां तथापी ति । व्युत्पत्त्यन्तरकल्पनपरेत्यर्थ । तथाप्यन्तर इत्यन्वय । तत्र हेतुरित्यन्त ॥

इति वाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
बाधार्थसामानाधिकरण्यभङ्गो
द्वात्रिंशः स्कन्धः ।

स्थाणुपदस्य चोरपदसामानाधिकरणप्रयोगबलादेव चोरत्वाभावलक्षकत्वस्वीकार इति अन्ततो बाधनिदानमेवात्र सामानाधिकरण्यम्, तद्वत् प्रकृतेपीति चेत्? विरोधपरिहाराय लक्षणास्वीकारेपि राजाराष्ट्रमित्यादाविव लघीयस्येकपदलक्षणापक्षे तिष्ठति न सर्वपदलक्षणादिपरिग्रहो युक्तः। तथाहि - चोरः स्थाणुरित्यत्र चोरपदेन चोरत्वारोपाधिकरणलक्षणा स्थाणुपदेन तु चोरत्वाभावसहचरितस्वार्थेन तल्लक्षणेति सर्वपदलक्षणासिद्धा, द्वयोरपि पदयोर्मुख्यभेदेन प्रवृत्तेर्द्विरूपलक्षणा, तत्र च पदान्तरोपस्थापितधर्माभावस्य पदान्तरेण लक्षणेति विरुद्धधर्मलक्षणा चेति। एतत्सर्वं पूर्वोक्तेन भाष्येण सूचितं 'अधिष्ठानलक्षणा निवृत्तिलक्षणाचेती' ति। गत्यन्तराभावादेव चोरस्थाणुशब्दसमभिव्याहारे स्वीक्रियतान्नाम तथा क्लेशः, नच तत्रापि दृष्टान्ते क्लेश, यश्चोर इति स्यात्स स्थाणुरिति स्थाणुशब्दे लक्षणागन्धाभावात्। अथापि जगच्च स इत्यादिषु गत्यन्तरं लोकवेदप्रसिद्धं दृश्यत एव। प्रयुञ्जते हि नरपतिरेव लोक इति लौकिकाः। स्मारच भगवान्वाल्मीकिः- 'रामभूतं जगदभूद्रामे राज्यं प्रशासती' ति। श्रुतौच 'सराष्ट्रमभवत् सराष्ट्रन्नाभव' दित्यादिप्रयोगास्सन्दृश्यन्ते। अत्र च एकेनैव निमित्तेन एकस्यैव पदस्य पदान्तरोपस्थापितानुगुणार्थलक्षकत्वमेवेति न पूर्वोक्तदोषः। 'इदं सर्व' मिति चेतनाचेतनात्मकसर्वप्रपञ्चनिर्देशेन ब्रह्मत्वोक्तौ चिदशे तादात्म्यमचिदशे बाध इत्यपि वैरूप्यं भवता स्वीकार्यम्। अथैतद्दोषपरिहाराय अचिदंश एव इदं सर्वमिति निर्दिष्ट इति मन्यसे, तदा स्वेच्छामात्रसिद्धस्सङ्कोचक्लेश।

किञ्च जगद्ब्रह्मसामानाधिकरण्ये लक्षणायामप्यस्मदभिमतार्थलाघवमुक्तम्, नचात्र लक्षणेति निगमान्तविदः। अपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपर्यवसानव्युत्पत्ते शरीरस्यच शरीर्य

पृथक्सिद्धेश्शरीरवाचिनां च देवमनुष्यादिशब्दानां शरीरिपर्यन्त प्रयोगस्य लोकवेदयोर्दर्शनात् विश्वस्य चेतनाचेतनात्मकस्याविशेषेण परमात्मशरीरत्वश्रुतेस्तद्वाचिशब्दानां ब्रह्मपर्यवसानोपपत्तौ तन्निबन्धनमेव ब्रह्मसामानाधिकरण्यमिति युक्तमङ्गीकर्तुम्। तथाच सति चेतनाचेतनविषयब्रह्मसामानाधिकरण्यप्रयोगाणामेकस्मिन्वाक्ये वाक्यान्तरेप्येकरूप एव निर्वाहः, सर्वश्रुत्यविरोधश्च सिद्धयेत्।

किञ्च - यत्र यत्र जगद्ब्रह्मणोस्सामानाधिकरण्यं दृश्यते तत्र तत्र प्रायशस्तद्धेतुमपि सर्वप्रमाणाविरुद्धं निर्दिशन्ति श्रुतिस्मृतयः, यथा 'तदनुप्रविश्य सच्च त्यच्चाभवत्' 'स भूमिं विश्वतो वृत्वा, अत्यतिष्ठद्दशाङ्गुलम्, पुरुष एवेदं सर्वम्', 'सर्वं समाप्नोषि ततोसि सर्वः', 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः॥' इत्यादि। ततश्च सर्वविरोधिप्रशमनपटीयसि सामानाधिकरण्यनिदाने श्रुत्यैव दर्शिते सर्वक्षोभकबाधार्थतास्वीकारो वेदविप्लावकरुचिभ्य एव रोचते।

किञ्च — चोरः स्थाणुरित्यादिषु चोरादिपदलक्षिताधिष्ठानातिरेकिणि स्थाणुत्वादौ विरोधिधर्मे पदान्तरेणोपस्थापिते चोरत्वनिवृत्तिः, न पुनः पदान्तरेणापि स्वरूपमात्रनिर्देशे, ब्रह्मणि तु जगदादिशब्दलक्षितस्वरूपातिरेकेण को नाम विरोधिधर्मः पदान्तरेणोपस्थाप्यते। न कश्चिदिति चेत्? न तर्हि ततो बाधः। कल्पितो विरोधिधर्म इति चेत्? कल्पितत्वाविशेषे किं कस्य बाधकं बाध्यं वा भवतु? सुन्दोपसुन्दवत्परस्परमिति चेन्न; - एकस्यैवोद्देशोपादानादेरेकस्मिन्वाक्ये दुश्शकत्वात्। विरुद्धोभयपरित्यागेन स्वरूपमात्रं पदद्वयेन विवक्षितमितिचेत्? नतर्हीदं बाधार्थसामानाधिकरण्यम्, उपलक्षणसामानाधिकरण्यताया भवद्भिरेवोक्तत्वात्; तस्यच निरस्तत्वात्।

ननु किं धर्मोपस्थापनेन, स्वरूपमेव तु तद्विरोधीति तदुपस्थापनेन बाध इति चेन्न, - भ्रमाधिष्ठानतया स्वत एव प्रकाशमानस्य स्वरूपस्योपदेशनैरपेक्ष्यात्; भ्रमविरोधित्वासम्भवाच्च। सम्भवे वा नित्य भ्रमानुदयप्रसङ्गात्। नच स्वरूपन्न प्रकाशत इति वाच्यम्, तथा च निरधिष्ठानभ्रमोदयप्रसङ्गात्, नित्यप्रकाशत्वविरोधाच्च। अविद्यातिरोहित अविशद स्वरूप भ्रमसहतया पूर्वं प्रकाशते, अतिरोहितन्तु विशदरूप बाधार्थपदेनोपस्थाप्यत इति चेन्न;— तिरोधानवैशद्याद्यसम्भवस्य स्वरूपनाशादिप्रसङ्गेन प्रपञ्चितत्वात्, वैशद्यस्य चान्तत स्वरूपानतिरेकेण प्रागेव सत्वे प्रकाशे चावश्यम्भाविनि तत एव सर्वबाधोपपत्तौ सर्वभ्रमानुत्पत्तौ वा न सामानाधिकरण्येन बाध्य पश्याम।

प्रागेव सत्वेऽसत्वेच तत्स्वरूपप्रकाशयो।
सामानाधिकरण्येन नैव बाध्यन्तु दृश्यते॥

ननु शुक्तिरजतभ्रमे नेद रजतमितिवत् प्रपञ्चाभावो बाधार्थशब्देन उपस्थाप्यते, नह्यवश्य शुक्तित्वोपदेशादेव रजतभ्रमनिवृत्ति, अपितु साक्षाद्रजतत्वाभावोपदेशाद्पीति चेत्? इदमपि पिष्टपेषणम्, प्रपञ्चाभावस्य ब्रह्मस्वरूपान्तर्भावबहिर्भावयोरुक्तोत्तरत्वात्। नच नेद रजतमितिवत् इह साक्षान्निषेधकशब्द। नच चोर स्थाणुरितिवदगत्या विधायकस्यैव निषेधपरत्वक्लृप्ति, निष्कण्टकस्य गत्यन्तरस्य दर्शितत्वात्। अत इदमेव शिष्यते 'ज्योतींषि विष्णुर्भुवनानि विष्णुरि' त्यादौ विनिविष्टानामेकैकशो नञस्समर्पणेन बाध इति, तत्रापि च वय नञन्तरन्निक्षिप्य तदेव बाधेमहि।

तदेतत्सङ्गृहीतम्- 'नेदं रजतमितिवत् अप्रतिपन्नस्यैव बाधस्या गत्या परिकल्पनम् , तद्वदेव तत्त्वदेनाविष्ठानातिरेकिधर्मानुमन्यापनेन बाधानुपपत्तिश्चे' त्यादिभिर्भाष्यैः ।

इति शतदूषण्यां जीवन्मुक्तिभङ्गो
द्वात्रिंशो वादः ।

श्रीरस्तु ।
अथ त्रयस्त्रिंशो वादः ।

बहुविधभक्तिज्ञानप्रभावपूतैर्निषेवितं बहुभिः ।
प्रभयेव भानुमन्तं लक्ष्म्या सेव्यन्तु लक्ष्याम्यन्तम् ।

---

ब्रह्मद्वेषिकुदृष्टिकल्पितपृथक्सिद्धान्तदुस्तप्रदे
दुस्तर्कैर्द्विषतया विभिन्नशिरसद्दृढ्लापनोदाय यः ।
भूमावानिरभूदशनिमगिरस्तन्धानकौतूहली
श्रीमान्वेङ्कटदेशिको दिशतु नस्त्रय्यन्तधीसम्पदम् ॥
विविधमतसमुत्था स्वप्रमा या [यदि] विगीता
प्रमितिरपि यदिदेत्यन्यथातो दुरीक्षा ।
प्रमितिततदितरत्त्वावस्थितिर्बुद्धिपङ्क्ति
स्तामसिलगुणराशिं श्रीनिवासार्यमीडे ॥

बहुविधेति । अनेन विद्याभेदो ज्ञानभक्त्याद्वितारतम्यं च वक्ष्यमाण गुरुशिष्यभावादिप्रयोजकं विवक्ष्यते । प्रभावपूतै रित्यनेन ज्ञातृज्ञानयोर्भिन्नत्वात्तदभिन्नत्वेनाभिमतायाः संविदः कथमेकत्वमिति व्यज्यते । बहुभिर्निषेवित मित्यनेन जीवानां परस्पर भेदात् ईश्वरोदितव्यभेदाच्च तदभिन्नत्वेनाभिमतायाः संविदः कथमभेद इति सूच्यते ।

अत्र खलु महार्णवावर्तगर्तकुहरेषु आवर्तमानाः पुरुषा आवर्तयन्ति नियतमेतादृशानि वाक्यानि- एकैव संविदनेकज्ञातृज्ञेयतदवच्छिन्नज्ञप्तिरूपेण विवर्तेत इत्येवमादीनि । तदसङ्गतम्, घटादिविषयैकैकधियां तथा विवक्षायां क्वचिदपि विदिताविदितविभागाभावप्रसङ्गात् । तत्तत्पूर्वोत्तरकालयोः प्रपञ्चानुपलब्धिप्रसङ्गाच्च । सैव संवित्तश्चातश्च वेद्यं क्रमेणोपसर्पतीति चेन्न;– घटादेरिव सुखादेरिव च संविदोऽप्युत्पत्तिविनाशादिप्रत्ययस्य निराबाधत्वात् ।

---

एकैवेति । यद्यपि संविदैक्यमेवास्मिन्वादे निरसनीयमित्येकस्या एव संविदस्तत्तद्विषयानवच्छिन्नज्ञप्तिरूपेण विवर्तमानमनुवाद्यम्, तथापि प्रसङ्गात् ज्ञात्रादिविवर्तानुवादः । घटादीति । यद्येकस्य देवदत्तस्य घटविषयकं ज्ञानं निरुक्तरूपं तदा तस्मिन् ज्ञाने जाते तत्परिणामत्वात् कृत्स्नस्यापि सर्वापि ज्ञप्तिर्देवदत्तस्यैवेति तं प्रति विदिताविदितविभागो न स्यात्, अविदितार्थाभावात्; तथा तदतिरिक्तानां यज्ञदत्तादीनां ज्ञानस्यैवाभावात् तान्प्रत्यपि विदिताविदितविभागो न स्यात्; यदि चैकं यज्ञदत्तस्य घटविषयकं ज्ञानं निरुक्तरूपमिष्येत, तदानीमप्येव प्रसङ्ग इत्यर्थः । दूषणान्तरमाह तत्तदिति । यद्येकस्य ज्ञानस्य निरुक्तरूपत्वं तदा तत्पूर्वोत्तरकालयोः प्रपञ्चानुपलब्धिप्रसङ्गः; यद्यन्यस्य, तदा तत्पूर्वोत्तरकालयोस्तत्प्रसङ्ग इत्यर्थः । ननु घटसंविदेव सामग्रीवशात्क्रमेण तत्तत्प्रमातृभिः तत्तद्विषयैश्च सम्बध्यत इति न विदिताविदितविभागप्रसङ्गः, नापि पूर्वोत्तरकालयोः प्रपञ्चानुपलम्भप्रसङ्ग इति शङ्कते सैवेति । घटसंविदेवेत्यर्थः । अतश्च वेद्यमिति । घटातिरिक्तं वेद्यमित्यर्थः । इदं प्रमात्रन्तरोपसर्पणस्याप्युपलक्षणम्; यथा बाह्यार्थानां घटादीनामान्तरपदार्थानां सुखादीनां च उत्पत्तिविनाशप्रत्ययो भेदप्रत्ययश्च, तथा संविदोऽप्युत्पत्तिविनाशप्रत्ययो भेदप्रत्ययश्च निराबाध इति संविदैक्यमनुपपन्नमिति परिहरति घटादेरिवेति । विनाशादीत्यादिपदेन भेदो गृह्यते । न चायं प्रत्ययो भ्रम इत्याह निराबाधत्वादिति । क्रमेणोपसर्पणे देवदत्तस्य ज्ञानदशायां यज्ञदत्तस्य

यौक्तिकबाधस्य सुखदुःखादावपि वक्तुं शक्यत्वात् । विषयाश्रयरूपोपाधिमात्रं व्यावर्तते, संवित्तु प्रत्यभिज्ञाबलात्सर्वत्रैकैवेति चेन्न,- अहमर्थस्य तद्धर्मसुखादेश्च तद्वत्प्रसङ्गात् । निराकारायास्संविदः स्वतो भेदाप्रतीतेः विषयाश्रयाभ्यामन्तरप्रतीतेश्च तद्भेद औपाधिक इति चेन्न;— संयोगादिष्वपि सम्बन्धिव्यङ्ग्यभेदत्वेन तथा

---

ज्ञानं न स्यादित्यपि बोध्यम् । ननु— शुक्तिरजतादिवत्प्रत्यक्षत्वमेव बाधकमिति नियमो नास्ति, ज्वालैक्यस्य युक्त्या बाधदर्शनात्; ततश्च लाघवानुगृहीतेन घटसंवित् पटसंविदो न भिद्यते संवित्त्वात् यथा घटसंवित् इत्याद्यनुमानेन भेदप्रतीतेर्बाधस्स्यादित्याशङ्कायामाह यौक्तिकबाधस्येति । तत्रापि लाघवसहकृतस्य सुखत्वादिहेतोः सुखान्तराभेदसाधकस्य प्रवृत्तेरिति भावः । आदिपदेनेच्छादिपरिग्रहः । ननु संविद्भेदप्रतीतिः लाघवसहकृतानुगतबुद्ध्यैव बाध्यते; नैवं सुखदुःखादावपि तथा प्रसङ्गः, तत्रानन्यथासिद्धभेदप्रतीत्यानुगतबुद्धेः जातिविषयत्वकल्पनात्, संविद्भेदप्रतीतिस्तु विषयाश्रयरूपोपाधिविषयतयान्यथासिद्धा, सुखदुःखाद्याश्रयभेदानुभवेपि निर्विषयत्वादेकाश्रये सुखदुःखभेदप्रतीतिरन्यथासिद्धैव, तस्माल्लाघवसहकृतानुगतप्रत्ययस्य सत्त्वादन्यथासिद्धियोग्यतया भेदप्रतीतेर्न संविद्भेदसाधकत्वमिति शङ्कते विषयाश्रयेति । व्यावर्तत इति । भिन्नतया ज्ञायत इत्यर्थः । यद्येवं लाघवसहकृतानुगतबुद्ध्या संविदैक्यसिद्धिः, तर्हि अहमर्थादेश्चैकत्वमहमर्थभेदप्रतीतेश्शरीरभेदविषयत्वं सुखदुःखादिभेदप्रतीतेश्चाश्रयभेदविषयत्वमिति स्यात्; यदि चैकाश्रयसुखादिभेदप्रतीतिरनन्यथासिद्धेत्युच्येत, तदैकाश्रयैकविषयसंविद्भेदप्रतीतिरनन्यथासिद्धैवेति तुल्यमित्यभिप्रायेण परिहरति नेति । उत्पत्तिविनाशप्रत्ययस्य च नाश्रयविषयाभ्यामन्यथासिद्धिरित्यपि द्रष्टव्यम् । ननु यथा घटपटयोस्स्वरूपप्रतीतिमात्रादेव भेदः प्रतीयते न तथा संवित्स्वरूपप्रतीतिमात्रात् संविद्भेदः प्रतीयते, किन्तु विषयाश्रयान्तरप्रतीतौ सत्यामेव, ततश्च संविद्भेद औपाधिकः, उपाधिमन्तरेणाविभाव्यमानत्वात्, आकाशभेदवत्, इत्यभिप्रायेण शङ्कते निराकारायाइति । आदिपदेनेच्छाद्वेषादिसङ्ग्रहः । कारणान्वयव्यतिरेकानुविधानात् संयोगादेः

प्रसङ्गात्। अन्वयव्यतिरेकाभ्यां तत्कार्यत्वादिसिद्धिरिति चेत्' तुल्यम्। व्यक्तिमात्रमेव संविद इतिचेन्न,— श्रद्धधानस्य ते संयोगादावपि

---

कार्यत्वम्, तत एव तद्भानात्वन्चेत्याशङ्क्य तुल्यत्वेन परिहरति अन्वयेति। व्यक्तिमात्रमिति। अभिव्यक्तिमात्रमित्यर्थः। श्रद्धधानस्येति। निरस्तयुक्ति-मिति शेषः। संविद उत्पत्तिमनभ्युपगच्छतस्तव कथं तदभिव्यक्तिरूपायास्संविद उत्पत्तिरित्यपि बोध्यम्।

ननु न हि वयं देवदत्ताद्याश्रयतया उत्पत्त्यादियोगितया भिन्नतया च यत् प्रतीयते तस्याभेदं वदाम, वृत्तेरेव तथा प्रतीतेः, किन्तु तदन्या काचि-निराश्रया स्वतो निर्विषया तत्तदाकारवृत्त्यवच्छेदेन घटादिविषया संविदस्तीति तस्या एवाभेदं ब्रूम, नच तस्या मानाभावः, अस्ति तावन्नीलोत्पलपत्राद श्यामलमरविन्दलोचनमिन्दिरारमणमनवरतमनुचिन्तयतामाप्रहरं घटादिज्ञानधारा यामपि तावत्कालीनचित्तवृत्तिगोचरं तावत्कालीनात्मगोचरं चानुसन्धानं एता वन्तं कालमिदमनुभवन्नेवाहमासमिति, तत् कथमुत्पत्त्यादिमत्तया प्रतीयमाना ऽहमर्थधर्मातिरिक्तस्वतन्त्रसंविदभावे सङ्गच्छताम्, धारामध्यपतिततत्तद्विज्ञानाना तत्तत्कालीनात्मनश्च पूर्वमनुभवागोचरत्वेन इदानीमनुसन्धानानुपपत्तेः। ननु तत्तज्ज्ञानानन्तरमेवोत्पन्नानुव्यवसायात्मज्ञानाभ्यां संस्काराधानादिदानीमनुसन्धान मिति चेन्न;— तथा सति विजातीयज्ञानव्यवधानेन ध्यानत्वधारात्वयोरनुपपत्तेः। किञ्च नैरन्तर्येण पठ्यमानकेदारादिनामान्तर्गतवर्णेष्वाद्यवर्णस्थितिसमये तद्वि-षयकत्वादिनिर्विकल्पकं द्वितीयवर्णोत्पत्तिश्च, तत्सविकल्पकसमये द्वितीयस्य स्थितिः, तदनुव्यवसायसमये द्वितीयस्य नाशः, तदनन्तरं द्वितीयस्य ग्रहणायोगात् तृतीयस्य चतुर्थस्य वा ग्रहो वक्तव्यः, तत्र च मध्येऽनुव्यवसायकल्पने द्वादश नामश्रवणानुपपत्तिः, तदकल्पने चाश्रौषमिति प्रतिसन्धानानुपपत्तिरिति कां दशामापन्नमनुसन्धानम्। एवमिष्टविषयज्ञानादेनं सुखं जायते, न तदनुव्यवसा यात्, इष्टज्ञानस्यैव तद्धेतुत्वात्, सुखस्योत्पन्नमनस्य ज्ञातव्यमिति कथमिष्ट ज्ञानानुसन्धानम्, सुखज्ञानकाल एव तस्य नष्टत्वात्। ननु सुखात् पूर्वमिद

स्वाध्यवसातव्यत्वात्। अथान्या काचिन्निराश्रया निर्विषया नित्या संवित् सर्वविषयभागिनीति चेन्न;- तस्यास्सर्वमानानाघ्रातत्वेन

---

मिष्टज्ञानमितिचेन्न;- अनुव्यवसायकाले नष्टस्येष्टज्ञानस्य सुखाहेतुत्वात्, इष्टज्ञाने सत्यपि सुखानुत्पत्तौ तस्य तद्धेतुत्वप्रसङ्गात्। नच विनश्यदवस्थेष्टज्ञानात्तदनुव्यवसायइति वाच्यम्, सुखस्यावश्यवेद्यत्वनियमेन तज्ज्ञानात्पूर्वं तस्य नष्टत्वात्। नच ज्ञानसुखयोस्समूहालम्बनम्, तयोस्सहोपस्थितिनियमे पौर्वापर्यस्य दुर्ग्रहतया कार्यकारणभावग्रहायोगात्। किञ्चाहमर्थधर्मातिरिक्ता स्फुरणापरपर्याया काचित् संवित्स्वीकार्या, देवदत्तो जानाति घटः स्फुरतीति तयोर्भिन्नाश्रयत्वेनानुभूयमानयोरेकत्वायोगात्। ननु घट जानामीत्यर्थविशेषणक ज्ञानमात्मन्यनुभूयते, घटः स्फुरतीति ज्ञानोपसर्जनतयार्थः प्रतीयत इति विशेषणविशेष्यभाव एव पर भिद्यते, नत्वनुभवयोर्विषयभेद इति चेन,- स्फुरतीति स्फुरणानुभवस्य तदुपसर्जनतया शब्दवत् व्याख्यानानर्हत्वात्। किञ्च स्वोपसर्जनमर्थं स्वयं विषयीकरोति, ज्ञानान्तरोपसर्जनं वा? नाद्यः, वेद्यज्ञानवादे स्वस्य विश्वविषयत्वायोगात्। न द्वितीयः, व्यवसायानुपनीतस्य तद्विषयत्वस्यानुव्यवसाये भानायोगात्। स्वसंवेद्यज्ञानवादेऽपि किमुपसर्जनं ज्ञानं ज्ञेयेन सहैव स्वात्मानं विषयीकरोति, किं वा प्रथमं स्वात्मानं विषयीकृत्य ज्ञेयं विषयीकरोति? नाद्यः, विशेषणज्ञानतत्सन्निकर्षयोः प्रथमं वक्तव्यत्वात्; विशेषणीभूतज्ञानस्यैव विशिष्टज्ञानत्वे तस्य तज्ज्ञानात्मसन्निकर्षजन्यत्वायोगात्। अत एव न द्वितीयः, बुद्धेः विरम्य व्यापारायोगाच्च। सकर्मकाकर्मकयोर्ज्ञानस्फुरणयोः अभेदासम्भवात् ज्ञानेन स्फुरतीति भेदानुभवाच्च। तस्मादहमर्थधर्मातिरिक्ता स्वतन्त्रा संवित्सिद्धा। तस्याश्चाभेदे लाघवसहकृता नुगतबुद्धिर्मानम्। इत्येतत् सर्वमभिप्रेत्य शङ्कते अथान्या काचिदिति। सर्वमानानाघ्रातत्वेनेति। अयं भावः, न तावद्धारानुसन्धानानुपपत्तिस्तत्र मानम्, धारामध्यपात्यनुव्यवसायजन्यसंस्कारैरेवानुव्यवसायवदेव धारानुसन्धानसम्भवात्। नचैवं विजातीयप्रत्ययव्यवधानात् धारात्वव्याहतिः, सजातीयप्रत्ययानधिकरण

कालाव्यवधानाद्धारात्वोपपत्तेः। एतावन्तं कालं भगवन्तमनुचिन्तयन्नेवाहमास मिति तावत्कालस्य तत्प्रतीतिव्याप्तत्वस्यैव प्रतीतेः। किञ्च त्वयापि ध्यानस्य यत्नसाध्यत्वाङ्गीकारात् यत्नस्य च स्वसमानविषयकज्ञानसाध्यत्वात् उत्तरोत्तर ज्ञानव्यक्तिव्यवहितैव धारा। अपिच कश्च विजातीयप्रत्ययः? किं तद्गतजाति शून्यः, किंवा तन्निष्ठात्यन्ताभावप्रतियोगिजातियोगी, उत तद्विषयाविषयकः, तदविषयविषयको, वा? आद्येपि किं तन्निष्ठजात्यभावसामान्याभावः, उत यत्किञ्चित्प्रतियोगिकविशेषाभावः? नाद्यः, अनुव्यवसायस्यापि व्यवसायनिष्ठज्ञानत्वादिजातियोगित्वेन विजातीयत्वासिद्धेः। अस्तु तर्हि द्वितीयः, अनुव्यवसाये धाराधिगतचाक्षुषत्वस्मृतित्वयोरसिद्धेरिति चेन्न;— देवदत्तधारायां दैववशसम्पन्नोद्बोधसंस्कारजनितप्रत्यभिज्ञाघटितमध्याया प्रत्यभिज्ञोत्तरव्यक्तीना प्रत्यभिज्ञागतसंस्कारप्रयोज्यजातियोगित्वाभावेन धारात्वाभावप्रसङ्गात्। न द्वितीयः, उक्तस्थल एव प्रत्यभिज्ञायाः पूर्वोत्तरव्यक्तिनिष्ठात्यन्ताभावप्रति योगिसंस्कारप्रयोज्यजातिमत्त्वेन तद्व्यवधानात् धारात्वाभावप्रसङ्गात्। न तृतीयः, अनुव्यवसायस्य व्यवसायविषयविषयकतया विजातीयत्वासिद्धेः। न चतुर्थः, तत्तत्प्रत्ययाना तत्तत्कालविषयतया तत्तद्व्यक्त्यन्तराविषयकालविशेषविषयकत्वा भावेन धारात्वासिद्धिप्रसङ्गात्। घटधाराया मध्ये दैवात् घटपटसमूहालम्बने सति धारात्वासिद्धिप्रसङ्गात्। किञ्च फलबलात् घटादिगोचरज्ञानस्याहन्त्वाप्रकारकस्यापि तत्संस्कारजनकत्वस्य त्वयाङ्गीकारात् आत्मस्वाकाराविषयस्यापि ज्ञानस्य तत्संस्कारजनकत्वमस्तु। नापि द्वितीयवर्णादिश्रवणानुपपत्तिः मानम्, प्रथमवर्णोत्पत्तिक्षणापेक्षया ज्ञानेच्छाकृतिकरणव्यापारनटक्षण व्यवधानेनैव द्वितीयवर्णोत्पत्त्या तद्ग्रहणसम्भवात्। नापीष्टज्ञानानुसन्धानानुपपत्तिः तत्र मानम्, त्वदुक्तरीत्या समूहालम्बनेनैव इष्टज्ञानसुखयोर्ग्रहणेपि इष्टस्वरूपमानस्य सुखं प्रति व्यभिचारात् सुखानुभवकाले इष्टज्ञानस्यैवानुभवाच्च परिशेषादिष्टज्ञानस्यैव कारणत्वग्रहसम्भवात्। किञ्च इन्द्रियसन्निकर्षान्वयव्यतिरेकानुविधानदर्शनात् सुखकाले प्रतीत्यनुभवाच्च प्रतीतिकारणतया क्लृप्तस्य सन्निकर्षादेस्तद्द्वारा सुखकारणत्वं वक्ष्यते। एवं पुत्रस्ते जात इति वाक्योच्चारणानन्तरं श्रोतुर्मुखविकासानुमितसुखस्य वाक्यान्वयव्यतिरेकानुविधान

दर्शनादप्युत्पन्नस्य च तददर्शनात् वाक्यस्य प्रतीतिद्वारैव सुखप्रयोजकत्व गृह्यते, तत्रच सामान्यत इष्टज्ञानस्य सुखकरणत्वे गृहीते इष्टप्रत्यक्षस्य सुखविशेषसाधनत्व सुग्रहमेव । किञ्च यदीष्टज्ञानानन्तरमेवावश्य सुखमुत्पद्यत इति नियमः, तदा इष्टज्ञानानन्तरमिष्टोपादित्सा कुतः स्यात् ? यदिचाचिन्त्यमहिमादृष्टादिसहकारिप्रावल्यात् सुखसामग्र्या सत्यामप्युपादित्सा, तदा अत्रापि ततएव सुखसामग्र्या सत्यामपीष्टज्ञानानन्तरमनुत्पन्नसायोत्पत्तायनन्तर सुखोत्पत्ता विष्टज्ञानकारणत्व सुग्रहमेव ।

वस्तुतस्तु स्वप्रकाशत्वादेव धियो न क्वाप्यनुसन्धानानुपपत्तिः, नच घटादेरिव ज्ञानस्यापि ज्ञानविषयत्वप्रतीतेः विषयत्वस्य भेदनिबन्धनत्वाच्च ज्ञानस्योत्पत्त्याद्याश्रयस्य न स्वप्रकाशत्वमिति वाच्यम्, प्रकाश्यत्वस्यैव सर्वत्र प्रतीतेः । नच विषयत्वे मानाभावप्रसङ्गः, यदि विषयत्व प्रकाश्यत्वातिरेकि भेदनिबन्धन च, तर्हि भिन्नत्वे सति प्रकाश्यत्वमेव विषयत्वम्, तच्च भेदस्य प्रकाश्यत्वस्य च प्रतीतिसुगममेव । नचैवमपि धाराकालीनज्ञातुरनुसन्धान कथमिति वाच्यम्, स्वप्रकाशज्ञानेन तस्यापि प्रकाशमानत्वात् । नच रूपादिहीनस्य कथ चक्षुरादिजन्यज्ञानविषयत्वमिति वाच्यम्, रूपवत्तदुपपत्तेः । रूपादिहीनस्यापि सतः रूपवदेव चाक्षुषज्ञानविषयत्वमिति त्वयैवाभिधानात् । नन्वेतावन्त कालमिदमेवाद्राक्षनेतोऽन्यदद्राक्षमिति तत्कालीनोऽन्यदर्शनाभावोप्यनुसन्धीयते, नच धाराकाले ज्ञानान्तराभावानुभवोऽस्ति, अतस्तदनुसन्धान कथ स्यादिति चेन;— त्वन्मतेपि तुल्यत्वात् । साक्षिणस्तदनुभव इति चेत् ? तर्हि ज्ञानाभावस्यैव साक्षिणा सर्वदानुभवसम्भवादपि परिशेषात् भावरूपाज्ञानस्य प्रत्यक्षविषयत्वकल्पनमनुपपन्नमेव स्यात् ।

अथ ग्रहणाभावरूपाज्ञानमेवानुभूयते, तेन दर्शनाभावोऽनुमीयत इति चेन,— साक्षिणो भावरूपाज्ञानग्रहण इवाभावग्रहणेपि सामर्थ्याविशेषात् एव प्रणाडीकल्पने मानाभावात् । एतावन्त कालमिदमेवाद्राक्ष नेद रजतमद्राक्षमिति शुक्तिरजतदर्शनाभावस्य धारोत्तरकालोत्पन्नभ्रमवतानुसन्धानात्, तत्रच प्रातिभासिकविषयज्ञानानङ्गीकारादेव नाशेनेन दर्शनाभावानुमानसम्भवः ।

त्स्मादर्शनाप्रमाणमङ्गीकारीत्या अस्मरणादिलिङ्गेन पूर्वकालीनदर्शनाभावानुमानम् । यथाच न व्यभिचारः तथोक्त तत्रैव । उभयसमाधेयश्चायम् ।

अथवा अस्तु व्यभिचार', किमनिष्टम्, नहीदं ग्राह्यनुमानम्, किन्तु लौकिकाना प्रतीत्युपायचिन्तनमात्रम्, लौकिकाना चाव्यभिचारिणा व्यभिचारिणा वा लिङ्गेनास्मदादिभिर्निर्वचनयोग्येन चपलस्याद्यनुमापकसौरभ्यादिरीत्येव तदयोग्येनाप्यनुमानसम्भवात्। व्यभिचारिलिङ्गोत्पन्नं च ज्ञान कचिद्दैवादर्थसंवादात् प्रमाण कचिचाप्रमाणमेवेति न किञ्चिदनुपपन्नम् । प्रत्युत त्वत्पक्ष एवानुसन्धानानुपपत्ति' । तथाहि- घटानुभवसन्तानकालीनो ज्ञानान्तराभावानुभव' किमित्य उत्पन्नितः ? नाद्यः, तस्यागनुत्पत्तिप्रसङ्गात् । न द्वितीय., तदाकारवृत्त्यभावात् । तत्सत्वे सन्तानविच्छेदप्रसङ्गात् । ननु घटाकारवृत्त्यवच्छिन्नचैतन्यमेव यथा घट स्वावच्छेदकवृत्तिमद्दमर्थं च भासयति तथा ज्ञानान्तराभावमपीति चेत् ? किं प्रतियोगिभूत ज्ञान ज्ञानत्वेनैव भासयति, घटादि विषयकत्वेन वा ? नाद्य', एतावन्त काल घटमेवानुभवन्नास पट नान्वभव मिति प्रतिसन्धानाभावप्रसङ्गात् । न द्वितीय', प्रतियोगिस्मृत्यभावेन तथा ज्ञानाद्यम्भवात् । अस्तु प्रतियोगिस्मृतिरपि; नच धाराविच्छेदप्रसङ्गः, आन्तरालिकप्रतियोगिस्मृतिभि र्व्यवधानादिति वाच्यम्, प्रथम प्रतियोगिस्मृतौ जाताया प्राथमिकज्ञानाभावज्ञाने सति उत्तरोत्तरज्ञानेषु पूर्वपूर्वज्ञानाना प्रतियोगिज्ञानत्वेन कारणतया सन्तानविच्छेदादितिचेन्न,- घटानुभवधारानन्तर कदाप्यननुभूतपदार्थानुभवे सति एतावन्त काल घटमेवान्वभूवन्नेममर्थमिति प्रतीते दुरपह्नवत्वात्, तत्र च तादृशपदार्थविषयकज्ञानपूर्वाननुभूतत्वेन तत्स्मृत्यभावात् तदभावग्रहणानुपपत्तेः । नच तदभावाकारवृत्तावेव तत्प्रतियोगिज्ञानकारणता, नत्वन्याकारवृत्तौ तद्भानेपीति वाच्यम्, तथा सति कदाप्यननुभूतद्वीपान्तरस्थ पदार्थविशेषविषयकानुभवाभावस्य तादृशविशेषावच्छिन्नपदार्थप्रतियोगिकानुभवाभावत्वेनानुभवस्यावर्जनीयतया तथैव तत्स्मृतिप्रसङ्गात् ।

एतेन सर्वेषामपि साक्षिण्यध्यासात्, अधिष्ठानभूतसाक्षिणा सर्वदा सर्वेषा भानात् तदेव विषयविशिष्टज्ञानात्मकप्रतियोगिज्ञानमपेक्ष्य ज्ञानाभावानुभव विशिष्ट

गपुष्पायमाणत्वात् । आघ्रातत्वेपि मिथ्याकोटिनिवेशात् । तदभ्युपगमेपि तदेव सर्वदा सर्वोपलब्धिप्रसङ्गात ।

---

ज्ञानमेव, नच तदेव साधन सम्भवति। ननु घगाराद्युत्पत्त्यनन्तर तत्साध्य धर्मस्फुरण विषय वृत्त्यन्तर जायत इति चेन्न,– मयापि तथा सुवचत्वात् । किञ्च धर्मो ज्ञायत इति प्रतीतिस्तावद्दुरपह्नवा, त्वयापि निर्वाह्यैव, सैव कदाचित् स्फुरतीति व्यवहार जनयति, कदाचित् विषय इति व्यवहारम्, नच व्यवहारभेदमानात् विषय भेद, घटकलशादिव्यवहारादपि तथा प्रसङ्गात्, नच सकर्मकाकर्मकयोर्ज्ञानस्फुरण योरभेदानुपपत्ति, स्फुरणस्याकर्मकत्वासिद्धे, ज्ञानविषयत्वस्यैवाकर्मकत्वात्, तदेव स्फुरतीति प्रतीयते, यथा रोचत इतीच्छाविषयत्वम् । ज्ञानेन स्फुरतीति व्यतिरेकनिर्देशश्च ज्ञानस्य विषयत्व प्रति प्रयोजकत्वादुपपद्यत – एव । यच्चोक्तमनुगतबुद्ध्या सविदैक्यसिद्धिरिति, तन्न, निश्चितभेदविष यानुगतबुद्धेर्जातिविषयत्वनियमात् । नचोपाधिविषयतया भेदनिश्चयोऽन्यथासिद्ध इति वाच्यम्, उपाधेरदर्शनात् । नच विषयाश्रयावेवोपाधी, विषयाश्रया भेदेपि सविन्भेदप्रतीते । नच तत्र वृत्तिरेवोपाधि, अवैयर्थ्यभङ्गे वृत्ति निरासात्, इति ।

आघ्रातत्वेपी ति । दोषोऽस्त्येवेति शेष । तत्र हेतुमाह मिथ्ये ति । दृश्यत्वादिति भाव । तदभ्युपगमपी ति । फलव्याप्यत्वाभावेपि वृत्ति व्याप्यत्वस्य सत्त्वात् प्रमाणविषयत्वेपि न मिथ्यात्वमिति स्वाभिमतप्रमाणाभासत्व लात् तदभ्युपगमे पीत्यर्थ । यद्वा, ननु ब्रह्मस्वरूपस्य स्वप्रकाशत्व सिद्धान्ते पीष्यत एव, धर्मभूतज्ञान च तत्तदवस्थाविशेषवत्, अतस्सम्प्रतिपन्नस्यैव ब्रह्मप्रकाशस्य घटादिसविद्रूपता कल्प्यते, लाघवात्, नचनन्ताना सविद्रू पता, गौरवात्, त्वदभिमतधर्मभूतज्ञानस्थाने अज्ञाननिवृत्त्यर्थमन्त करण वृत्त्यङ्गीकाराच्च गौरवमित्याशङ्क्य ब्रह्मस्वरूपस्य स्वप्रकाशत्वाङ्गीकारेपि तस्य विषय प्रकाशत्वासम्भवात् अनन्तसवित्कल्पनञ्च दोषायेत्याह तदभ्युपगम इति । तदेवे ति । वर्तमानकाल इत्यर्थ । तेनापरोक्षोपलब्धिप्रसङ्गादिरुक्त भवति। ननु

क्रमेण नियतविषयोल्लेखस्वभावेयमिति चेन्न;— तन्नित्यत्वेन हेतुता नियमायोगात् । निर्विकारत्वेन विकाररूपोल्लेखस्यापि दुर्वचत्वात् । नित्यं व्यापित्वेन सन्निधितदभावनियमस्याप्ययोगात् । विषयसत्त्वमेवोल्लेख इति चेन्न;— मिथ्यात्वेनाभ्युपगते सत्त्वाभ्युपगमायोगात् । वर्तमानत्वमिहसत्त्वमिति चेन्न;-भूतभाविष्यतो: कदाचिदनुल्लेखप्रसङ्गात्। तत्काले वर्तमानत्वं विवक्षितमिति चेन्न;- तदभावेपि भ्रान्त्योल्लेखस्य

---

तत्तत्सामग्रीवशात् तत्तदाकारवृत्त्युपगमे सति तत्तद्विषयोपलब्धिरिति न सर्वदा सर्वोपलब्धिप्रसङ्ग इति चोदयति क्रमेणे ति । किमुल्लेखस्तु संविदभिन्नम् , उत ततो भिन्नमिति विकल्पमभिप्रेत्याद्य दूषयति नित्यत्वेने ति । द्वितीयेपि किमुल्लेखस्तु संविदः परिणामः, उत विषयसन्निधिः, उत विषयसत्त्वमेवेति विकल्पमभिप्रेत्याद्यं दूषयति निर्विकारत्वेने ति । तृतीयं पक्षमाशङ्कते विषये ति । तत्काल इति । स्वज्ञानकालइत्यर्थः । तदभावेपी ति । अनिर्वचनीयत्वस्याभावेपि परोक्षभ्रान्त्युल्लेखस्य विद्यमानत्वादित्यर्थः । विषयीकरणमेवोल्लेख इति चेन्न;— विषयसन्निकर्षादिना विषयत्वोत्पत्तिसम्भवे वृत्तिकल्पनावैयर्थ्यात् । अथ देवदत्तान्तःकरणावच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्यस्यैक्ये सत्येव घटादिविषयकज्ञानस्यै तदीयत्वमितिचेन्न, तथा सति वृत्त्यभावदशायां तत्प्रकाशस्य तदीयत्वाभावादेव तद्व्यवहारोपपत्तावावरणकल्पनं मुधैव स्यात् । नच स्वरूपानन्दाप्रकाशाय तत्कल्पनम् , स्वरूपनाशायोगात् । नचाद्यव्यवहारार्थं तत्कल्पनम् , ब्रह्मणः प्रवृत्त्यनर्हत्वात् । यथा कथञ्चिदुद्देश्यकप्रवृत्तेश्च वेदान्तश्रवणाभावादेवोपपत्तेः । तस्यावरणनिवृत्तिपूर्वकालीनत्वेन तत्साध्यत्वायोगाच्च ब्रह्मकर्तृकाभिलापस्य करणादिसत्त्वे इष्टत्वात्; तदसत्त्वे तत एव तदभावोपपत्तेः । अथ इदमाकारवृत्त्युदये सतीदमवच्छिन्नचैतन्यैक्यात् तदेव चैतन्यशुक्त्यवच्छिन्नचैतन्यमिति इदस्फुरणवत् शुक्तिस्फुरणमप्येतदीयमेवेति शुक्तिभानमपि स्यादिति तदभावायावरणकल्पनमिति चेन्न;— स्वसत्तानियतसाक्षिभानस्याभावायोगात् , वृत्तिप्रयुक्ततदीयत्वस्याप्यनिवृत्तेः व्यवहाराभावार्थं तत्कल्प-

विद्यमानत्वात् । तत्कालवर्तित्वेनावसन्नमुल्लेखशब्दार्थ इति चेन्न,- अध्यासरूपस्यैव उल्लेखस्य निरूप्यमाणत्वात् । अतो नित्यैकसर्वसाक्षिसंविदभ्युपगमे युगपत्सर्वोपलब्ध्यादिप्रसङ्गो दुर्वार । न वा किञ्चित्कदाचिदपि भायात् । सर्वेषाञ्चायत्नलभ्य सार्वज्ञ्यम् । सर्वेऽप्यन्धबधिरादयश्च स्यु । गुरुशिष्यपण्डितजडादिभेदश्च ज्ञानभेदनिबन्धनो निर्मूल स्यात् । ननु विषय एव नास्तीति वादिनं प्रति सर्वविषयोपलम्भादिप्रसङ्गो निरर्थक इति चेत् ? किमिह विषयानुल्लेखो विवक्षित ? स्वमात्रविषयत्व वा, मिथ्याविषयत्व वा, तथाविधमन्यद्वा ? नाद्य,

---

नैषीदम्भानवत् शुक्तिभानस्यावर्जनीयत्वात् । नचगपचि, अनुभवविरोधात्; अधिष्ठानतत्त्वसाक्षात्कारे विद्यमाने रजताध्यासायोगाच्च । आवरणमपि यदि व्यवहारयोग्यत्वाभाव, तदा प्रतियोगिसमानसत्ताकस्य प्रतियोगिदेशे असम्भव एव, भिन्नसत्ताकत्वे च प्रतियोगिना विरोधाभावात् तत्प्रयुक्तकार्यमपि स्यादेवेति न व्यवहाराभावोऽपि वक्तु शक्य । नच योग्यतामात्रस्य प्रतिबन्धकत्वम्, योग्यताभावस्य योग्यतापेक्षया भिन्नसत्ताकत्वेन पारमार्थिकत्वे निवृत्त्ययोगात् प्रातिभासिकत्वे वाच्ये प्रतिबन्धकत्वायोगात् । अविद्याया एव प्रतिबन्धकत्वकल्पने लाघव च । व्यवहारयोग्यताया एवाभावे आवरणकल्पनमेव व्यर्थम् । यदि च विपरीतव्यवहारयोग्यता आवरणम्, तदानीमप्युभयव्यवहारप्रसङ्गो दुर्वार । प्रतिबन्धकत्वकल्पने च वैपरीत्यापत्ति । तस्मात् ब्रह्मस्वरूपस्यैव विषयावभासरूपत्वे सर्वदा सर्वोपलम्भप्रसङ्गो दुर्वार एव ।

नन्वे ति । भासकत्वेनस्यैपि कदाचिदभाने कदाचिदपि भान न स्यादित्यर्थ । सर्वेषाञ्चे ति । तथाच ज्ञानार्थप्रवृत्तिर्लोकवेदयो क्वापि न स्यादिति भाव. । सर्वेपी ति । इन्द्रियवैकल्यप्रयुक्तकार्याभावादिति भाव । गुरुशिष्ये ति । ज्ञानभेदाभावे किञ्चिज्ज्ञत्वबहुज्ञत्वरूपवैषम्याभावादिति भाव । निरर्थक इति । विषय एव नास्तीति वादिनं प्रति सर्वविषयोपलम्भप्रसञ्जकवाक्य खपुष्पसौरभ्यापादकवाक्यवत् अर्थशून्यमित्यर्थ । तथाविधमि ति ।

सर्वलोकोपलम्भस्ववचनसिद्धान्तादिविरोधात् । वन्धाभावेन शास्त्रवैय्यर्थ्यादिप्रसङ्गाच्च । न द्वितीयः, नीलादिकमन्तर्भाव्यैव स्वशब्दोक्तौ नीलादिनानात्वेन संविन्नानात्वप्रसङ्गात् । तन्नानात्वापह्नवे च सर्वविरोधः, नानात्वैकत्वसमुच्चयस्य चित्राद्वैतस्य च त्वदनभिमतत्वात् । अभ्युपगच्छतामपि व्याघातशतवात्यावैयात्यनिरासघूर्णितत्वात् । अथानन्तर्भाव्य, तथासति कथं तत्प्रकाशः, तदप्रकाशेवा कथं तद्व्यवहारः, तदभावे च कथं तदनन्तर्भावोक्तिः । न तृतीयः, सर्वोपलब्ध्यादिप्रसङ्गस्य दीर्घायुष्ट्वात् । नच मिथ्याभूतं सर्वमेकम्, विचित्रोल्लेखव्याघातात् ।

---

अनुपपन्नत्वैन्नैपमित्यर्थः । किमिद स्वमात्रविषयत्व नाम ? किं विषयतया नीलविशिष्टस्वमात्रविषयत्वम्, तथा पीतविशिष्टस्वमात्रविषयत्वम्, तथैव शुक्लविशिष्टस्वमात्रविषयत्वादिकञ्च, किं वा संविन्मात्रविषयत्वमेव ? नाद्य इत्याह नीलादिकमि ति । अन्तर्भाव्यैवे ति । संविद प्रति विषयतया विशेषणीकृत्येर्थः । नीलादिनानात्वेने ति । नीलविशिष्टस्वमात्रविषयायाः पीतविशिष्टस्वमात्रविषयसंविदभेदायोगात् संविन्नानात्व सिध्येत्यर्थः । ननु नीलपीतादिक सर्वमेकमेव, अतो नीलविशिष्टस्वमात्रविषयायास्संविदः पीतविशिष्टस्वमात्रविषयसंविदभेदो युज्यत एवेति शङ्कामनूद्य दूषयति तन्नानात्वे ति । तच्छब्देन नीलादिक परामृश्यते । ननु नीलादीनां सर्वेषां विषयाणामभिन्नत्वात् नानात्वाच्च संविदैक्य नानात्वप्रतीतिश्चोपपद्यत इत्यत्राह नानात्वैकत्वे ति । ननु कथ समुच्चयानङ्गीकारः, अद्वैत ह्यङ्गीकृतम्, तद्भेद एव चित्राद्वैतमित्यत्राह चित्रे ति । कथमनभ्युपगमः, स्वगोष्ठीमध्यपात्यभ्युपगमस्यैव स्वाभ्युपगमत्वादित्यत्राह अभ्युपगच्छतामपी ति । संविन्मात्रविषयत्वमेव स्वमात्रविषयत्वमिति द्वितीय कल्पमुत्थापयति अथे ति । तत्प्रकाश इति । नीलादिप्रकाश इत्यर्थः । तदभावेचे ति । नीलादिव्यवहाराभावे कथ नीलाद्यनन्तर्भावोक्तिः, तदुक्तिरूपव्यवहारस्यैव नीलादिविषयत्वादित्यर्थः । ननु मिथ्यार्थस्य दूरस्थस्याप्येकत्वात् नानात्वाभावेन कथ सर्वशब्दार्थ इत्यत्राह नचेति ।

तथापि तत्प्रसङ्गस्थितेश्च । न चतुर्थः, असद्विषयत्वादौ दत्तोत्तरत्वात् । अनिरूपितभेदाभेदाविद्याविलासदौर्घट्यविश्रमेऽस्मदुक्तदूषणाभ्युपगतिमन्तरेणापसर्पणासिद्धेः । अवस्तुनि प्रयुक्ता दोषा न दोषा इति चेन्न,- प्रपञ्चइव खपुष्पादौ प्रसङ्गात् । वस्तुनि च दोषानवकाशात् क्व दोषः ? न क्वचिदिति चेत् ? जितं जैनेन । सर्वत्रेति चेत् ? त्यज संविदमपि ।

---

तथापी ति । सर्वशब्दस्याशेषपरत्वादित्यर्थः । असद्विषयत्वादावि ति । किं प्रतीयमानस्य घटादेरसत्त्वं विवक्षितम्, उत प्रतीतेः खपुष्पादिविषयत्वम्, नोभयमित्याह दत्तोत्तरत्वादि ति । सिद्धान्तविरोधात् बन्धाभावेन शास्त्रवैयर्थ्यात् घटादिप्रत्यक्षविरोधात्, सर्वोपलब्धिप्रसङ्गस्य दीर्घायुष्ट्वाच्चेत्युपान्त्यान्त्यैर्हेतुभिरित्यर्थः । नन्वस्तु नीलादिविशिष्टस्वमात्रविषयत्वमेवेति पक्षः, नचैवं सति संविद्भेदप्रसङ्गः, नीलादीनां भिन्नाभिन्नत्वेनाभेदमादाय संविदैक्योपपत्तेः, नच भेदाभेदयोर्विरोधादेकत्रासम्भवः, अविद्याविलासत्वेन मिथ्याभूतयोर्दुर्निरूपस्वभावयोर्दौर्घट्यस्यैवालङ्कारत्वादित्याशङ्कामनूद्य दूषयति अनिरूपिते ति । अनिरूपितो यो भेदाभेदरूपाविद्याविलासस्तद्दौर्घट्यस्यादोषत्वविश्रम इत्यर्थः । अनिरूपितपदेन निरूपणायोग्यत्वं विवक्ष्यते । अस्मदुक्ते ति । दौर्घट्याङ्गीकारः अस्मदुक्तदोषाङ्गीकाराधीन इति भावः । त्वदुक्तदोषाणां पारमार्थिकविरोधित्वेपि विद्यमानत्वमात्रेणाविरोधात् तदङ्गीकारो न दोषायेति शङ्कते अवस्तुनी ति । दोषाः - त्वया दोषत्वेनाभिमताः । नदोषाः- नास्मदनिष्टावहाः । प्रपञ्च इति । प्रपञ्चे व्यावहारिकव्यवस्थया या त्वयाङ्गीक्रियते तद्विपरीतव्यवस्थाया त्वदुद्भाविता दोषा न दोषास्स्युः, मिथ्यापदार्थस्य तथापि सम्भवात्, एवमिन्द्रियसन्निकर्षाभावादसतः प्रत्यक्षत्वं न सम्भवतीति त्वया असत्ख्यातिनिरसनं चायुक्तं स्यादित्यर्थः । दूषणान्तरमाह वस्तुनि चे ति । दोषोहि स्वरूपविघातकः, सच पारमार्थिके न सम्भवत्येव, पारमार्थिकत्वव्याघातात्, अतः क्वापि दोषो न स्यादित्यर्थः । त्यजे ति । वस्तुन्यपि स्वरूपविघातकत्वं त्वया

न संविदीति चेत्? आशामात्रमेतदिति। विद्याविद्ययोरपि भेदाभेदानिरूपणे कथं शोधकवाक्यावकाशः। कथं चशुद्धविद्यात्मब्रह्मविज्ञानादपवर्ग इति नियमः। तत्स्वरूपादिदौस्थ्यं च स्वदेशे द्रष्टव्यमिति।

अविद्येति विद्याभावस्तदन्यस्तद्विरुद्धो वा कश्चिदर्थः? विद्या च ब्रह्म वा, तदन्यद्वा किञ्चित्? न तावदभावः, ब्रह्मणो देशादिभेदेपि तदयोगात्। न च तदन्यः, अन्याभावस्य सिद्धान्तितत्वात्। तन्मिथ्यात्वादिवर्णनस्यच निस्सारत्वात्। नच तद्वि-

---

ङ्गीकारादिति भावः। नच दोषा अवस्तुन्येव पारमार्थिकत्वविघातका इति वाच्यम्, तथासति प्रपञ्चे पूर्वोक्तविपरीतव्यवस्थाप्रसङ्गस्य दुर्वारत्वात्। ननु संविद्व्यतिरिक्त एव दोषः, न संविदीति शङ्कते न संविदी ति। संविद्व्यतिरिक्तस्यावस्तुत्वादवस्तुनि च दोषाभावस्य त्वयैवोक्तत्वादिदानीं संविदतिरिक्ते दोष इत्युक्तिराशामात्रमेव, नतुस्वाभिलषितार्थसिद्धिरित्याह आशामात्रमिति। दूषणान्तरमाह विद्याविद्ययोरिति। नीलादीनां भेदाभेदयोरनिरूपणीयत्ववत् विद्याविद्ययो रपि भेदाभेदयोरनिरूपणीयतया अनृतजडपरिच्छिन्नत्व[व्यावृत्ति]शोधकसत्यज्ञानादि वाक्यस्य तत्वावेदकत्वम स्यादिति भावः। शुद्धे ति। शुद्धा मिथ्यावस्त्वविषया या विद्या तत्स्वरूप यत् ब्रह्मविज्ञान तस्य शुद्धज्ञानापेक्षया भिन्नाभिन्नतया शुद्धविज्ञानादेवापवर्ग इति कुतो नियम इत्यर्थः। किञ्च अविद्यास्वरूपे हि सिद्धे तद्विलासभेदाभेदयोर्दौर्घट्य न दोषायेत्यपि वक्तुं शक्येत, सैव न सिध्यतीत्याह तत्स्वरूपादी ति। अविद्याया दोषान्तरमाह अविद्ये ति। ... ... ... ... ... देशादी ति। आदिशब्देन कालो गृह्यते। देशकालयोर्बहुत्वेपि व्यापकत्वान्नित्यत्वाच्च क्वापि देशे काले वा तदभावासम्भवादित्यर्थः। न चय ब्रह्मव्यतिरिक्तस्यासत्व भ्रमः, किन्तु मिथ्यात्वमात्रमित्यत्राह तन्मिथ्यात्वे ति। आदिशब्देन व्यावहारिकत्व गृह्यते। मिथ्यात्वस्य निरासात् ब्रह्मव्यतिरिक्तापलापः शून्य एव पर्यवस्येदिति भावः। एव विद्याया ब्रह्मस्वरूपत्वपक्षे दूषणमभिधाय ब्रह्मातिरिक्तत्वपक्षे दोषमाह

रुद्ध , अनाद्यविद्यानुवृत्तिवैयर्थ्यात् । ब्रह्मव्यतिरिक्तस्य तु सर्वस्या विद्यात्मकत्वेन विद्याकोटिनिक्षेपासिद्धे । भ्रान्तिरूपविद्याविरोधित्वे मुमुक्षूपकारकत्वप्रसङ्गात् । किञ्च- यदि दुर्घटाविद्या विश्वकर्त्री, ब्रह्मैवाविद्या स्यात् , निरधिष्ठान एव विश्वभ्रम । तत्वमेव भेदाभेदौ, तत्वावेदकवाक्यान्येवातत्वावेदकानि , सत्यैव नास्ति , शून्य मेव तत्वम् , ज्ञानमेवाज्ञानम् , पूर्वपक्ष एव सिद्धान्त , प्रमाण मेवाप्रमाणम्, अनुपपत्तिरेवोपपत्ति , जय एव पराजय , तत्व ज्ञानमेवातत्वज्ञानम् , इत्यादिजल्पान् किमिति नकल्पयन्ति । कल्प

---

ब्रह्मव्यतिरिक्तस्ये ति । एव ब्रह्मातिरिक्तविद्यापक्षेपि तदन्यतदभावतद्विरोधि रूपविकल्पत्रयमभिप्रेत्य त्रयाणा साधारण दोषमभिधाय विरोधपक्षे प्रातिस्विक दोषमाह भ्रान्तिरूपे ति । ब्रह्मस्वरूपातिरिक्तज्ञाने भ्रान्तेरप्यन्तर्भावा दिति भाव । यद्वा ब्रह्मस्वरूपातिरिक्तस्य कृत्स्नस्यापि मिथ्याविषयतया भ्रान्ति रूपत्वादिति भाव । नचाखण्डाकारवृत्तेर्मिथ्याविषयत्वाभावात् भ्रान्तित्वम्, अत स्तद्विरोधित्वविवक्षाया न दोष इति वाच्यम्, तादृशवृत्त्यवच्छिन्नचैत यस्य तद्वृत्ति भासकत्वेन भ्रान्तित्वानपायात् । किञ्च यदि दुर्घटत्वमविद्याया न दोष , तर्हि अविद्या ब्रह्मैवास्तु, नच ज्ञाननिवर्त्याया अविद्याया ब्रह्मत्वमयायानुपपत्ति , नापि ब्रह्मण एव दोषत्वे तदतिरिक्ताधिष्ठानाभावात् अध्यासानुपपत्ति , दौर्घ व्यस्यादोषत्वादेव, इत्याह किञ्चे ति । नन्वेव दुर्घटत्वादिभिस्तैरनैकान्तवाद स्यैवालम्बने जयपराजयादिव्यवस्थाया अभावे भवद्भिस्ते कथ पराजिता भवे युरिति तदस्यशङ्कामनूद्य परिहरति तत्वमित्यादिना । तत्वमेवभेदाभेदा विस्तरस्य यत् भवद्भिर्ब्रह्म निर्विशेषत्वादिकमुच्यते तदपि तैरङ्गीकृत मेवेति कथ ते निरसनीया इति भाव । तत्वावेदके ति । भवदीयवा क्यानि तत्वावेदकान्येवातत्वावेदकानीति तै कथ ते निरसनीया इति भाव । सत्तैवे ति । प्रतिवादिन एवासत्त्व वदत कथ तत पराजय इति भाव । एवमुत्तरीत्योत्तरत्रापि भाव उन्नेय । तन्निरसने नास्माभिर्यतितव्यमित्याद

यन्तिचेत् ? न नः काचित्क्षतिः । लौकिकाः परिहसन्ति , वैदिकाः प्रतिक्षिपन्ति । किं बहुना स्वयमप्यन्तर्हसन्तीति तानाक्षिपन्ति सन्तः । तथाचानिरूपितरमणीयत्वव्यावहारिकत्वादिविडम्बनमप्यम्बरकुसुमायते, प्रातिभासिकवद्व्यावहारिकस्यापि अप्रामाणिकत्वाविशेषात् । तस्याप्यविचारितरमणीयत्वस्य तैरेवाङ्गीकारात् । तथाच अशेषस्यापि वेदान्तस्य व्यवहारसम्बन्धित्वात् तत्वावेदकातत्वावेदकवाक्ययोः स्वरूपतः प्रवृत्तितो विषयत: फलतो वैषम्याभावात् । तद्वैषम्ये भेदवादप्रसङ्गः ।

---

न न' काचिदि ति । लौकिका इत्यादि । वैदिकत्वभूमिका परिगृह्यानेकान्तवादपरिग्रहादिति भाव । सद्भिः प्रतिक्षेपे हेत्वन्तरमाह तथाचे ति । अनिरूपिते ति भावप्रधानो निर्देशः । अनिरूपितत्वमेव रमणीयत्वमलङ्कारो यस्य व्यावहारिकत्वस्य तद्व्यवस्थायाश्च तेन व्यावहारिकत्वादिना यद्विप्रलम्भन तदर्थशून्यमापद्यते । दुर्घटत्वस्याङ्गीकारादेव व्यावहारिकत्वं तत्तद्व्यवस्थाश्च न सिध्यन्तीत्यर्थः । ननु दुर्घटत्वेपि प्रामाणिकत्वादेव तत्सिद्धिरित्यत आह प्रातिभासिकवदि ति । ततश्च तद्वैषम्य न सिध्येदिति भावः । कथं व्यावहारिकस्य प्रातिभासिकवदप्रामाणिकत्वमित्यत आह तस्यापी ति । प्रातिभासिकस्याप्यप्रामाणिकत्वप्रयोजकतया अविचारितरमणीयत्वस्य तैरेवाङ्गीकारादित्यर्थः । फलितमाह तथाचे ति । व्यवहारसम्बन्धित्वादि ति । व्यावहारिकत्वादित्यर्थः । एव प्रातिभासिकत्वादेवाप्रामाणिकतया व्यावहारिकस्य प्रातिभासिकाद्वैषम्यासिद्धेः वेदान्तादीनामपि व्यावहारिकतया स्वरूपतस्तत्साध्यप्रवृत्तितो विषयतः फलतश्च वैषम्याभावात् सन्तः प्रतिक्षिपन्तीत्यर्थः । वैषम्याङ्गीकारे बाधकमाह तद्वैषम्य इति । प्रातिभासिकत्वव्यावहारिकत्वाभ्या वैषम्यस्य वक्तुमशक्यत्वात् पारमार्थिकत्वापारमार्थिकत्वाभ्यामेव वैषम्यस्य वक्तव्यतया भेदवादप्रसङ्ग इत्यर्थः । ननु अतत्वावेदकवाक्यमपरमार्थविषयम्, तत्वावेदकवाक्य परमार्थ

तत्वावेदकवेद्यं चेद्ब्रह्ममिथ्येति कथ्यते ।
अब्रह्मवेद्यतापक्षे भेदवादः प्रसज्यते ॥

इति शतदूषण्यां संविदद्वैतभङ्गः
त्रयस्त्रिंशो वादः ।



---

विषयम्, इति वैषम्यमस्त्येवेत्यत्राह तत्वावेदके ति । यदि ब्रह्म तत्वावेदकवेद्यमित्युच्यते तदा वचोन्तरेण ब्रह्ममिथ्येत्युक्तं भवति, दृश्यत्वात् । यद्यब्रह्मणस्तत्वावेदकवेद्यत्वमिष्येत तर्हि तत्वावेदकवेद्यस्य पारमार्थिकत्वाङ्गीकारादेव भेदवादप्रसङ्ग इत्यर्थः ।

इति वाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्वयाथात्म्येन
सदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
संविदद्वैतभङ्गः

त्रयस्त्रिंशस्कन्धः ।



श्रीरस्तु

## अथ चतुस्त्रिंशो वादः

हयमुखमुखैस्तत्तद्रूपैरकर्मविनिर्मितै
रुपदिशति यस्तथ्यं पथ्यं सतामवसीदताम् ।
जननपदवीयातायातश्रमापहरां धियं
जनयतु स मे देवः श्रीमान् धनञ्जयसारथिः ॥

अस्ति तावदासर्वेश्वरादस्मदादिपर्यन्तमासंसारमनुवर्तमानो दृष्टादृष्टप्रयोजनः सर्वसैद्धान्तिकसम्मतशिष्याचार्यक्रमः । स एष निर्विशेषैकशेमुषीमात्रपरिशेषमुषितनिरवशेषभुवनस्य न कथञ्चिदपि सङ्गच्छते ।

---

श्रुतिनिरवसितमयुक्तकापिशदकुमन्त्रहतोद्गमस्ववाचाम् ।
विपदुपशमने स एष मन्त्रो भुवि निगमान्तगुरूपदेश एकः ॥

उपनिषदुपदेशं ब्रह्मतत्वार्थकोशं
सुदृढमपि मुनीन्द्रैस्सामनैर्दुष्प्रवेशम् ।
अपि मम विदधानो माद्दशैस्सुप्रवेशं
जयति गुरुरुदारः श्रीनिवासार्यनामा ॥

हयमुखेति। अवसीदतां पथ्यमित्यन्वयः। तेभ्य इति सम्प्रदानमध्याहार्यम् ।

आसंसारमिति। आससारशब्देन ससारावधिरुच्यते, ससारस्यावध्यभावपक्षे कल्पावधिरुच्यते, सर्गप्रभृतिलयपर्यन्तमित्यर्थः। सएष इति। शेमुषीमात्रस्य परिशेषो यथा भवति तथा मुषितकृत्स्नप्रपञ्चस्येत्यर्थः। स्वप्रकाशतया ब्रह्मस्वरूपस्य प्रतिपन्नत्वात् गुणविभूत्योर्मिथ्यात्वेन तत्त्वावेदकश्रुतेस्तद्विशिष्टप्रतिपादकत्वासम्भवात् गुरुशिष्यभेदाभावाच्च उपदेशोऽनुपपन्न इति भावः। कथञ्चिदिति। बिम्बप्रतिबिम्बादाविव काल्पनिकभेदेपीत्यर्थः।

तथाहि- आत्माद्वैतमुपदिशन्नाचार्यः किं शिष्यतया शिक्षणीयं कंचिदपि नोपलभते, उतोपलभते? आद्ये कस्मा उपदिशेत्? न कस्मैचिदितिचेत्? तर्हि नोपदिशेदेव, श्रोतृप्रतिपत्तिप्रयोजकत्वादुपदेशस्य। अन्यथा अरण्यरुदितत्वप्रसङ्गात् आरण्यकोपदेशस्य। स्वस्मा एवेति चेन्न;—उपदेष्टव्यप्रतिपत्तौ नैराकाङ्क्ष्येण श्रोतृत्वासिद्धेः। तदप्रतिपत्तौ वा अज्ञत्वेनानुपदेष्टृत्वात्। द्वितीये तु स्वात्मनोन्यमनन्यंवा? अन्यत्वेपि सत्यमसत्यंवा? नाद्यः, अपसिद्धान्तादिप्रसङ्गात्। न द्वितीयः, मिथ्याभूतस्य शिष्यस्य मिथ्यात्वेनोपलम्भे तदर्थमुपदेशाद्यसम्भवात्। नहि प्रतिबिम्बादित्वेन प्रतीयमानेभ्यः प्रतिबिम्बादिभ्य उन्मत्तो-

---

पदेशस्य सम्प्रदानं नास्तीति शङ्कते नकस्मैचिदि ति। अन्यथे ति। प्रतिपत्तिप्रयोजनकत्वाभावे वेदान्तानामरण्यरोदनवदप्रयोजकत्वप्रसङ्ग इत्यर्थः। कर्ममीमांसानैरर्थक्यं चेति भावः। उपदेष्टव्ये ति। उपदेष्टव्यस्यार्थस्य स्वेन प्रतिपत्तौ बुभुत्साविरहान्न श्रोतृत्वसम्भव इत्यर्थः। अन्यमनन्यंवे ति। उपलभत इत्यनुषङ्गः। अपसिद्धान्तादी ति। आदिपदेन त्वदुक्तन्यायेन वस्तुतोऽन्यत्वे दृग्दृश्यसम्बन्धानुपपत्तेः तदुपलम्भोपि त्वया दुरुपपाद इत्यादिकमभिप्रेतम्। मिथ्याभूतमपि शिष्यं किं मिथ्यात्वेनोपलभते, उत सत्यत्वेनेति विकल्पमभिप्रेत्याद्यं दूषयति मिथ्याभूतस्ये ति। आदिपदेन तदर्थानुष्ठापनं गृह्यते। ननु यद्यन्यस्य स्वरूपतो मिथ्यात्वम्, आचार्योपि तथैवोपलभेत; तदा स्यादेवोपदेशासम्भवः, उपदेशप्रयोजनस्य मोक्षस्य ज्ञाननिवर्त्ये तस्मिन्नसम्भवात्, नन्वेवम्, किन्त्वन्यस्यान्यत्वेनैव मिथ्यात्वम्, आचार्योपि तथैव जानातीति कथमुपदेशासम्भव इत्यत्राह नहि प्रतिबिम्बादित्वेने ति। आदिपदेनाङ्गुरयवष्टम्भादिना प्रतिभासमानद्वितीयपुरुषो गृह्यते। ननु तर्हि स्वरूपतो मिथ्यात्वेनोपलभ्यमानायैव शिष्यायोपदेशोस्तु, चैतन्याभावे ज्ञातेपि पाञ्चालि-

प्युपदिशेत् । पाञ्चालिकादिभ्यो बालिकादिव्यवहारवदिति चेन्न;—मौग्ध्यमन्दीकृतकृत्याकृत्यविवेकानां बालिकादीनां क्रीडारसादि निर्विविक्षया तदुपपत्तेः । अत्रापि तथास्त्विति चेन्न;— स्वपरहृदयविसंवादादपसिद्धान्ताच्च । समूलभेदभ्रमनिर्मूलनाय तत्वमस्याद्युपदेश इति यो मठकमठसम्प्रदायः । मिथ्याभूतं शिष्यं सत्यत्वेनोपलभमानस्तु स्वयं भ्रान्तत्वादननुविधेयवाक्यः स्यात् । स्वात्माद्भिन्नतया सत्यत्वेनोपलभ्यमानाय शिष्याय स्वात्मैक्यमुपदिशन्नाचार्यः विप्रलम्भकश्च स्यात् । कथञ्चासावद्वैतवाक्यश्रवणमहिमनिरशेपितातत्वप्रतिभासे मृषाभूते शिष्ये सत्यतां मंस्यति । अनन्यत्वपक्षे प्यनन्यत्वेनान्यत्वेनवा शिष्यस्य उपलम्भः ? उभयमपि पूर्वोक्तैरेव दूषणैराघूषितम् ।

किञ्चाद्वैतोपदेष्टाचार्यो निवृत्ताविद्यः, उतानिवृत्ताविद्यः ? निवृत्ताविद्यत्वे शब्दार्थतत्प्रतिभासादिभेदगुच्छोच्छेदेन तुच्छहेतुरुपदेश-

---

कादिभ्यः क्षीरदानादिव्यवहारदर्शनादिति शङ्कते पाञ्चालिकादिभ्य इति । मिथ्याभूतमि ति । शिष्यः स्व प्रत्युपदेशादेव स्वस्मिन् गुरोस्सत्यत्वबुद्धिं जानन् तद्विपरीतमिथ्यात्वोपदेशेनाचार्ये भ्रान्तत्वशङ्कया तद्वाक्य नश्रद्धधीतेत्यर्थः । अथवा— मिथ्याभूत शिष्य सत्यत्वेनोपलभमानो गुरुरुपदिशतीति वदतस्तव स्वद्गुरुवाक्ये अश्रद्धा स्यादित्यर्थः । निरशेपिते ति । पूर्वं सत्यत्वेन भेदप्रतिभासः स्थित इति ते सशेष आत्मप्रतिभास इदानीमद्वैतवाक्यश्रवणान्निरशेपित इत्यर्थः । पूर्वोक्तैरेवे ति । अन्यत्वेनोपलम्भपक्षे अननुविधेयवाक्यत्वविप्रलम्भकत्वान्यत्वज्ञानासम्भवाः पूर्वोक्तदोषाः, अनन्यत्वेनोपलम्भपक्षे उपदेष्टव्यप्रतिपत्तितदप्रतिपत्त्योः श्रोतृत्वनकृत्वासिद्धी पूर्वोक्तदोषौ । किञ्चाद्वैते ति । अत्राद्वैत द्वैतमिथ्यात्वम्, तेन उत्तरत्र शब्दार्थेत्यादिना वक्ष्यमाणोर्थोच्छेद उपपद्यते । शब्दार्थे ति । अत्र शब्दार्थनिवृत्तौ उपदेशस्य तुच्छहेतुकत्वे हेतुतया नोक्तौ, शब्दार्थयोरुच्चारणरूपोपदेश प्रति हेतुत्वाभावात्, किन्तु नियतया

स्स्यात्। याधितानुवृत्तिस्तु वाधिता।नचेश्वरकृतेषूपदेशेषु वाधितानुवृत्ति मूलत्वसम्भवः, अनादिसर्वज्ञतया करणपरतन्त्रज्ञानत्वाभावेन तस्य भ्रमतद्बाधितानुवृत्त्यादेरसम्भवात् । " यस्सर्वज्ञस्सर्ववित् " "परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानवलक्रियाचे" त्यादि हि श्रूयते। अस्तु वा वाधितानुवृत्तिसम्भवस्त्वन्मते, तथापि नोपदेशादिप्रवृत्तिसम्भवः। नहि पानीयाभिमाननिवृत्तावपि दोषवशात् प्रकाशमानासु मरुमरीचिकावीचिकासु कश्चित्पिपासति। अनिवृत्ताविद्यश्चेत् भ्रान्तत्वादेव पूर्ववदनाप्तत्वप्रसङ्गः।

किमर्थश्चायमात्माद्वैतोपदेशः? अविद्यानिवृत्त्यर्थ इति चेत् ? किमुपदेष्टुः; उत श्रोतुः, उतोभयोः, अथोभयव्यतिरिक्तस्य ? नाद्यः, पूर्वमेव तस्य निवृत्ताविद्यत्वात्। अनिवृत्ताविद्यत्वे परोपदेशेन स्वभ्रमनिवृत्त्ययोगात्। परोपदेशजनितपरमादृष्टप्राबल्यादिति तु सम्भवन्नप्यर्थः प्रपञ्चसत्यत्वभयाद्भवता नावलम्ब्यते। नापि द्वितीयः, उपदेष्टृज्ञानस्याविद्यानिवर्तकत्वमस्ति नवा? अस्तिचेत्तेनैव शिष्याविद्याया अपि निवृत्तावुपदेशनैष्फल्यम्। नास्तिचेत्, तर्हि

---

शब्दः प्रतिपाद्यतयार्थः, हेतुत्वेन तत्प्रतिभासश्रवणादिकमपेक्षितम्, तत्रचापेक्षिते उक्तरूपभेदे उपदेशहेतुभूतप्रतिभासाद्यभावात् उच्छिन्ने तुच्छहेतुक उपदेशस्स्यादित्यर्थः। तुच्छशब्दस्समुदायपरः। करणपरतन्त्रेति। तथात्वे हि तद्दोषात् भ्रमस्स्यादिति भावः। यस्सर्वज्ञ इति। नचैवम्भूतस्य भेदभ्रमस्सम्भवतीति भावः। गुरोर्बाधितानुवृत्तिमभ्युपेत्याह अस्तुवेति। पानीयाभिमानेति। अप्रामाण्यशङ्काशून्यजलभ्रमनिवृत्तावित्यर्थः। ततश्च शिष्यादिरसत्य इति ज्ञातवतो गुरोर्न तदर्थमुपदेशसम्भव इत्यर्थः। अनिवृत्तेति। तत्वज्ञाने सत्यविद्यानिवृत्तेरावश्यकत्वेन तत्वज्ञानस्याभावादित्यर्थः। निवृत्ताविद्यत्वादिति। उपदेष्टुः तत्वज्ञानवत्वादिति भावः। परेति। समानाधिकरणतत्वज्ञानस्यैव भ्रमनिवर्तकत्वादिति भावः। अस्तिचेदिति। गुरुज्ञानस्याविद्यानिवर्तकत्वे

तत एव शिष्यज्ञानस्याप्यविद्याया अनिवर्तकत्वादुपदेशनैष्फल्यम् । नच तृतीयः, उक्तदोषसमुच्चयप्रसङ्गात् । नापि चतुर्थः, अतिप्रसङ्गात्; नहि देवदत्ताय सर्पाभावोपदेशेन यज्ञदत्तस्य सर्पभ्रमो निवर्तते । तथाच सति सर्वतत्वसाक्षात्कारिषु ईश्वरादिषु जागरूकेषु क्वचिदपि कस्यचिदपि भ्रमानुदयप्रसङ्गात् । यश्च

---

अविद्याया एकत्वेन तत एव शिष्यस्यापि निवृत्ताविद्यत्वादुपदेशनैष्फल्यमित्यर्थः । ततएवे ति । गुरुज्ञानस्याविद्यानिवर्तकत्वाभावादेवेत्यर्थः । अविशेषादिति भावः ।

यदाह– नवीनः, परोक्षज्ञानात् प्रतिबद्धापरोक्षज्ञानाद्वोपदेशसम्भवान्नाय दोषः, तत्वनिर्णयः सदुपदेशो वक्ष्यते ; नतु साक्षात्कारः प्रतिबद्धसाक्षात्कारो वा, धर्मानुपदेशप्रसङ्गात् । एतश्च शिष्यो जानन्नपि अप्रतिबद्धापरोक्षज्ञानं स्वयं सम्पादयामीत्याचार्यमुपसर्पति, गुरुरप्येकजीवत्वं जानन्नपि स्वस्मिन्नपरोक्षज्ञानाभावदर्शनात् तदर्थं मुख्यमधिकारिणं प्राप्योपदिशतीति न कोपि दोषः । अपरोक्षज्ञानिन एवोपदेशनियमे तु "आचार्यवानि" त्यादिशास्त्रानुरोधेन परमेश्वर एव स्त्रीशरीरेण कबन्धाथर्वणवच्छिष्यविश्वासास्पदं शरीरविशेषं परिगृह्य तच्छरीरेणोपदिशति । तद्यथा "मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानाः तस्यासीद्भार्या गन्धर्वगृहीता तामपृच्छाम कोऽसीति, सोऽब्रवीत् कबन्ध आथर्वण इति, सोऽब्रवीत् पातञ्चल्य काप्य" मित्यादिना श्रूयते स्त्रीशरीरे प्रविश्य कबन्धाख्यो गन्धर्वस्सन्नन्तर्यामिणश्चोपदिदेशेतीत्यनवद्यमिति ॥

तन्न, कृतनिदिध्यासनैरप्युपदेशात् । नच तेषामपि अप्रतिबद्धापरोक्षज्ञानं न जातमिति वाच्यम्, मानाभावात् । नच संसारोपलम्भ एव मानम्, जीवन्मुक्तेप्यपरोक्षज्ञानाभावप्रसङ्गेन जीवन्मुक्तिविलयापातात् । बाधितानुवृत्तिश्च न कल्प्यते । यदि 'जीवन्मुक्ताभवन्ती' त्यादिवचनबलात् निदिध्यासनादेरपरोक्षज्ञानहेतुत्वप्रमाणबलाच्च जीवन्मुक्तिर्बाधितानुवृत्तिश्चाङ्गीक्रियते, तदा पूर्वेषामपि केषाञ्चिन्मुक्तिश्रुतेर्निदिध्यासनादेरपरोक्षज्ञानहेतुताश्रुतिबलाच्चापरोक्षज्ञानं मुक्तिश्च स्यात्, इदानीं संसारोपलब्धिश्च बाधितानुवृत्त्या स्यात् ।

नित्यनिवृत्ताविद्य ब्रह्मेति भाषते, स कथं ब्रह्माविद्यानिवृत्त्यर्थं उपदेश इत्युपदिशेत् । अस्तु तर्हि निष्प्रयोजन एवायमुपदेश इति चेन्न;— 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् । नच वस्तुतो न कश्चित्कस्मैचिदुपदिशतीति वाच्यम्, व्यावहारिकव्यवस्थया सर्वस्य निर्वाह्यत्वेनाभ्युपगमात् । अन्यथा स्व-

---

तथाच वृत्त त्यक्त्वरस्यशङ्करादीनामुपदेशपरम्पराप्रयासेन । यदिच पूर्व मुक्तिश्रुतिरर्थवादमानम्, तदा जीवन्मुक्तिवचनमपि तथा स्यात् । नचातीतकल्पेष्वपि ब्रह्मोपदेष्टॄणामपरोक्षज्ञानमङ्गे तदानीमेवाविद्यानिवृत्तौ तत्पूर्वमपि तथाप्रसङ्गे नित्यमविद्यास्वरूपासिद्धिप्रसङ्गादपरोक्षज्ञानादिना अविद्यानिवृत्त्यादिश्रुतिविरोध, तथाच नैवमिति वाच्यम्, अतीतकल्पेपूपदेशस्य त्वया दुरुपपादत्वात् । उपदेशा हि स्वोपदेशपरम्परया कस्यचिदपरोक्षज्ञानायोपदिशेत्, नचानुत्पादितब्रह्मसाक्षात्काराया एव उपदेशपरम्पराया प्रलयेन विच्छेद भाविकल्प च जानत ईश्वरस्य प्रथममुपदेशस्सम्भवति, उपदेशे वा भ्रान्तस्स्यात्, नचेश्वरोपदेशाभावे तदर्वाचामुपदेशस्सम्भवतीति ।

किञ्च भाविकल्पान्तराज्ञानात् भाविहिरण्यगर्भादीनामज्ञानाच महाप्रलये नानान्तरप्रलयेनच इदानीन्तनोपदेशपरम्पराविच्छेदज्ञानादस्यापरोक्षज्ञानाभावनिश्चयादिदानीन्तनोपदेशपरम्पराया एतत्कलियुगेनैव विच्छेदे भाविकृतादौ महर्षिभिस्स्यै विद्याप्रवर्तनवचनाच्च इदानीमुपदेशो व्यर्थ ।

किन्च — ईश्वरो द्वाभ्या शिष्याभ्या नोपदिशेत्, एकपरम्परायामेव परोक्षज्ञाननिश्चयात् ।

एतेनैव कलन्धाधर्षणन्यायोऽपि प्रत्युक्त । किन्च ईश्वरस्य शास्त्रवश्यत्वाभावेन विधिवदुपसन्नशिष्याय प्रवचनविधिरपात्रे ब्रह्मविद्याप्रदाननिषेधश्च न स्यात् । जीवस्य चेश्वरकृतोपदेशप्रतिसन्धान न स्यात् ।

व्यावहारिकेति । व्यावहारिक- प्रयोजनोद्देशो वाच्य इत्यर्थ । अन्यथेति । मिथ्यात्वादेव स्वाङ्गीकृतस्योपदेशस्यानुपपादनीयत्वे तद्वदेव प्रतिवादिनिर्णय

सिद्धान्तसमर्थनस्येव परसिद्धान्तदूषणस्याप्यसिद्धौ परेषामेव विजयित्वप्रसङ्गात्। दूषणसमर्थनप्रयोजनाभावेपि प्रयोजनसद्भावभ्रममूलोयमुपदेशभ्रम इति चेत्? हन्त पुनरपि समीचीनमेव तत्वविस्त्वमुपदेष्टुरुपपादितम्। माभूत्तत्ववेदित्वम्, तथापि स्वमसिद्धशिष्याचार्यवद्व्यवहार इति चेत्? हन्त तर्हि सिद्धान्तान्तरशिष्याचार्यादिव्यवहारात्को विशेषः? नहि जिनसुगतादिशिष्याचार्यव्यवहारात् प्रतिभासते भवतां विशेषः, येन वैषम्यं वक्ष्यसि। विशेषस्तत्वविषयत्वमिति चेन्न;– तत्वविषयत्वस्याप्यतत्वकोटिनिवेशेन पुनरप्यविशेषात्। तत्वातत्वविषयताव्यवस्थापनस्य तस्यापातरमणीयाभिमानमात्रसारत्वाविशेषात्। अस्त्वविशेषः, को दोष

---

स्यापि मिथ्यात्वेन तद्दूषणस्याकर्तव्यतया तदसिद्धौ परेषामेव विजयित्वप्रसङ्ग इत्यर्थः। दूषणे ति। उपदेशो हि अद्वैतरूपस्वमतसमर्थनम् - द्वैतरूपपरमतदूषणं चेत्युभयात्मकः, तादृशस्योपदेशस्य प्रयोजनाभावेपि प्रयोजनभ्रममूलोऽयमुपदेशभ्रम इत्यर्थः। स्वाचार्यस्य तत्वविस्त्वाभावेपि स्वप्नोपदेशवदस्त्विति शङ्कते माभूदि ति। व्यवहारः- उपदेशाचरणम्। तर्ही ति। आचार्यस्यातत्वविस्त्वाविशेषादिति भावः। नहीत्या दि। नही ति काकुगर्भम्। जिनसुगतादिशिष्याचार्यव्यवहारात् भवता शिष्याचार्यव्यवहारे विशेषो न प्रतिभासत इत्येतन्नास्ति किन्तु अस्त्येवेत्यर्थः। येने ति। विशेषप्रतिभासे हि वैषम्यं वक्तुं शक्यमित्यर्थः। ननु सिद्धान्तेप्युपदेशस्य तत्वविषयत्वादेव हि मतान्तराद्वैषम्यम्, तत्पूर्वपक्षिणोऽपि तुल्यमिति शङ्कते विशेष इति। तत्वविषयत्वस्ये ति। तत्वविषयत्वस्य मिथ्यात्वेन तदभावस्य उभयत्राविशेषादित्यर्थः। ननु तत्वविषयत्वतदभावाभ्यां वैषम्यं न ब्रूमः, किन्तु तत्वविषयत्वातत्वविषयत्वाभ्यामित्यत आह तत्वातत्वे ति। मूलभूतन्यायसामीचीन्यतदभावौ हि तत्वातत्वविषयत्वव्यवस्थापकौ, त्वदभिमतन्यायसामीचीन्यं च तत्र तथास्माभिरुपपाद्य एव, सामीचीन्याभिमानमात्रं तु त्वन्मते तुल्योर-

इति चेन्न;— परिग्रहबहिष्कारादिव्यवस्थाभङ्गप्रसङ्गात् । सापि व्यवस्था समीचीनताऽसमीचीनतामोहहेतुकेति चेत् ? तर्हि जित मनायासेन सर्वेस्त्वद्विरोधिभि , त्वन्मतपरिग्रहस्य त्वयैव समी चीनताभ्रमहेतुत्वकण्ठोक्ते । परमतस्यापि त्वयैवासमीचीनताभ्रम- विषयत्वाभिधानेनार्थतस्तद्विपरीतसमीचीनत्वस्यैव समर्थितत्वात् । सर्वमप्यसमीचीनमिति तत्त्वस्थितावस्माकमेव जय इति चेत् ? अस्यैव वाक्यार्थस्य समीचीनत्वाऽसमीचीनत्वयो सर्वासमीची नत्वासिद्धे । एतस्याप्यसमीचीनत्व सर्वासमीचीनत्वान्तर्गतमिति चेन, दुष्परिहरस्वव्याघातनिरयनिपातस्य बहुशोन्यत्र स्थापनात् । तदलमनेन व्रणकिणभूषणशष्कुलीजनसध्रीचा व्याहतवाचा भूष णाभिमतेन दूषणाभिधानेन ।

एव आत्मैक्य स्वाभाविकमभ्युपगच्छता भास्करयादवमतानु सारिणाप्युपाधित स्वतो वा भेदेपि सार्वज्ञ्यज्ञत्वसङ्करादेरपरिहरणीय त्वादुक्तोपदेशानुपपत्तिरपरिहार्या । स्वाभाविकैक्येतु स्वाभाविक भेदो व्याघातादपि निरस्त एव । औपाधिकोपि भेदो न प्रतिसन्धानपरिपन्थी, (तथान्त करणभेदोपिन प्रतिसन्धान) अन्यथा

---

विशिष्टमित्यर्थ । परिग्रहे ति । अविशिष्ट जानता त्वया स्वीयाना परिग्रह तेषा बहिष्कार इति व्यवस्था हेत्वभावान्न स्यादित्यर्थ । परिग्रह —प्रामा णिकत्वेनाभ्युपगम , बहिष्कार — अप्रामाणिकत्वबुद्धि । आदिपदेन तन्मूलो व्यवहारो गृह्यते । ननु समीचीनमसमीचीनमिति विभागो नास्त्येव, सर्वमप्य समीचीनमेव, इदमेवास्माकम्मतमिति शङ्कते सर्वमि ति । प्रसङ्गात् स्वाभा विकभेदाभेदवाद दूषयति स्वाभाविके ति । अपिशब्देन उपदेशानुपपत्ति गृह्यते । अभेद स्वाभाविक , भेद औपाधिक, इति मतमपि प्रसङ्गाद्दूष यति औपाधिक इति । नप्रतिसन्धानपरिपन्थी ति । तथाच नाप्रतिसन्धा नार्थमौपाधिकभेदकल्पनमिति भाव । ननु सौभर्यादिशरीरेषु प्रतिसन्धानमन्त

सौभरिदेहेष्वीश्वरावतारभेदेष्वप्यप्रतिसन्धानप्रसङ्गात् । यथा त्र चक्षुरादिकरणभेदः पाणिपादाद्यवयवभेदश्च न प्रतिसन्धानं प्रति रुणद्धि तथान्तःकरणभेदोपि न प्रतिसन्धानं प्रतिरोद्धुमलम् । अतएव सर्वगुणदोषसङ्करो दुर्वारः, निर्विकारनिरवद्यश्रुतिविरोधोपीति कृतमप्रसक्तोपालम्भेन । अतः परमार्थनिरुपाधिकात्यन्तात्मभेदमन्तरेण नोपदेशसम्भवः ।

ननु परस्परं शिष्याचार्यादिभावेनावस्थितेषु भगवदवतारेषु परमार्थत आत्मभेदाभावेपि व्यवस्था सुस्था, फलं चास्त्येव किञ्चित्, तत्रेश्वरमायापुरस्कारः परिष्कारश्शङ्करमतस्य, उपाधिभेदाभिधानेतु भास्करोदयमत्यूपः, विभागशक्तिवैभववादस्तु यादवराज्याभिषेकः, गत्यन्तरन्तु प्रमाणपथिकप्रान्तरं- सम्भवदपि समानमस्माकमिति प्रतिबन्दिमुखेन श्वावराहकलहावतारे कस्ते निस्तार इति ।

अत्रब्रमः- अस्ति हि समस्तसमाधानहेतुरीश्वरलीला, स भगवान् पुरुषोत्तमः स्वमाहात्म्यानुगुणलीलाप्रवृत्तः स्वेच्छया स्वीयमेव रूपं विचित्राकारं परिणमय्य तत्तज्जातीयोचितमभिनीय निखिलजगदुज्जिजीवयिषया शिष्याचार्यादिभावमप्यभिनीय स्वोपदेशानुष्ठानादिभिर्धर्मसंस्थापनं लोकनिर्वाहादिकं च निर्वर्तयतीति किन्नोपपद्यते। उक्तं च-

---

करणभेदाभावात्, तद्भेद एव प्रतिसन्धानप्रतिबन्धकः, इत्यत्राह यथाचे ति। अतएवे ति। एतादृशभेदस्य व्यवस्थापकत्वाभावादित्यर्थः। परमार्थे त्यनेन मायिमतव्यावृत्तिः। निरुपाधिके त्यनेन भास्करमतव्यावृत्तिः। अत्यन्तपदेन यादवमतव्यावृत्तिः। अत्यन्तत्वञ्च स्वाभाविकैक्यासामानाधिकरण्यम्। मायापुरस्कारः- मायाधीनभेदपुरस्कारः। भगवल्लीलैव निस्तार इत्याह अस्तिही ति। तद्विवृणोति सभगवानिति। उक्तंचे ति। मत्स्याद्यङ्गीकारे सर्वाङ्गस्थले व्यवहारा-

न्यायाचार्यैरपि "मायावत् समयादय" इति । नच युष्मच्छिष्याचार्येष्वपि इयमेव रीतिः रिति वक्तुं शक्या, परस्यैवा भावेन परार्थत्वासिद्धेः । दुःखमयत्वेन केवलं स्वार्थत्वायोगात् । अस्माकमपीश्वरस्य तु स्वव्यतिरिक्तानन्तसंसारिचेतनसद्भावेन तदर्थं स्वलीलारसोचिततत्तत्संव्यवहारोपपत्तेः । चिन्मात्रस्य तु निर्विशेषत्वेन कथं लीला ? कथञ्चेश्वरत्वम् ? नचार्वाचीनेषु तादृशलीला–सम्भव इत्युक्तम् । अतो वास्तवं जीवभेदं जीवेश्वरभेदं चानभ्युप गच्छतां मोक्षार्थोपदेशादिप्रवृत्तिर्न सम्भवतीति ।

इति शतदूषण्यां उपदेशानुपपत्तिः

चतुस्त्रिंशो वादः ।

---

भावेन व्युत्पत्तिग्रहो नोपपद्यत इत्यत्रोत्तमुदयनेन 'मायावत् समयादयः' इति । इदंच तेनैव विवृतम्– यथा सूत्रसञ्चाराधिष्ठितदारुपुत्रकादिषु भिदमानयेति प्रयुङ्क्ते स च दारुपुत्रकस्त तथा करोति, तथा चेतनव्यापारादिव तद्विदि बालोऽपि व्युत्पाद्यत एव, तथेहापि स्यादिति । एवं प्रतिबन्दीं पराकृत्य इदानीमीश्वरस्यापि शिष्याचार्यव्यवहारः परमतेनुपपन्न इत्याह चिन्मात्रस्येति ।

इति वाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां उपदेशानुपपत्तिः

चतुस्त्रिंशस्कन्धः ।

श्रीरस्तु।

## अथ पञ्चत्रिंशो वादः।

यन्मायमोहितात्मानो यान्मायामोहितं विदुः।
तत्प्रपद्य तदुक्तोय तिरोधिरवधूयते ॥
यदाहुर्ब्रह्मघातिनो ब्रह्मविदो ब्रह्मस्वरूपमविद्यातिरोहितमिति।

---

यदि ति। मायामोहित मिति स्वात्मनि मायाधीनभेदमोहत्वमुच्यते। इदञ्च परैस्तिरोधानस्याङ्गीकारे हेतुतयोक्तम्। पूर्वपक्षमनुवदति यदाहुरि ति। " यो दूषयति सम्मोहाद्वासुदेवं जगत्पतिम्। सर्वलोकैककर्तारं तं विद्याद्ब्रह्मघातुकम्॥ यः प्रवृत्तां श्रुतिं सम्यक्छास्त्रं वा मुनिभिः कृतम्। दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातुकम्॥ " इत्यादिप्रमाणानि हृदि निधायाह ब्रह्मघातिन इति। यद्वा ब्रह्मघ्नन्तीति ब्रह्मघातिनः, प्रकाशविनाशस्यैव तिरोधानत्वात्तिरोधानोक्त्या ब्रह्मविनाश एवोक्तस्स्यादिति भावः। दूषयन्ति हि कलिब्रह्ममीमांसकाः ब्रह्मणो मोहं तद्विभूतेस्तत्सर्गस्य च मिथ्यात्वं वदन्तः, तथा श्रुतिसूत्राणि चापार्थप्रतिपादनेन दूषयन्ति। ब्रह्मविद इति सोपहासोक्तिः। अब्रह्मविद इति वा पदम्। अयं भावः— आत्मा हि स्वयम्प्रकाशोऽशनायादिरहितः, स च नित्यमुक्तनिरतिशयानन्दब्रह्मैवेति सकलश्रुतिस्मृतीतिहासपुराणप्रसिद्धम्। तथापि अहमित्यनुभूयमानोऽपि स केनापि पूर्णानन्दब्रह्माहमस्मीति नानुभूयत इति सर्वसम्मतम्। तथाच स्वप्रकाशात्मकचैतन्याभिन्नतया प्रशस्तप्रकाशस्यापि पूर्णानन्दस्याप्रकाश आवरणाधीन एवेति।

अत्र केचित्— अज्ञानञ्च चिन्मात्रविषयम्, प्रकाशमाने तत्र तदयोगात्; आवरणकृत्यानिरूपणाच्च। तथाहि नानावरणं नास्ति न प्रकाशत इति व्यवहारः, व्यवहारो हि अभिज्ञा अभिलपनं वा? नास्तीत्यादिभ्रान्तेरावरणसाध्यत्वेनावरणत्वायोगादाद्यः। अत एव नान्त्यः, तस्योक्तभ्रान्तिसाध्यत्वेन भ्रान्तिहेत्वावरणत्वायोगात्। सुषुप्तौ व्यवहाराभावेनानावरणाच्च। नाप्यस्ति प्रकाशत इति व्यवहाराभावः, व्यवहारस्याभिज्ञात्वे स्वरूपाभिज्ञाया इदानीमपि सत्त्वात् वृत्तेश्च मोक्षेप्यसत्त्वात्; अभिलपनत्वे मोक्षेप्यावरणापातात्।

नापि नास्तीत्यादिव्यवहारयोग्यत्व अस्तीत्यादिव्यवहारायोग्यत्व वा, उभयोरप्यारोपितत्वेनावरणं विना ऽयोगात् । अद्वितीयत्वादिविशिष्टे तथा व्यवहारे व्यवस्थाश्रयेऽपि असन्दिग्धाविपर्यस्तत्वेन प्रकाशमाने अध्यासाधिष्ठाने सदा प्रकाशमाने सुखादिज्ञानरूपे चिन्मात्रे तदभावेन तत्त्वरूपयोर्योग्यत्वायोग्यत्वयोरभावाच्च । तयोरप्यनित्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वविरुद्धत्वेन इदानीमप्यभावाच्च । नचानित्यत्वे सत्यपरोक्षव्यवहारयोग्यतात्यन्ताभावानधिकरणत्वस्वप्रकाशत्वम्, उक्तयोग्यताप्रागभावश्चावरणमित्यविरोधः; स्वरूपप्रकाशाप्रयुक्तयोग्यताया अनादित्वात् । इदानीं योग्यतारूपप्रकाशस्य प्रागभाव, मोक्षे तु ध्वंस इति मोक्षेऽप्यप्रकाशापातात् । भवति हि दिनात्पूर्वमिव पश्चादप्यप्रकाशः । नन्वावरणकृत्यानिरूपणेऽपि प्रकाशमाने अज्ञान युक्तम्, साक्षिणस्तत्साधकत्वेन तदविरोधित्वात् । इदानीं हि त्वदुक्तमर्थं न जानामीति प्रकाशमान एवाज्ञानम् । अज्ञानावच्छेदकविषयस्याभाने तदवच्छिन्नाज्ञानज्ञानायोगात् । नच सामान्येन ज्ञाते विशेषेणाज्ञानमिति वाच्यम्, सामान्यस्याज्ञातत्वेनाज्ञानानवच्छेदकतया तदवच्छेदकविशेषस्यैव ज्ञातव्यत्वात् । अनित्यानिवृत्तिः स्वात्ममात्रविषयत्वाद्वृत्तिविशेषादेव । एकविषयत्वेऽपि वृत्तिचित्तोरज्ञानविरोधित्वाविरोधित्वे शङ्खश्वैत्यप्रत्यक्षानुमित्योः पीतत्वभ्रमविरोधित्वाविरोधित्ववद्युक्ते । तस्मात् प्रकाशमाने आवरणकृत्याभानेऽप्यज्ञानमविरुद्धमिति मम सिद्धान्तरहस्यमिति ।

उच्यते—त्वदुक्तार्थं न जानामीत्यत्र न भासमाने अज्ञानम्, गुहान्तरसच्छन्नमितिवत् अनावृतसामान्यावच्छेदेनैवाज्ञानानुभवात् । एवञ्च तद्विशेषस्तदाश्रय प्रति तत्सामान्यज्ञानमिव तद्विशेषावच्छिन्नाज्ञानज्ञान प्रति तत्सामान्यज्ञानमेव हेतुः, तथा दर्शनात् । नहि विशेषे ज्ञाते तदज्ञानधीर्दृष्टा । सामान्यविशेषभाव एव नियामक इति नातिप्रसङ्गः । युक्तं च द्वैपरत्वे दृष्टत्वेऽपि द्विष्टस्येष्टत्वाभाववदज्ञातज्ञानाभावेऽप्यज्ञानज्ञानम् । एतावन्त कालमिममर्थमित्थं नाज्ञासिषमित्यनुभवान्तराद्धिविशेषानवच्छेदासिद्धिः । नच विशेषविषयाज्ञानानुभवे विशेषज्ञानमपि विशेषणज्ञानतया हेतुरिति वाच्यम्, अस्मन्मते तस्य विशेषणत्वानभ्युपगमात् । अस्तु वा वृत्तिरेवाज्ञानविरोधिनी, सापीदानी-

मस्ति, विवरणे ' जीवाराराइशृतिपगिगतान्त करणेन जीवोऽभिव्यज्यते, अन्यथा सुपुप्तिरि ' स्युतं ., पर्यादिज्ञानानामपि तदवच्छिन्नचिद्विषयत्वाच्च । नन विशिष्टचैतयस्यजीवविषया पराग्वच्छिन्नचैतन्यविषया या वृत्तिभिदायारवा ज्ञानाविरोधिनीति युक्तम्, दण्डी चैत्र इति वृत्या चैत्राज्ञाननिवृत्यापातात् ।

अप्रकभिदार — अहमित्यहन्त्वेन प्रकाशमानेप्यात्मनि अनवच्छिन्नब्रह्मानन्दात्मकत्वेनाप्रकाशमानत्वात् असत्यानन्दे नास्ति न प्रकाशत इति व्यवहारयोग्यता अलीत्यादिव्यवहारायोग्यता च । नचाचैतन्ये सत्यपरोक्षव्यवहारयोग्यस्वरूपस्वप्रकाशत्वविरोध , अप्रभेदेन योग्यत्वायोग्यत्वयोरसत्वात् । यद्वा - अनेथत्वे सत्यपरोक्षव्यवहारयोग्यतात्यन्ताभावानधिकरणत्व स्वप्रकाशत्वम् , उक्तयोग्यताप्रागभावश्चावरणमित्यविरोध., प्रागभावस्यैवावरणत्वस्यत्वात् एवममादाय न मोक्षेप्यावरणप्रसङ्ग । प्रकाशमानेपि चैतन्ये नाज्ञानविरोध , साक्षिप्रकाशस्याज्ञानसाधकत्वात् । स्वदुक्तमर्थन्न जानामीत्यत्राप्यज्ञानविषयविशेषणज्ञानमस्त्येव, विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वात् । किञ्च यत् ज्ञानविषयो न भवति तदेवाज्ञानविषय इत्युपेयम् । घटादिक तु ज्ञानविषय , कस्य चिद्भास्य त्व्न् , चित्तु न ज्ञानविषय , स्वप्रकाशत्वात्, तथाच चिन्मात्रमेवाज्ञान विषय । किञ्च— अज्ञानजन्यातिशययोगित्व तद्विषयत्वम् , सत्रातिशयो विक्षेप आवरण चेति तदुभय चित एव सम्भाव्यते, नतु तदन्यस्य, तस्य जडत्वेन स्वत एवावृतत्वात् । विक्षेपस्य चावरणपूर्वकत्वात् । तस्मादतोऽपि चिन्मात्र तद्विषय । वृत्तिस्त्वज्ञानविरोधिनी । नचाहमिति वृत्तेर्घटादिविषयवृत्तेश्च चिद्विषयाया इदानीमपि सत्वादज्ञाननिवृत्तिस्स्यादिति वाच्यम्, शुद्धाच्छादकाज्ञान प्रति अखण्डाकारान्त करणवृत्तेरेव विरोधित्वेन इदानीमहंवृत्तिसत्वेपि तद ज्ञानाविरोधात् । अहम्प्रत्ययस्याध्यासत्वेनाध्यासानिवर्तकत्वाच्च । विशिष्टाज्ञानस्य ततो निवृत्तावपि विशेष्यचिन्मात्राज्ञानानिवृत्ते । नच विशिष्टाज्ञानस्य विशेष्याज्ञानव्याप्तत्वात् तन्निवृत्तौ विशेष्याज्ञाननिवृत्ति स्यादिति वाच्यम् , विशेषणाज्ञानप्रयुक्तविशिष्टाज्ञाने व्यभिचारेण व्याप्त्यभावात् । अन्यथा अय घट इति घटज्ञानमात्रान्मोक्षप्रसङ्ग , सर्वत्र चित एव विशेष्यत्वात् , तस्य एकत्वाच्च ।

नहि निर्गुणे विधिनिषेधाय कृतो निर्वापो विष्णवे भवति । तस्माद्विशिष्टनिष्ठक्रियाया विशेष्यगामित्वनियमाभावात् अद्वृत्त्या न चिन्मात्राश्रयाज्ञाननिवृत्तिरिति ।

अत्र ब्रूमः — अनवच्छिन्नानन्दस्य स्वप्रकाशात्मकस्वरूपाभिन्नतया तद्-प्रकाशोऽसिद्ध एव । नन्वनवच्छिन्नानन्दत्वप्रकारकप्रकाशाभावोऽस्तीति चेत् ? अनवच्छिन्नानन्दत्वस्य स्वरूपात्मकत्वस्यैव वक्तव्यतया तस्य तत्र प्रकारत्वासम्भवात् । प्रमेयस्य प्रमेयमितिवत् प्रकारत्व सम्भवतीति चेन्न,- घटस्सन् अहं स नित्यादिप्रतीतौ इदं रजतमित्यत्र इदन्त्वस्येव सत्त्वस्यापि सदात्मकाधिष्ठाने प्रकारत्वात्, तस्यैवानवच्छिन्नानन्दत्वात्मकत्वेन तत्प्रकारकप्रकाशस्यापि सत्त्वात् । किञ्च अनवच्छिन्नानन्दत्वप्रकारकप्रकाश किंप्रकाशस्वरूपम्, अतिरिक्तो वा ? नाद्य, स्वरूपस्य नित्यत्वेनाज्ञानसहस्रेणापि तदभावसम्पादनायोगात् । स्वरूपस्य नित्यत्वेऽपि इदानीन्तनानवच्छिन्नानन्दत्वप्रकारकत्वाभाव आवरणाधीन इति चेन्न, अनवच्छिन्नानन्दत्वप्रकारकत्वस्यापि स्वरूपत्वे तदभावायोगात्, स्वरूपाति-रिक्तत्वे मिथ्यात्वेन मोक्षे तदभावात्मकावरणप्रसङ्गात्, मोक्षदशायामिदानीञ्च तत्प्रकारकत्वाभावेन आवरणसत्त्वासत्त्वयोस्तद्व्यासासम्भवेन च तस्य निरुपाख्यतया तदभावस्याज्ञानाधीनत्वासिद्धे । अनवच्छिन्नानन्दत्वप्रकारकप्रकाश स्वरू-पातिरिक्त इति द्वितीयपक्षोऽप्यनुपपन्न, वृत्त्यात्मकताहशप्रकाशाभावस्य वेदान्तश्रवणादिकारणाभावाधीनतया आवरणानपेक्षणात्, स्वप्रकाशत्वेन प्रसक्तप्रकाशे तस्मिन्नावरणकृत्यासम्भवाच्चेति त्वद्गुरुवचनवैयर्थ्याच्च ।

किञ्च — अनैक्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वविरोधात् तदयोग्यत्वरूपाप्रकाशमानत्वसम्भव, नचांशभेदमादाय तदुपपत्ति, अवयवात्मकस्य धर्मात्मकस्य वा अंशस्यासम्भवात् ।

यच्च यद्वेत्यादि, तदसत्, स्वरूपप्रकाशप्रयुक्तयोग्यताया इदानीमपि सत्त्वेन तत्प्रागभावरूपावरणासम्भवात् । किञ्च—उक्तयोग्यताया मिथ्याभूताया मोक्षदशाया प्रपञ्चाध्यासरूपसंसारदशाया चासम्भवात् आवरणनिवृत्त्यनिवृत्त्योस्तदध्यासासम्भवाच्च सा तुच्छैव, कुतस्तत्प्रागभावात्मकमावरणम् ।

किञ्च प्रकाशमाने कथमज्ञानम्? न च साक्षी अज्ञानभासकत्वान्न तद्विरोधी, त्वदुक्तमर्थं न जानामीत्यत्राज्ञानावच्छेदकविषयत्वादिति वाच्यम्; तत्राप्यनावृतसामान्यावच्छेदेनैव वस्तुनो विशेषविषयाज्ञानानुभवात् ।

यदुक्तम् — विशेषणज्ञानतयाज्ञानावच्छेदकविशेषज्ञानमपेक्षितमिति ; तन्न, अनावृतसामान्यपुरस्कारेण विशेषाज्ञानानुभवाद्दिन· अज्ञानावच्छेदकविशेषे विशेषणत्वस्यैवानिरुक्तत्वात् । नचान्यज्ञानादन्याज्ञानानुभवेऽतिप्रसङ्गः, सामान्यावच्छिन्नज्ञानस्य विशेषावच्छिन्नाज्ञानानुभवकारणत्वात्, सामान्यविशेषभावस्यैव नियामकत्वात् ।

यदपि किञ्च यत् ज्ञानविष इत्यादि ; किमत्र ज्ञानविषयत्वाभावस्याज्ञानविषयत्वव्याप्यत्वं विवक्षितम्, उत ज्ञानविषयत्वस्याज्ञानविषयत्वाभावव्याप्यत्वम्? नाद्यः, तत्र न तावत् ब्रह्मणि व्याप्तिर्ग्राह्या, पक्षत्वात्; घटादौ च नान्वयव्याप्तिग्रहः, ज्ञानविषयत्वाभावलक्षणस्य व्याप्यस्यासिद्धेः, साध्यानङ्गीकाराच्च, नापि व्यतिरेकव्याप्तिस्तत्र ग्राह्या, अज्ञानविषयत्वाभावलक्षणव्यतिरेकस्य तत्रासम्प्रतिपत्तेः । नापि यो यदा ज्ञानविषयो न भवति स तदा अज्ञानविषय इति वा व्याप्तिर्घटादौ ग्राह्या, मुक्तिकालीनब्रह्मणि अज्ञानज्ञानविषयत्वयोरन्यतरप्रसङ्गात् । न द्वितीयः, उक्तन्यायेन ब्रह्मघटयोर्व्याप्तिग्रहासम्भवादेव । अस्ति च यद्यदा प्रकाशते तत्तदा अज्ञानविषयो न भवतीति व्याप्तिः । तथाचेदानीं प्रकाशमाने ब्रह्मणि कथमज्ञानम्?

यच्च किञ्चाज्ञानजन्येत्यादि, तन्न, घटादेः स्वत एवावरणात् आनन्दांशस्यापि स्वत एवावरणसम्भवात् । ननु स्वत एवानन्दावरणे मोक्षेऽप्यानन्दाप्रकाशः स्यादिति चेत्? आनन्दांशस्य चैतन्यांशाभेदे कल्पिते निवृत्ते प्रकाशाविरोधात् । विषयासम्भवादज्ञानासम्भववादिनं प्रति तत्सविषयत्वसिद्धप्रकारेण युक्त्युपन्यासस्यासङ्गतत्वात् । किञ्च — अज्ञानस्य सविषयत्वं हि घटं न जानामीत्यनुभवात्सेयम्, तथाच धर्मिग्राहकमानसिद्धं घटादिविषयत्वमिति कथं तदभावः । तत्रावरणप्रयोजनाभावेऽपि प्रयोजनान्यप्रमाणसिद्धतृणदुर्गन्धादि

यदनिरूपितत्वात् प्रयोजनाभावात् घटादिभ्यस्तद्विषयत्वापत्तेर्वा । अनुगतवृत्ति-रेवाज्ञानविरोधिनी, तथापीदानीमप्यहमित्यादिवृत्तेरसत्त्वादज्ञानं निवर्तेत ।

यदत्रोक्तम् — शुद्धाच्छादकेत्यादि, तत्र किमखण्डाकारकत्वम्? यत्र-खण्डविषयत्वम्, तत्तत्राप्यस्त्येव । यद्यखण्डप्रकारकत्वम्, तदपि न हि अस्ति ज्ञाने सत्त्वप्रकारके सत्त्वाभिन्नत्वादानन्दस्याप्यनेनैवोक्तम् । नाप्यसत्त्वाविषयत्वं तत्, प्रागगृहीतद्रव्यत्वादिविषयस्य भ्रमरूपस्य इदं रजतमिति ज्ञानस्य द्रव्यत्वाद्यज्ञाननिवर्तकत्वात् ।

यदप्युक्तं विशिष्टज्ञानस्य ततो निवृत्तावपीत्यादि, तत्तुच्छम्, अत्र हि वैशिष्ट्यज्ञाननिवृत्त्या विशेष्याज्ञाननिवृत्तिरापाद्यते, तस्याश्च व्याप्तौ न क्वापि व्यभिचारः, तत्रश्चानभिमतां व्याप्तिं परिकल्प्य दूषणं स्वसमृध्यडिम्भप्रलोपनमानम् । विशिष्टज्ञानस्याव्याप्तत्वं नहि विशिष्टाज्ञाननिवृत्त्या विशेष्याज्ञाननिवृत्त्युपयोगि, नच वा सतीर्थ्येनमुक्तम्, 'दण्डी चैत्र इति वृत्त्या चैत्राज्ञानाभिभवापातादि' त्येव तैरुक्तत्वात् । अतस्तदभिप्रायविपर्ययाया तद्व्याप्त्युपन्यासो विरुद्धः । तदुपन्यासेन च तद्व्याप्तिमुपजीव्य तद्व्यापकीभूतविशेष्याज्ञाननिवृत्त्यापादनानुवादश्च विरुद्ध एव । अभाव्यानुगुण्याय व्यस्तपदेन व्यापकत्वनिरूपणाय उत्तरत्र व्यभिचारोद्भावनमसङ्गतम् ।

यच्च 'विष्णव' इत्यादि तदपि न, एवं सति तेनैव विशिष्टज्ञानस्य विशेष्यव्यवहारजनकत्वमपि न स्यादिति । किञ्च— अनतिरिक्तदेवतानां विना विष्णवे शिपिविष्टाय कृते निर्वापे कथमिव विष्णवे न भवेत्? नच विष्णवे वा विधिवल्प्राप्तविशिष्टोद्देश्यताया विरोधिनी स्यात् । तस्मात् —

> इदन्तभ्रमहतस्य व्यस्ततीर्थाभिधानम् ।
> कुणगोमिनहतस्य क्रोष्टुसिंहाभिधानम् ॥

तस्मात् सर्वथा दुर्निरूपमेवावरणमिति ।

अत्र— नवीन — नास्ति न प्रकाशत इति व्यवहारयोग्यता अस्ति प्रकाशत इति व्यवहारयोग्यता वा आवरणम् । ननु

योग्यताप्यविद्याकृता तदावरणजन्यैव वक्तव्या, अधिष्ठानावरणं विना आरोपायोगादिति । ततोऽन्यदावरण कार्यमित्यवस्थेति चेत्? न, अविद्यायास्तस्याप्यनादित्वेन हेत्वनपेक्षणात् । नन्वात्मा स्वप्रकाशश्चेत् सदास्तीत्यपरोक्षव्यवहारयोग्यो वक्तव्य, तत् कथ तस्य विपरीतव्यवहारयोग्यता ? तदयोग्यताया विरोधादिति चेन्न, – चैतन्यानेयत्वस्यैव स्वप्रकाशरूपत्वात्, तस्य च तदविरोधित्वात् । अस्तु वा अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्व स्वप्रकाशत्वम्, तथापि न दोष, कल्पितयोग्यतायोग्यत्वयोरास्तवापरोक्षव्यवहारयोग्यत्वाविरोधात् । ननु–अनादित्व कल्पितत्वानुपपत्ति, अविद्याधीनत्वानुपपत्तिश्चेति चेन्न ;– अविद्यादिवदनादित्वस्य तत्सम्बन्धवच्च तदधीनस्थितिकतया तत्प्रयुक्तत्वस्याविरोधात् । ननु यदि ब्रह्मस्वरूपमावृतम्, तर्हि साक्ष्यप्यविद्ययाभिव्येतेत्यायात माध्यमदोषस्य जगत, तद्रूपप्रकाशाभावात् जगत, नचेत्, ब्रह्मणोऽप्यावरण न स्यात्, अनावृताभिन्नत्वात्, इतिचेत्? अस्ति तावच्चैतन्यव्यवहारादानन्दव्यवहारस्य भेद, प्रवृत्तिनिमित्तभेदात्, आनन्दपदे च वृत्तिगतानन्दत्वमेव प्रवृत्तिनिमित्तम्, तदात्मकतयाभिव्यक्तब्रह्मस्वरूपे ज्ञानत्वानन्दत्ववैशिष्ट्यप्रतीति, ततश्च एकस्मिन्नपि आनन्दो नास्ति न प्रकाशत इति व्यवहारानुभवात् तद्योग्यत्वमस्तीत्यानन्दरूपेणावृतत्वम्, न तद्योग्यतेति चैतन्यरूपेणानावृतत्वम्, तस्मादेकमेव निरंशमतिशयानन्दैकरस चैतन्यमावृत चेत्युपपद्यते । अथवा चिन्मात्राश्रयादज्ञानादनादिचिदानन्दभेदाध्यासादज्ञानमानन्दमावृणोति, न चैतन्यमिति व्यवस्था, नन्वेवमपि गुञ्जापुञ्जारोपाधिष्ठानदहनवदिवत् स्वप्रकाशे आनन्दात्मनि ब्रह्मणि अनवभासारोपेपि तदुचिते कार्यं स्यादिति चेत्, किन्त दुचितकार्यम्? किमविद्यानिवृत्ति, उत नास्तीति व्यवहारविच्छेद, किं वाहमतिशयानन्द इति व्यवहार, किंवा सुखेच्छया पुत्रादिक्षुद्रविषयानन्वेषणम्, अथवा आत्मनि प्रेमा, किंवा तृप्ति ? नाद्यद्वितीयौ, स्वरूपस्फुरणस्याविद्यासाधकस्याविद्यातत्कार्याविरोधित्वात् । न तृतीय, अविद्यावरणेन प्रतिबद्धत्वात् । नचतुर्थ, स्वरूपस्य नास्तीत्यादिव्यवहारप्रतियोगित्वेन पुत्रादेश्च सुखजनकत्वभ्रमेण तदुपपत्ते । पञ्चमस्त्विष्यते । नापि षष्ठ, इदानीं स्फुरतोप्यानन्दस्य नास्ति न प्रकाशत इति व्यवहारयोग्यताप्रतियोगितया अस्ति प्रकाशत इति व्यवहार

तत्र किमिदन्तिरोधानम् ? किमिन्द्रियसम्बन्धनिवारणम्,

---

योग्यताभावेन वा नष्टस्वीयसुखवत् आविद्यकभेदप्रतियोगितया वा पुरुषान्तरसुखवदिच्छाविरोधितालक्षणतृप्तिरूपताया अभावात् । तस्मात् ब्रह्मणोऽनाद्यविद्यावरणे न काप्यनुपपत्तिरिति । प्रयोगश्च- अहं ब्रह्मेति व्यवहारसामग्रीसम्पन्नः प्रत्यगात्मा अहं ब्रह्मास्मीति व्यवहारप्रतिकूलधर्मवान्, तत्सामग्र्यां सत्यां तदभाववत्त्वात्, तद्विपरीतव्यवहारवत्त्वाद्वा ; यदेव तदेवम्, यथा भ्रमगृहीत शुक्तिकेति ; तत्राह तत्रेति ।

> आरोपितोऽपि तमसा निल्याय दीप.
> पश्यत्पदङ्गपटलीमिव सम्पतन्तीम् ।
> आगामिनोऽपि कथनानल्पमस्मदार्यं
> सूक्तिच्छटातनमत विहितोपरोद्धुम् ॥

स्वप्रकाशतया प्रसक्तप्रकाशे ब्रह्मणि प्रकाशाभावसिद्धये ह्यावरणं कल्प्यते, तत्र कः प्रसक्तः प्रकाशः ? किं स्वरूपप्रकाश एव, उत वृत्तिप्रकाशः ? नाद्यः, स्वप्रकाशतायास्तदप्रसञ्जकत्वात्, तदभेदे प्रसज्यप्रसञ्जकभावस्तम्भयति । स्वरूपस्य प्रसक्ततया विवक्षितत्वे तन्निवृत्तिरेवावरणसाध्येति स्यात्, तच्चानुपपन्नम्, अनङ्गीकृतं च । न द्वितीयः, जडेऽपि वृत्तिप्रकाशसम्भवेन स्वप्रकाशतयेति हेतूपन्यासवैयर्थ्यात् । स्वप्रकाशताया वृत्त्यापादकत्वं चासिद्धम्, वृत्तेरन्तःकरणपरिणामतया तदसाध्यत्वात् । तत्त्वेऽपि वा कारणान्तराभावादेव तदभावोपपत्तिः । ननु प्रकाशशब्देन व्यवहारो विवक्षित इति चेन्न ;– स्वप्रकाशतायास्तदापादकत्वासिद्धेरेव, व्यवहारस्य वृत्तिसाध्यत्वात् । अतः प्रयोजनाभावादावरणकल्पनमनुपपन्नम् । दुर्निरूपत्वादप्यावरणमनुपपन्नमित्युपपादयितुमावरणं विकल्पयति किमिदमिति । यद्यपि इन्द्रियसम्बन्धादिनिराकरणं पूर्वपक्षिण. आवरणत्वेनानभिमतम्, स्वाभिप्रायस्य पूर्वपक्षे तेनैवान्यथावर्णनात्, तथापि ज्ञानवैकल्यापादकतया तिरोधानत्वेन शङ्कितुं योग्यता एतेषामेव पक्षाणाम्, न तु तदभिमतस्य, व्यवहारप्रतिबन्धकाभासतादेरावरणत्वासिद्धेः । किञ्च तत्त्वतोऽधिष्ठाने प्रकाशमानेऽप्यासासम्भवादधिष्ठानाप्रकाशसिद्ध्यर्थमावरणं कल्पनीयम्,

रिन्द्रियसम्बन्धस्य तद्विषयतानिवर्तनम्, यद्वा सर्वेषामपि ज्ञानानां तद्विषयतापाकरणम्, अथवा स्वस्य स्वकर्मताव्यपोह, स्वप्रकाशभङ्ग एव वा, विशदस्वरूपस्याप्यविशदस्वरूपत्वापादनं वा, प्रकाशसामग्र्यनुप्रविष्टस्य भावनिरासो वा, अनिरूपणीयस्वरूपमन्यदेव वा किञ्चिदिति । नाद्य, अशक्यत्वात् । तथाहि- सम्बन्धशब्देन किं सामान्यतस्सम्बन्धमात्रं विवक्षितम्, तद्विशेषो वा ? आद्ये त्विन्द्रियाणां श्रवणश्चारोपणीयत्वारोपणाधिकरणत्वादिसम्बन्धोऽपि न स्यात् । तथाच सति तेषामेवासिद्धौ किन्तत्सम्बन्धनिवारणा

---

साहाय्य प्रयोजनमेष्वेव पक्षेषु सम्भवति, ननु पूर्वपक्ष्यभिमतपक्षे, येना ध्यासप्रतिबन्धो माभूदित्यावरण कल्प्यते, प्रतिबन्धकाभावसम्पादनाय तस्य ☐ रकत्वेनैव्यनिष्फलत्वात् । इन्द्रिये ति । इन्द्रियसम्बन्धनिवारकत्वं कुड्यादेरावारकत्वा दिति भाव । तद्विषयतानिवर्तनमि ति । ज्ञायमान एव घटे दैवादुत्पन्नस्य तमसस्तद्विषयतानिच्छेदकस्यावारकत्वादिति भाव । सर्वेषामि ति । अनुमि त्यादिपरोक्षज्ञानस्यापीत्यर्थ । स्वकर्मताव्यपोह इति । घटस्य ज्ञानकर्मताव्यपोह हेतोस्तमस आवारकत्वादिति भाव । स्वप्रकाशभङ्ग इति । घटप्रकाशभञ्जकस्य तमस आवारकत्वादिति भाव । अविशदस्वरूपत्वापादनमि ति । उत्तरस्थल एवानन्तरमपरोक्षज्ञानेन घटादेरवैशद्यापादकत्वात्तमस इति भाव । प्रकाशसा मग्र्यनुप्रविष्टे ति । अनुप्रविष्टपद अनुप्रविष्टत्वपरम्, तस्यैव तमस घटाद विषयतया सामग्र्यनुप्रवेशनिरासकत्वात्, सामग्रीविघटने हि तदनुप्रविष्टत्व- निरासो भवतीति भाव । सम्बन्धशब्देने ति। मात्रपद कार्त्स्न्यपरम्, ततश्च निराकरणमभावमात्र विवक्षितम्, ननु ध्वस , यावत्सम्बन्धप्रतियोगिकाभावश्च सा मान्याभाव एव । यद्वा मात्रपद व्यवच्छेदपरम्, ततश्च सामान्यतस्सम्बन्ध मात्र विवक्षितमित्यनेन विशेषतस्सम्बन्धो न विवक्षित इति गम्यते, तेनच सामान्यावच्छिन्नप्रतियोगिकाभावो लभ्यते, एव चात्र विकल्पे इन्द्रियसम्बन्धे विच्छेदस्सामान्याभाव एव पर्यवस्यति, तेन उत्तरत्र किं सर्वविशेषनिषेध इति विकल्पकोट्युत्थिति, तस्य यावद्विशेषाभावपरत्वात् । आरोपणीयत्वे ति ।

पेक्षया । तदसिद्धिरपि नास्माकं दोषायेति चेन्न, भवगति [शेष] श्मार्थानामिद्धिमङ्गम्य भवद्भिरनभ्युपगमात्, अन्यथा व्यावहारिकप्रत्यक्षतन्मूलानुमानादि व्यवहारव्यवस्थापि न सिद्ध्येत् । इन्द्रियोत्पत्तिवादिन्य श्रुतयश्च प्रकुप्येयु । द्वितीयेतु किं सर्वविशेषनिषेध, कतिपयविशेषनिषेधो वाभिमत ? पूर्वन्तु पूर्वेणैव दत्तोत्तरम्, निर्विशेष न सामान्यमिति हि न्यायविद । उत्तरत्रापि स विशेष किं ज्ञानोत्पत्त्यनुपयुक्त सयोगादिमात्रलक्षण, उततदानुगुण्यविशेषित इति ? अनुपयुक्तत्वपक्षे तिरोधानशब्दानुपपत्ति, सर्वव्यापिनि ब्रह्मणि सर्वाधिष्ठाने सोपि सम्बन्धो दुर्निवारश्च । पक्षान्तरेतु

---

अधिष्ठानाध्यस्यमानभाव इत्यर्थ । आदिशब्देन तादात्म्यादिर्गृह्यते । असिद्धाविति । पारमार्थिकत्वानङ्गीकारादारोपाभावेन मिथ्यात्वासिद्धेश्च निरुपाख्यत्वमेवापत्तामित्यर्थ । अस्माकमिति । ब्रह्मव्यतिरिक्तस्य सत्त्वमनङ्गीकुर्वतामित्यर्थ । ननु अन्यत्रावगमात् सिध्यङ्गीकारेपि इन्द्रियसिद्धिर्नेष्यत इति चेत् ? तत्राह अन्यथेति । इन्द्रियाणा व्यावहारिकसत्त्वस्याङ्गीकारे प्रत्यक्षस्य तन्मूलानुमानादिप्रमाणाना तत्प्रमेयाणा प्रमाणसाध्यतद्व्यवहारव्यवस्थायाश्चासिद्धिप्रसङ्ग इत्यर्थ । व्यवहारो हि उपादेयज्ञानात् प्रवृत्ति हेयज्ञानान्निवृत्तिरिति व्यवस्थया दृश्यते । आदिशब्देन परिशिष्टप्रमाणप्रमेययोस्सङ्ग्रह । अनुमानादीति च्छेद । अपिस्समुच्चये । तस्मादिन्द्रियस्यासिद्धौ ब्रह्मण कृत्स्नस्य तद्व्यतिरिक्तस्यापि निरुपाख्यता स्यादित्यर्थ । श्रुतय इति । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इत्याद्या श्रुतयो विवक्षिता । द्वितीय इति । विशेषावच्छिन्नप्रतियोगिकाभावपक्षे । सर्वेति । तत्तद्विशेषावच्छिन्नप्रतियोगिकयावदभावकूट इत्यर्थ । पूर्वेणेति । सामान्याभावदूषणेनेत्यर्थ । ननु सामान्याभावपक्षोक्तदूषण कथमत्र स्यात्, सामान्याभावविशेषाभावयोर्भिन्नत्वादित्याशङ्क्य, "निर्विशेषन्न सामान्यमि" ति न्यायेन विशेषाभावे सामान्यस्याप्यभावात् तत्रोक्तमेव दूषणमत्रापीत्यभिप्रायेणाह निर्विशेषमिति । सयोगादीत्यादिशब्देनाधिष्ठानाध्यस्यमानसम्बन्धो विवक्षित । पक्षान्तरेत्विति।

किमिदमैन्द्रियकत्वेन सम्प्रतिपन्न ज्ञान साधिष्ठान जगद्गृह्णाति, उत निरधिष्ठानम् ? आद्ये त्वारोपितवत् अधिष्ठानस्यापि शुक्तिरजतादिष्विदमर्थस्येव तत्प्रतीतिविषयत्वाविशेषात् कथमिव तन्निवर्तनीयम् । द्वितीये त्वपसिद्धान्तो निरधिष्ठानभ्रमापातश्च । नच ब्रह्मव्यतिरिक्त किमप्यधिष्ठानं ब्रूषे । अत एव न तृतीयोपि ; उक्तेन न्यायेन सर्वेषामपि ज्ञानाना तद्विषयत्वात् । अन्यथा कथ ब्रह्मविषयाजडत्वस्वप्रकाशत्वसत्यत्वविचारसङ्कथा॰ प्रवर्तेरन् । नापि चतुर्थ , भवतैव तदनभ्युपगमात् । अन्यथा ब्रह्मण एव साक्षाद्दृश्यत्वप्रसङ्गात्। अतिरोहितदशाया विषयत्वविषयित्वलक्षण

---

यत्र ज्ञानशब्देन ब्रह्मव्यतिरिक्त स्वमतिकल्पित किञ्चित् ज्ञान विवक्षितम्, उत सम्प्रतिपन्नघटादिज्ञानमेव ? नाद्य॰, तादृशज्ञाने मानाभावादित्यभिप्रेत्य द्वितीय पक्ष दूषयति किमिदमि ति । साधिष्ठानमि ति। अधिष्ठानमुपलक्षणम्, नविशेषणम्, कचिदधिष्ठाने वस्तुतोऽध्यस्त विषयीकरोति उत वस्तुतोऽधिष्ठानशून्यमेवाध्यस्त विषयीकरोतीति विकल्पार्थ । आद्येत्वि ति। अध्यस्तविषयकज्ञानत्वस्याधिष्ठानविषयकत्वव्याप्तेश्शुक्तिरजतादिज्ञानेषु दर्शनादित्यर्थ॰ । शुक्तिरजतादिषु — शुक्तिरजताध्यासस्थलेष्वित्यर्थ । शुक्तिरजत प्रतीतौ यथेदमर्थोवभासते तद्वदित्यर्थ । तत्प्रतीती त्यत्र तत्पदेनारोपित गृह्यते । द्वितीयेत्वि ति। किं जगद्विषयकज्ञान भ्रमरूपम् , उत न, इति विकल्पमभिप्रेत्य द्वितीय शिरो दूषयति अपसिद्धान्ते ति। आद्य दूषयति निरधिष्ठाने ति। ननु न वयमधिष्ठान निषेधाम , किन्तु ब्रह्मणोऽधिष्ठानत्व मित्यत्राह नचे ति। तदङ्गीकारे चापसिद्धान्त, सदधिष्ठानत्वाभावेन सत्त्वानुपपत्तिश्चेति भाव॰ । अतएवे ति । *ब्रह्मरूपाधिष्ठानग्रहणस्यावश्यकत्वादित्यर्थ ।* अन्यथे ति। कस्यापि ज्ञानस्य ब्रह्मविषयत्वाभाव इत्यर्थ । धर्मिज्ञानाभावादनुमित्याद्यविषयत्वाच्चेति भाव । अन्यथे ति। ब्रह्मण स्वकर्मत्वाङ्गीकारे । साक्षादि ति। उपाधिमनपेक्ष्येत्यर्थ । तथाच मिथ्यात्वादिप्रसङ्ग इति भाव । अतिरोहिते ति। तिरोधाननिवृत्ते कदाचित्कर्तव्यत्वादिति भाव॰ । ननु

स्वभाववैशिष्ट्येन भेदसत्यत्वप्रसङ्गाच्च । नापि पञ्चमः, स्वप्रकाशशब्देन किं स्वगोचरं प्रकाशान्तरं विवक्षितम्, स्वरूपमेव वा ? नाद्यः, दत्तो त्तरत्वात् । द्वितीये तु स्वप्रकाशभङ्ग इति किं सिद्धस्य प्रकाशस्य विनाशो विवक्षितः, उत सेत्स्यत उत्पत्तिप्रतिबन्धः ? पूर्वत्र नश्वरत्वं ब्रह्मणः प्रसज्यते ; ततश्च श्रुतिविरोधः, निरधिष्ठानभ्रमप्रसङ्गादयश्च पूर्वोक्ताः पार्ष्णिं गृह्णीयुः । उत्तरत्र ब्रह्मानादित्वभङ्गः । एवंच ब्रह्मस्वरूप घातिन्यविद्या स्वयमसती किमाश्रया तिष्ठेत् । तस्यास्तदन्तरेणापि सिद्धौ सत्यत्वप्रसङ्गः । नच षष्ठः, प्रत्यक्षैकस्वरूपे स्वात्मनि पारोक्ष्य

---

आवरणनिवृत्तावपि तदानीं न स्वधर्मताप्रसङ्गः; तदानीमविद्याया अपि निवृत्ततया कार्यत्वेन तदुपादानकत्वनियतस्य धर्मत्वस्याप्यभावादिति चेन्न; — कदापि ब्रह्मण्यविद्यमानस्य धर्मत्वस्य ब्रह्मण्यभावः ब्रह्मस्वरूपप्रयुक्त एव स्यात्, न त्वविद्याप्रयुक्त इति । दत्तोत्तरत्वादि ति । दृश्यत्वनिबन्धनैरावरण निवृत्तिनिबन्धनैश्च दोषैर्दूषितत्वादित्यर्थः । निरधिष्ठाने ति । स्वात्मकस्वविषयप्रकाशनिवृत्तिनिवृत्तौ पुनस्स्वविषयत्वप्रसङ्गेन दृश्यत्वादिप्रसङ्ग इति आदिशब्देन विवक्षितम् । पक्षद्वयेपि दोषान्तरमाह एवञ्चे ति । स्वरूपघातिनी त्यनेन निवर्तकत्वं प्रतिबन्धकत्वं च विवक्षितम् । तस्या इति । कश्चिदधिष्ठाने अनभ्युपगमादिति भावः । वैशद्यावैशद्ये किं प्रतीतिगते विवक्षिते, उत प्रकाश्यगते, इति विकल्प्य प्रथमं शिरो दूषयति प्रत्यक्षे ति । प्रत्यक्षरूपस्यापि ज्ञानस्य क्वचिद्विषये पारोक्ष्यं च दृश्यते, यथा दण्डवद्गार्गीदित्यादौ, अत्र हि अयमिति विशेष्यांशे प्रत्यक्षत्वम्, दण्डांशे तु परोक्षत्वम्, तत्र दण्ड साक्षात्त्वेनानुभवात्, देवदत्त साक्षात्त्वेनानुभवाच्च; अतः आत्मन्यपि परोक्षत्वविरुद्धमित्याह - एके ति । स्वरूपे प्रत्यक्षैकरूपत्वनियमेनेत्यर्थः । यस्त्वनुमित्यादिवृत्त्यवच्छिन्नतया स्वरूपेपि पारोक्ष्यं स्यात् तदा न स्यादि पेति प्रत्यक्षैकस्वरूपेत्याह स्वात्मनी ति । वृत्त्यनवच्छिन्नस्वरूप इत्यर्थः ।

लक्षणवैशद्यापादनायोगात् । अन्यथा स्वात्मभङ्गप्रसङ्गात् । निर्विकारे निर्विशेषे वस्तुनि विषयातिरेकलक्षणवैशद्यस्यापि दुर्निरूपत्वात् । वेदान्तजन्यवृत्तिविशेषविषयत्वमेव वैशद्यमिति चेन्न, प्रकाश्यातिरेकाभावे धारावाहिवदनुपकारकत्वात् । प्रकाश्यातिरेके सविशेषत्वस्यावर्जनीयत्वात् । नापि सप्तम, स्वरूपभूतप्रकाशस्यामाश्रयत्वेन सामग्रीनैरपेक्ष्यात्; तद्गतस्यातद्गतस्य वा प्रकाशान्तरस्य तद्विषयस्यानभ्युपगमात् । अभ्युपगमे वा सधर्मकत्व

---

अन्यथे ति । अवैशद्यापादनाङ्गीकार इत्यर्थ । स्वात्मभङ्गप्रसङ्गा दिति । पारोक्ष्यस्यापारोक्ष्यविरुद्धतया सवियुत्त्वमात्रे पारोक्ष्यापादनासम्भवात् यावदाश्रयभाविनश्च तस्य आश्रयनिवृत्ति विना निवृत्त्ययोगेनाश्रयस्यापि निवृत्तिप्रसङ्ग इत्यर्थ । ततश्च पारोक्ष्यस्य निराश्रयस्यापादनमेवानुपपन्नमिति भाव । ननु विषयातिरेक एव ज्ञाने वैशद्यम्, तदभाव एवचावैशद्यमित्याशङ्क्याह **निर्विकार इति** । वस्तुपद प्रकाशपरम् । स्वात्मनीति शेष । निर्विकारे निर्विशेषेन वस्तुनि, सति-प्रकाशे सतीत्यर्थ । विषयातिरेकस्य वैशद्यरूपत्वे मुक्तिदशाया विषयातिरेकात्मकस्यानावरणम्, अन्यथा ससारादविशेषप्रसङ्गात्, तदानीं विषयातिरेकश्च किं तदानीमिवोत्पन्नैर्धर्मै, उत ससारकालीनैरेव तदानी ममासमानैर्मुक्तिकाले भासमानैर्धर्मैरिति विकल्पमभिप्रेत्य आद्य आह **निर्विकार इति** । नच सदोत्पन्नस्यापि धर्मस्यापारमार्थिकत्वाच निर्विकारत्वविरोध इति वाच्यम्, मुक्तयन्वयिनस्तस्य पारमार्थिकत्वापत्ते । द्वितीय दूषयति **निर्विशेष इति** । मिथ्याभूतविशेषस्यापि मुक्तावसम्भवाद्वैशद्यस्य तदानीमेवाभावा दिति भाव । अर्थगतमेव वैशद्यमिति द्वितीय पक्ष शङ्कते वेदान्ते ति । विशेषशब्देनावधारणत्वाप्रतिबद्धत्वादिक विवक्षितम् । अनुपकारकत्वादि ति । विशद व्यवहाराहेतुत्वादित्यर्थ । ततश्च नेद वैशद्यमिति भाव । सविशेषत्वस्ये ति । तत्त्वावेदकवृत्तिप्रकाश्यत्वेन सत्यत्वादिति भाव । किञ्च उक्तवृत्तिविषयत्वस्य ससारदशायामेव भावेन इदानीमनावरण मोक्षे आवरणमिति वैपरीत्यापत्तिश्च द्रष्टव्या । तद्गतस्याभ्युपगम दोषमाह सधर्मकत्वे ति । ब्रह्मण इति शेष. ।

दृश्यत्वादेर्दुर्निवारत्वत् । तन्मिथ्यात्वे तदर्थसामग्रीनैष्फल्यं स्यात् । भ्रान्तिज्ञानोत्पत्तिसामग्रीविच्छेदस्य च दोषत्वाप्रसिद्धेः। प्रतिबन्धकाभावस्य हेतुत्वमनभ्युपगच्छतां सप्तमस्य पक्षस्य दुर्घटत्वाच्च। अष्टमस्तु कष्ट. पक्षो विकल्प्यते । किन्तदधिष्ठानभूतं ब्रह्म प्रकाशप्रतिपक्षभूतम्, उत तदनुगुणम्, अथोदासीनमिति ? आद्ये पूर्वोक्ता एव दोषाः। द्वितीये असाध्यस्य किं तदानुगुण्येन। साध्यत्वे च प्रागुक्ता दोषाः। प्रकाशानुगुणे च कथन्तिरोधानवाचोयुक्तिः । प्रकाशमानेच कथमध्यास. ।

---

पक्षद्वयेपि दोषमाह दृश्यत्वे ति । आदिपदेन मिथ्यात्व गृह्यते । किं स्वप्रकाशस्सत्यो मिथ्यावेति विकल्पमभिप्रेत्याद्ये अद्वैतहानेः स्थ स्यात् द्वितीय दूषयति तन्मिथ्यात्व इति । संसारदशाया तत्सामग्र्य-नुप्रविष्टतया तदानीमप्रकाशोत्पादनायोगान्मोक्षदशायामेव तदुत्पादन वाच्यम्, तच्च न सम्भवति, तदानीं मिथ्याविषयत्वासम्भवात् , ततश्च सामग्रीनैष्फल्य-मित्यर्थः ; ततश्च स्वरूपस्यातिरिक्तप्रकाशाजनकत्वादन्यत्र क्लृप्तप्रकाशजनकता-वच्छेदकतावच्छेदकानवच्छिन्नत्वाच्च तज्जननायोग्यत्वमेव स्यादिति भावः ; किञ्च तस्य प्रकाशान्तरस्य स्वरूपप्रकाशादधिकविषयत्वमस्ति नवा ? नचेत् ! तत्सामग्र्यनुप्रविष्टस्यस्वरूपापादनेपि ब्रह्मण आवृतत्वञ्च स्यात् , चक्षुषा साक्षा-त्क्रियमाणे घटे साक्षात्कारान्तराभावमात्रेणावृतत्वाव्यवहारात् , इत्यभिप्रेत्य प्रथमे ब्रह्मव्यतिरिक्ततया तस्याधिकस्य मिथ्यात्वात् तत्प्रकाशस्य भ्रान्तित्व-स्यावश्यम्भावात् तत्सामग्रीविच्छेदनस्य च दोषत्वमनुपपन्नम्, प्रत्युत गुणत्व-मेवेत्याह भ्रान्तिज्ञाने ति। पूर्वपक्ष्युपन्यस्त पक्ष दूषयितुमाह अष्टमस्त्वि ति । तदिति । अस्ति प्रकाशत इति व्यवहारायोग्यत्वं नास्ति न प्रकाशत इति व्यवहारयोग्यत्व चेत्येतदुभयमित्यर्थः । पूर्वोक्ताः – पञ्चमपक्षोक्ताः । द्वितीये किं प्रकाशो ऽसाध्यः; उतसाध्यः ? आद्ये असाध्यप्रकाशस्य वृत्त्यनुपकार-कत्वात्तदानुगुण्याङ्गीकारो, व्यर्थ इत्याह असाध्यस्ये ति । द्वितीय आह साध्यत्वेचे ति । तस्य साध्यप्रकाशस्य ब्रह्मस्वरूपानतिरेके ब्रह्मणस्साध्यत्व प्रसङ्ग इत्याह प्रागुक्ता इति । अतिरेके च सत्यत्वादि प्रसङ्ग. इत्याह प्रागुक्ता इति ।

प्रकाशमान एवाधिष्ठाने सर्वत्राध्यास इतिचेत्; तर्हि किन्तिरोधान प्रयासेन । यथावत्प्रकाशमानेऽध्यासायोगादिति चेन्न ;- निर्विशेषस्य स्वप्रकाशस्याविद्याशतेनाप्ययथास्वरूपप्रकाशत्वापादनायोगात् । तद्योगे वा निर्विशेषत्वादिभङ्गप्रसङ्गात् । तृतीयेप्यजागरूकस्तनवदनुपकारकत्वमेव ।

---

युक्तियोगः । यथावत्प्रकाशमाने ऽध्यासायोगादिति वदता अयथावत्स्वरूप प्रकाशत्वापादनाय वा यथावत्स्वरूपप्रकाशनिवृत्तये वावरणमित्युक्तं भवति तत्र न द्वितीय. पक्षो युज्यते, ब्रह्मणोपि नाशप्रसङ्गात्, अयथावत्स्वरूपप्रका शापादनमपि किं विद्यमानस्यैव प्रकाशस्य तादृशधर्मापादनम्, उत तादृश धर्मविशिष्टप्रकाशोत्पादनम्? नाद्य, मिथ्याभूतस्य तस्य धर्मस्यापादनेपि पर मार्थतो यथावत्स्वरूपप्रकाशस्य विद्यमानतया अध्यासानुपपत्ते· सत्यभूतस्यैव तादृशधर्मस्यापादनं वक्तव्यम्, तस्यैव यथावत्स्वरूपप्रकाशविरोधित्वात्, तच्चा नुपपन्नम्, ब्रह्मणो निर्विशेषत्वात्; न द्वितीय, स्वरूपाभिन्नप्रकाशस्योत्पादना सम्भवात्, इत्याह नेति । यद्वा - किं सत्यभूतस्य तादृशधर्मस्यापादनम्, उत मिथ्याभूतस्य? नाद्य·, निर्विशेषत्वात्, न द्वितीय, स्वप्रकाशतया यथावत्प्रका समाने मिथ्याभूतस्य तादृशधर्मस्यैवाध्यासानुपपत्तेरित्याह नेति । तद्योग इति । तादृशधर्मस्य सत्यभूतस्य मिथ्याभूतस्य वा आपादने तादृशधर्मविशिष्टस्यो त्पादने इति वार्थ । आदिशब्देनाधिष्ठानयाथात्म्यज्ञानस्याध्यासविरोधित्व ब्रह्मणोनादित्वं वा गृह्यते । तृतीय इति । ततश्चोक्तदोषप्रसङ्ग इत्यर्थ । एतेन तत्तत्कुमतिकल्पिताः कल्प्यमाना· कल्पयिष्यमाणाश्चावरणप्रकारभेदास्सर्वे प्रतिक्षिप्ता वेदितव्या· । प्रातिस्विकरूपेणाष्टमविकल्पम [न]नुवदतोयमपि भाव ।

किञ्च जीवस्य ब्रह्मणो भिन्नत्वस्यैव न्यायोपबृंहितश्रुत्यादिसमधिगतत्वा- त्प्रमाणाभावादेव ब्रह्मानवभासोपपत्तौ किमावरणकल्पनया । अपिच किं सुप्त्यादिवृत्तिविरहदशायामानन्दादिव्यवहाराभावायावरणं कल्प्यते, उत वृत्ति दशायाम्? नाद्य, वृत्त्यनवच्छिन्नत्वस्यैवानन्दादिपदवाच्यत्वस्य त्वयैवाभिहितत्वेन

दृश्यत्वादेर्दुर्निवारत्वत् । तन्मिथ्यात्वे तदर्थसामग्रीनैष्फल्यं स्यात् । भ्रान्तिज्ञानोत्पत्तिसामग्रीविच्छेदस्य च दोषत्वाप्रसिद्धेः। प्रतिबन्धकाभावस्य हेतुत्वमनभ्युपगच्छतां सप्तमस्य पक्षस्य दुर्घटत्वाच्च। अष्टमन्तु कष्ट पक्षो विकल्प्यते । किन्तदधिष्ठानभूतं ब्रह्म प्रकाशप्रतिपक्षभूतम्, उत तदनुगुणम्, अथोदासीनमिति ? आद्ये पूर्वोक्ता एव दोषाः। द्वितीये असाध्यस्य किं तदानुगुण्येन। साध्यत्वे च प्रागुक्ता दोषाः। प्रकाशानुगुणे च कथन्तिरोधानवाचोयुक्तिः । प्रकाशमानेच कथमध्यास ।

---

पक्षद्वयेपि दोषमाह दृश्यत्वे ति । आदिपदेन मिथ्यात्व गृह्यते किं स्वप्रकाशस्सत्यो मिथ्यावेति विकल्पमभिप्रेत्याद्ये अद्वैतहाने स्या स्यात् द्वितीय दूषयति तन्मिथ्यात्व इति । संसारदशायां तत्सामग्र्य नन्नुप्रविष्टतया तदानीमप्रकाशोत्पादनायोगान्मोक्षदशायामेव तदुत्पादन वाच्यम्, तच्च न सम्भवति, तदानीं मिथ्याविषयत्वासम्भवात् , ततश्च सामग्रीनैष्फल्य-मित्यर्थः , ततश्च स्वरूपस्यातिरिक्तप्रकाशाजनकत्वादन्यत्र क्लृप्तप्रकाशजनकता-वच्छेदकतावच्छेदकानवच्छिन्नत्वाच्च तज्जननायोग्यत्वमेव स्यादिति भावः ; किञ्च तस्य प्रकाशान्तरस्य स्वरूपप्रकाशादधिकविषयत्वमस्ति नवा ? नचेत् ! तत्सामग्र्यनुप्रविष्टत्वस्वरूपापादनेपि ब्रह्मण आवृतत्वञ्च स्यात् , चक्षुषा साक्षा त्क्रियमाणे घटे साक्षात्कारान्तराभावमात्रेणावृतत्वाव्यवहारात् , इत्यभिप्रेत्य प्रथमे ब्रह्मव्यतिरिक्ततया तत्साधिकस्य मिथ्यात्वात् तत्प्रकाशस्य भ्रान्तित्व स्यावश्यम्भावात् तत्सामग्रीविच्छेदकस्य च दोषत्वमनुपपन्नम्, प्रत्युत गुणत्व मेवेत्याह भ्रान्तिज्ञाने ति। पूर्वपक्ष्युपन्यस्त पक्ष दूषयितुमाह अष्टमस्त्वि ति। तदिति। अस्ति प्रकाशत इति व्यवहारायोग्यत्वं नास्ति न प्रकाशत इति व्यवहारयोग्यत्व चेत्येतदुभयमित्यर्थः । पूर्वोक्ताः – प्रथमपक्षोक्ताः । द्वितीये किं प्रकाशो ऽसाध्यः; उतसाध्यः ? आद्ये असाध्यप्रकाशस्य वृत्त्यनुपकार-कत्वात्तदानुगुण्याङ्गीकारो व्यर्थ इत्याह असाध्यस्ये ति । द्वितीय आह साध्यत्वेचे ति। तस्य साध्यप्रकाशस्य ब्रह्मस्वरूपानतिरेके ब्रह्मणस्साध्यत्व प्रसङ्ग इत्याह प्रागुक्ता इति। अतिरेके च सत्यत्वादि प्रसङ्ग इत्याह प्रागुक्ता दो ।

प्रकाशमान एवाधिष्ठाने सर्वत्राध्यास इतिचेत् ? तर्हि किन्तिरोधान प्रयासेन । यथावत्प्रकाशमानेध्यासायोगादिति चेन्न ;- निर्विशेषस्य स्वप्रकाशस्याविद्याशतेनाप्ययथास्वरूपप्रकाशत्वापादनायोगात् । तद्योगे वा निर्विशेषत्वादिभङ्गप्रसङ्गात् । तृतीयेप्यजागळस्तनवदनुपकारकत्व मेव ।

---

युक्तियोगः । यथावत्प्रकाशमाने ऽध्यासायोगादिति वदता अयथावत्स्वरूप प्रकाशत्वापादनाय ना यथावत्स्वरूपप्रकाशनिवृत्तये चावरणमित्युक्तं भवति तत्र न द्वितीयः पक्षो युज्यते, ब्रह्मणोपि नाशप्रसङ्गात्, अयथावत्स्वरूपप्रका शापादनमपि किं विद्यमानस्यैव प्रकाशस्य तादृशधर्मापादनम्, उत तादृश धर्मविशिष्टप्रकाशोत्पादनम् ? नाद्यः, मिथ्याभूतस्य तस्य धर्मस्यापादनेपि पर मार्थतो यथावत्स्वरूपप्रकाशस्य विद्यमानतया अध्यासानुपपत्तेः सत्यभूतस्यैव तादृशधर्मस्यापादनं वक्तव्यम्, तस्यैव यथावत्स्वरूपप्रकाशविरोधित्वात्, तच्चा नुपपन्नम्, ब्रह्मणो निर्विशेषत्वात् ; न द्वितीयः, स्वरूपाभिन्नप्रकाशस्योत्पादना सम्भवात् ; इत्याह नेति । यद्वा - किं सत्यभूतस्य तादृशधर्मस्यापादनम्, उत मिथ्याभूतस्य ? नाद्यः, निर्विशेषत्वात्, न द्वितीय, स्वप्रकाशतया यथावत्प्रका समाने मिथ्याभूतस्य तादृशधर्मस्यैवाध्यासानुपपत्तेरित्याह नेति । तद्योग इति । तादृशधर्मस्य सत्यभूतस्य मिथ्याभूतस्य वा आपादने तादृशधर्मविशिष्टस्यो- त्पादन इति वार्थः । आदिशब्देनाधिष्ठानयाथात्म्यज्ञानस्याध्यासविरोधित्व ब्रह्मणोनादित्वं वा गृह्यते । तृतीय इति । ततश्चोक्तदोषप्रसङ्ग इत्यर्थः । एतेन तत्तदनुमतिनिरूपिताः कल्प्यमाना. कल्पयिष्यमाणाश्चावरणप्रकारभेदास्सर्वे प्रतिक्षिप्ता वेदितव्याः । प्रातिस्विकरूपेणाष्टमविकल्पम [न] नुवदतोयमपि भाव. ।

किञ्च जीवस्य ब्रह्मणो भिन्नत्वस्यैव न्यायोपबृंहितश्रुत्यादिसमधिगततया— प्रमाणाभावादेव ब्रह्माज्ञानप्रसक्त्यनुपपत्तौ किमावरणकल्पनया । अपिच नि सुखादिवृत्तिविरहदशायामानन्दादिव्यवहाराभावायावरणं कल्प्यते, उत वृत्ति दशायाम् ? नाद्यः, वृत्त्यवच्छिन्नत्वस्यैवानन्दादिपदवाच्यत्वस्य त्वयैवाभिहितत्वेन

वृत्त्यभावादेव तथा व्यवहाराभावोपपत्ते । न द्वितीय, तदानीमव्यवहारा सिद्धे । ननु वृत्तिदशायामेव पूर्णानन्दानुभवात् सर्वसुखवृत्तिषु पूर्णानन्दत्वेनैकरूपत्वेनैव व्यवहारस्स्यात्, नतु तरतमभावेनेति चेत्? तर्हि त्वन्मते वा कथं तादृशव्यवहारोपपत्ति ? कारणत्तत्वृत्तितारतम्येनावरणाभिभवतारतम्यादिति चेत्? तर्हिवृत्तितारतम्यादेव तदभेदेनाभिव्यक्ते तारतम्यव्यवहारोपपत्ति । आवरणाभिभवतारतम्यात्तरतमव्यवहार इति त्वनुपपन्नम्, तथाहि-किमावरणाभिभवः आवरणोत्पत्तिप्रतिबन्ध, उतावरणस्वरूपनाशः, उत तत्कार्यनाश ? नाद्य, तस्यानादित्वात् । द्वितीयेपि किं तारतम्य आवरणनिवृत्तिभूयस्त्वाल्पत्वाभ्याम्, उत निवृत्तेरधिकप्रदेशाल्पप्रदेशत्वाभ्याम्? नाद्य, पूर्वं विद्यमानावरणनिवृत्तेस्सर्वत्र तुल्यत्वात् । न द्वितीय, सर्वशरीरव्यापिजलचन्दनसंयोगजन्यसुखद्वयेपि तारतम्य न स्यात् । किञ्च पक्षद्वयेपि घर्माभितप्तस्य जलसंयोगेन सुखे सति अनन्तरं चन्दनसंयोगे सति उत्कृष्टसुखानुभवो न स्यात्, तस्या वृत्तेरावरणाभिभावकत्वाभावात्, पूर्वेणैवावरणस्याभिभूतत्वात् । तृतीयेपि किं तस्य कार्यम्? प्रतिबन्धइति चेत्? किं पूर्णानन्दव्यवहारप्रतिबन्ध, उतानन्दव्यवहारप्रतिबन्ध एव वा? न द्वितीय, वृत्त्यभावदशाया तदभावादेवाव्यवहारोपपत्ते न तदानीं तेनाव्यवहारस्य प्रतिबन्धाधीनता । वृत्तिदशाया तु व्यवजिहीर्षाया व्यवह्रियत एव । आद्ये तु पूर्णानन्दव्यवहारापत्ति । किञ्च आवरणस्य तदभिभवस्य व्यवहर्तुमिष्टत्वानात तत तरतमव्यवहारसम्भव । अस्तु वृत्तितारतम्यादेव तरतमव्यवहारोपपत्ति, पूर्णानन्दव्यवहारस्तव कथं न स्यादिति चेन्न, — पूर्णत्व सत्कर्षएव, अन्यानिर्वचनात्, स च स्वरूपप्रकाशेन भासत एव, तस्य सावधिकत्वेनावध्यभाने भानायोगात् । उत्कृष्टवृत्त्युदयदशाया तु तदभेदेन प्रतीतेस्तथैव व्यवह्रियते । अपिच जीवन्मुक्तिदशाया कर्मण एवाविद्यानिवृत्तिप्रतिबन्धकत्ववदिदानीं व्यवहारप्रतिबन्धकत्वसम्भवात् किमज्ञानाधीनावरणेन । किञ्च आवरणस्यापि मिथ्यात्वेनावरणान्तरं विना तदारोपायोगादनवस्था । नच तस्यानादित्वान्नानवस्थेति वाच्यम्, अनादित्वे ब्रह्मवदज्ञानवच्चाज्ञानानधीनत्वप्रसङ्गात् । ननु अविद्यासम्बन्धवदविद्याव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमेवाज्ञानाधीनत्व

मिति चेन्;- आवरणस्याज्ञाननिवृत्तिप्रतिबन्धकत्वेन तन्निवृत्तेरज्ञाननिवृत्त्युपयुक्ततया अज्ञानस्यैवावरणार्थानन्त्यप्रसङ्गात् । किञ्च गुञ्जापुञ्जारोपाधिष्ठानदहनादिवत् स्वप्रकाशे ब्रह्मण्यनवभासारोपेऽपि तदुचितं कार्यं स्यादेव । किं तदुचितं कार्यमिति चेत्? नास्तीति व्यवहाराविच्छेदः, अहमनतिशयानन्द इति व्यवहारः, सुरेच्छया पुत्रादिषुद्रसुखाभिलाषाभावश्चेति भ्रमः । यदुक्तम्— चैतन्यस्याज्ञानस्फोरकत्वात् तत्कार्यप्रतिबन्धकत्वं नास्तीति; तन्न, तत्र किं प्रतिबन्धकत्वं निवर्तकत्वम्, प्रतिबन्धकत्वमेव वा? नाद्यः, घटस्फोरकस्य घटप्रत्यक्षस्य तत्कार्यनिवर्तकत्वेन व्यभिचारात् । न द्वितीयः, तज्ज्ञानस्य तद्विपरीतज्ञानप्रतिबन्धद्वारा विपरीतव्यवहारप्रतिबन्धकत्वस्य सामान्यतः क्लृप्ततया अत्र प्रतिबन्धकत्वानपायात् । ननु—ऊर्ध्वाग्रत्वसाक्षात्कारे सत्यप्यधोग्रत्वभ्रमवद- धिष्ठानप्रकाशेऽपि नास्तीति ज्ञानमुपपद्यत इति चेन्;— तस्य औपाधिकभ्रमत्वेन तत्त्वज्ञानाविरुद्धत्वात् । नचानाद्यविद्यालक्षणोपाधिवशात् विपरीतज्ञानमिति वाच्यम्, तथा सत्यौपाधिकभ्रमं प्रति तस्याविरोधितया तदर्थमावरणकल्पनावैयर्थ्यात् । ननु अहमानन्द इति व्यवहाराभावार्थमेव तत्कल्पनमिति चेत्? तर्हि प्रतिबन्धादहमानन्द इति व्यवहाराभाववत्तत्त्वज्ञानलक्षणप्रतिबन्धान्नास्तीति व्यवहारोऽपि न स्यात् । तत्त्वज्ञाने अप्रामाण्यनिश्चयात्तदुपपत्तिरिति चेत्? तर्हि तत एवाहमानन्द इति व्यवहाराभावोपपत्तौ किं तदर्थेनाप्यावरणकल्पनेन । किञ्च- ज्ञानं गुण इत्याद्यनुमितेः परामर्शविषयायास्तत्कार्यानुमितिप्रतिबन्धकत्वदर्शनेन तत्स्फोरकस्य तत्कार्यानुमितिप्रतिबन्धकत्वमिति व्याप्तेर्व्यभिचारश्च । ननु तत्त्व ज्ञानस्य विपरीतव्यवहारप्रतिबन्धकत्वेऽपि आवरणस्योत्तेजकत्वान्न तत्प्रतिबन्ध इति चेन्,— तत्त्वज्ञानस्य हि न साक्षाद्विरुद्धव्यवहारप्रतिबन्धकता, किन्तु विपरीतज्ञानप्रतिबन्धद्वारा; तत्र चावरणस्य नोत्तेजकता, मूकादेर्घटादिज्ञाने सति व्यवहारयोग्यतया उत्तेजकत्वादर्शनात्, ज्ञानस्यैवोत्तेजकत्वोपपत्तेश्च । यदप्युक्तम् अहमानन्द इति व्यवहारः प्रतिबन्धान्न भवतीति; तन्न, व्यवहारप्रतिबन्धकत्वं किं तद्धेतुभूतज्ञानविघटनद्वारा, उताभिघातादिवत् करणापाटवहेतुतया? नाद्यः, स्वरूपप्रकाशस्य नित्यत्वात्, साध्यप्रकाशाभावस्य च कारणाभावप्रयोज्यत्वात्, तदभावेऽपि नित्यप्रकाशादेव व्यवहारापत्तेश्च । न द्वितीयः, करणा-

पाटवादर्शनात् । तत्सत्वे व्यवहारमात्रोच्छेदापत्तेः । किञ्च मूकादिवत् करण पाटवादेवाव्यवहारे तदक्षमताप्रयुक्तदुःखप्रसङ्गाच्च । साक्षात्प्रतिबन्धकत्वमेवा स्त्विति चेन्न;— तथा सति परोक्षज्ञानिना अद्वैतोपदेष्टृत्वानुपपत्तेः । परोक्षज्ञानस्या प्यावरणनिवर्तकत्वप्रसङ्गाच्च। पुत्रादिक्षुद्रसुखाभिलाषाभावश्च कार्यम्, नचाप्राप्तत्वा द्युपपत्तिः, आनन्दात्मकब्रह्माभेदानुभवे स्वरूपात्मके विद्यमाने तस्यैव भ्रमस्यानुपपत्तेः। नचाज्ञानवशात्तदुपपत्तिः, तथा सति उपाध्यधीनविपरीतज्ञानस्य तत्त्वज्ञाने सत्य किञ्चित्करत्वात् । नह्यानुमानिकश्वैत्यज्ञाने विद्यमाने जातमपि पीतत्वज्ञान पीतार्थिनं प्रवर्तयति । ननु- पीतत्वज्ञानस्याप्रामाण्यनिश्चयात् न तस्य कार्य करत्वम्, प्रकृते तु अप्राप्तत्वभ्रमस्य प्रामाण्यनिश्चयात् तत्कार्यकरमेवेति चेन्न;— स्वन्मतरीत्या तत्राप्रामाण्यस्यैव निश्चयात् । तस्मादावरणकल्पनायामपि स्वो- चितकार्याणि स्युरेव ।

किञ्च- आवरणकल्पनायामपि अज्ञानाध्यासौ न स्यात्, अद्वैतसाक्षात्कारस्य सत्वात् । अनादितः अद्वैतसाक्षात्कारे विद्यमाने अनादित एवाध्यासो न स्यात् । किञ्चाधिष्ठानस्वप्रकाशः अध्यासविरोधी न वा ? नाद्यः, आवरणा द्यध्यासस्यैवानुपपत्तेः । नचानादित्वेन परिहारस्साङ्कर्यः, अनाद्यद्वैतसाक्षात्कारे विद्यमाने अनादितोऽप्यज्ञानावरणाद्यध्यासायोगात् । नान्त्यः, सत्यपि तस्मिन्न ध्यासस्सम्भवेनावरणकल्पनावैयर्थ्यात् । किञ्च प्रतिबन्धादहमानन्द इति भान केन वार्यते । न हि घटादिकमव्यवजिहीर्षतो मूकस्य वा घटादिज्ञानं नास्ति । ननु — आनन्दाकारवृत्त्यभावान्न तथा भानमिति चेन्न;— तथा सति घटत्वभा वादेव नास्तीति व्यवहारोपपत्तौ किमावरणेन । नच अहमाकारवृत्तावानन्द- स्फुरणाभाव एवावरणाधीन इति वाच्यम्, आनन्दस्य सत्स्वरूपतया सत्स्फुर णस्यैवानन्दस्फुरणरूपत्वात् । एवमुक्तन्यायेनैव घट आनन्द इति प्रतीतिप्र सङ्गश्च । किञ्च किमेषा योग्यता ? घटादेर्यादृशी चक्षुर्ग्राह्यत्वयोग्यता दण्डा देर्वा घटादिजननयोग्यता तादृश्येव विवक्षिता, उतान्यादृशी ? नाद्यः, अहं ब्रह्मास्मीति व्यवहारस्य कदाचित्सत्वे तद्योग्यताया इदानीमपि सत्वात्; कदाचित् घटजननस्यापि दण्डस्य उत्पत्तिप्रभृत्याविनाशं तद्योग्यत्वात् । किञ्च- अस्तीति व्यवहारयोग्यत्वाभावस्य वह्नेस्सेचनकरणायोग्यत्ववत् यावद्द्रव्यभावि

त्वात् घटापरोक्षे जातेपि उक्तायोग्यत्वनिवृत्तिः कथमिव स्यात् । यदि च व्यवहारयोग्यता तद्व्यवहारकाल एव, तदा नास्तीति व्यवहारयोग्यताया अपि तथात्वेन सुषुप्तिप्रलयादावावरणं न स्यात्, नास्तीति व्यवहाराभावात् । पटमपश्यतो व्यवजिहीर्षाभावादव्यवहरतः मूकादेर्वा तदानीमप्यावरणप्रसङ्गात्, श्रवणादिक्रमेण सञ्जातब्रह्मसाक्षात्कारस्य तदानीमहं ब्रह्मेति व्यवहारे मानाभावात्, अनिच्छया अव्यवहारसम्भवाच्च आवरणप्रसङ्गात् । मोक्षेपि तादृश व्यवहाराभावेनावरणप्रसङ्गश्च, संसारदशायामावरणस्यैव वक्तव्यतेन मोक्षदशायां च व्यवहारासम्भवेन तादृशव्यवहारस्यैव तुच्छतया तद्घटितयोग्यताया अपि तादृशतया तद्विरहस्यापि तथात्वेनाविद्याधीनत्वासिद्धेश्च । नच जीवन्मुक्तिदशायां व्यहारः, अनिच्छया अव्यवहारसम्भवात्, जीवन्मुक्तिनिरासाच्च । इदानीमपि अहं ब्रह्मेत्यादिव्यवहारस्य श्रवणादिसाध्याविद्यानिवर्तकापरोक्षज्ञानविधुराणां त्वन्मतस्थानां पौण्ड्रकादीनां च दर्शनेन तेषामनावरणप्रसङ्गात् । ननु—व्यवहारसत्वेपि न तद्व्यवहारं प्रति स्वरूपज्ञानस्य जनकता, तथाच तज्जननानुविधानमेवावरणमिति चेन्न,—स्वरूपात्मकानन्दप्रकाशस्य कारणतावच्छेदकावच्छिन्नत्वे तदुत्तरभाविनः कार्यस्य तज्जन्यत्वावश्यम्भावात्, वृत्तेरेव तत्कारणतावच्छेदकावच्छिन्नत्वे तत्सत्वे व्यवहारस्य तदभावे तदभावस्य चोपपत्तौ तदभावप्रयोजकतया नावरणकल्पना । स्वप्रकाशज्ञानस्य कारणतावच्छेदकावच्छिन्नत्वेपि इच्छाव्यापारकत्वाभावात् घटोत्पत्तिस्थलीयव्यावृत्तकुलालादिवत् तत्राजनकत्वमिति चेत्? उक्तविधया व्यवहारहेतुभूतेच्छाकारणतावच्छेदकावच्छिन्नत्वानवच्छिन्नत्वयोः पूर्वोक्तदोषवत्वादवश्यात् । नन्विच्छाकारणत्वेपि इदानीमिच्छाभावार्थमेवावरणमिति चेन्न,—घटज्ञाने सत्यपि घटव्यवजिहीर्षाया कादाचित्कत्वयदावरणं विनापि इच्छाकादाचित्कत्वोपपत्तेः । नच पौण्ड्रकादेर्व्यवहारे सत्यपि न सव्यवहारापरोक्ष इति अपरोक्षव्यवहाराभाव आवरणादेवेति वाच्यम्, व्यवहारस्यापरोक्षज्ञानविषयत्वात् अपरोक्षजन्यत्वस्योपपादितत्वाच्चापरोक्ष्याभावासिद्धेः । किञ्च कारणतावच्छेदकावच्छिन्नस्यापि कार्याजनकत्वं प्रतिबन्धादिति वाच्यम्, नच व्यवहाररूपे कार्ये विद्यमाने कार्यानुपादप्रयोजकत्वलक्षणं प्रतिबन्धकत्वं सम्भवति । नच स्वरूपप्रकाशजननीयकार्यविशेषा-

नुत्पादात् तत्सम्भव इति वाच्यम्, कार्ये व्यक्तिभेदं विना वैजात्यलक्षणविशेषासिद्धेः तज्ज्ञानत्वेन तद्व्यवहारत्वेन सामान्यतः कार्यकारणभावात् स्वरूपप्रकाशस्यापि सामान्यान्तर्गततया तद्रूपकारणविशेषादपि कार्यवैजात्यकल्पनात्। ननु — कारणतावच्छेदकाक्रान्तस्वरूपज्ञाने सत्यपि इदानीमहमानन्द इति व्यवहारादर्शनादेव आवरणरूपप्रतिबन्धकः तत्प्रतिबध्यकार्यविशेषः स्वरूपप्रकाशत्वेनच तत्प्रयोजकत्वमितीदं सर्वं कल्प्यत इति चेन्न;— तद्रूपेण व्यवहारे सामान्यतः तत्प्रकारकज्ञानस्य हेतुतया ब्रह्मापरोक्षवृत्तेरपि तादृशकार्यविशेषे जननीये सहकारित्वेन तदभावाद्वा तस्या अपि सहकारित्वकल्पनाद्वा तस्या एव तद्विशेषप्रयोजकत्वकल्पनाद्वा इदानीं तद्व्यवहाराभावोपपत्तौ एतादृशकुसृष्टिवैय्यर्थ्यात्। किन्च- कथमत्रानन्दव्यवहाराभावः, अहमस्तीति व्यवहारात्, सत एवचानन्दत्वात्; नचानन्दपदव्यवहारोनास्तीति वाच्यम्, तथासति सर्वदा आवरणप्रसङ्गात्; नहि तदापरोक्षदशायामपि समस्ततत्पर्यायपदैर्भाषाशब्दैश्च व्यवहरन्ति। ननु- आनन्दत्वादिरूपेण व्यवहारो नास्तीति तदभाव एवावरणमिति चेन्न;— अहं ब्रह्मास्मीति सत्वप्रकारकव्यवहारस्यानन्दत्वप्रकारकत्वात्, सदानन्दयोरभेदात्, स्वरूपातिरिक्तानन्दत्वादिप्रकारकव्यवहारस्यापरोक्षज्ञानकालेप्यभावाच्च। मास्तुवा अहमस्मीति व्यवहारस्यानन्दत्वप्रकारकता, तथापि प्रमेयत्वेन घटज्ञाने व्यवहाराभावात् तत्प्रकारज्ञानस्य तद्रूपेण व्यवहारहेतुत्वात् स्वरूपज्ञानस्य च तदप्रकारकत्वात् तत्प्रकारकापरोक्षवृत्तेश्च श्रवणादिस्वसामग्र्यभावेनाभावात् तत एवानन्दव्यवहाराभावोपपत्तौ किमावरणकल्पनया। नाहं ब्रह्मास्मीति व्यवहारश्च स्वरूपज्ञानस्य निष्प्रकारकस्य ब्रह्माभेदाप्रकारकत्वात्, विरोधिज्ञानस्य चेदानीमभावादुपपन्नः। किन्च— अपरोक्षज्ञानान्नास्तीति व्यवहारयोग्यताया निवृत्तिश्च न स्यात्, तस्या यावद्वस्तुभावित्वादिति दिक्। न द्वितीयः, तादृशयोग्यताया मानाभावात्। नचास्तीति व्यवहाराभावान्नास्तीति व्यवहाराच्च तदुन्नेयम्, व्यवहारतदभावयोर्ज्ञानाभावैनैवोपपादितत्वात्। अज्ञानेनैव वा उक्तव्यवहारतदभावयोरुपपत्तौ किमन्तर्गडुना धर्मान्तरेण। नच व्यवहारतदभावयोरज्ञानेनोपपादनेपि न जानामीति प्रतीत्या ज्ञानसामान्यनिरूपितया सिद्धस्याज्ञानस्य इदानीं

मनिवृत्तिर्न तेनैवाज्ञानेनोपपादयितुं शक्येति तन्निवृत्तिप्रतिबन्धकमनुमेयम्, तदेवावरणं नामेति वाच्यम्, ज्ञानसामान्यनिवर्त्यत्वयोग्यत्वप्रतीतावपि अपरोक्षवृत्तेरपि अज्ञाननिवृत्तौ सहकारित्वकल्पनौचित्यात्, अज्ञानगाध्यावरणाख्यप्रयोजनस्य कस्यचिदनिरूपणादज्ञानानुपपत्तिं वदन्तं प्रति अज्ञाननिवृत्त्या कश्चित् धर्मसुञ्चीय तदेव प्रयोजनमित्युक्तेरसङ्गतत्वाच्च अन्योन्याश्रयात् । आवरणानावरणव्यवस्थासिध्यर्थं चिदानन्दांशयोर्भेदकल्पनमप्ययुक्तम्, तथापि तद्व्यवस्थानुपपत्ते । नहि चन्द्रभेदकल्पनायामपि चन्द्रत्ववर्तुलत्वादीनां व्यवस्था दृष्टा । ननु दृष्टैव सव्यदक्षिणव्यवस्थेति चेन्न;— चन्द्रनिरूपितसव्यत्वदक्षिणत्वयोर्भेदवदेकस्मिन्नेव चन्द्र आरोपात् उभयोरेकाश्रयवृत्तित्वेन व्यवस्थाभावात् । प्रतीतिवैचित्र्यं चार्थव्यवस्थाभावेप्यनुभवबलादङ्गीकार्यम् । भिन्नाश्रयत्वमेव व्यवस्थितत्वमिति चेन्न,— एतादृशपारिभाषिकव्यवस्थासिद्धावपि त्वदिष्टासिद्धेः । चैतन्ये आवृतब्रह्माभेदप्रयुक्तजगदान्ध्यस्य ब्रह्मानन्दे अनावृतचैतन्याभेदप्रयुक्तावभासस्य स्वरूपाभेदाविरोधिभेदारोपे व्यवहारात् । एवं सत्यज्ञानादिपदानां प्रवृत्तिनिमित्तभेदेनापर्यायत्वात् चैतन्यानन्दादिव्यवहाराणामपि परस्पर भेदादानन्दत्वप्रवृत्तिनिमित्तकपदघटितव्यवहारायोग्यता ज्ञानत्वाभावव्यवहारयोग्यता वा आनन्दावरणम् । चैतन्यत्वप्रवृत्तिनिमित्तकपदघटितव्यवहारयोग्यताया एव सत्त्वाच्चैतन्यस्यानावरणमिति व्यवस्थेत्यनुपपन्नम् । तथा हि — उक्तयोग्यतायोग्यते स्वरूपमात्रावरणम्, उतानन्दत्वादिविशिष्टस्वरूपस्य ? नाद्य, जगदान्ध्यप्रसङ्गादेव । अत एव न द्वितीय, विशिष्टावरणस्यापि स्वरूपावरणत्वात्, जडावरणप्रसङ्गाच्च । ननु— विशिष्टावरणमित्यनेन तदवच्छिन्नस्यावरणं विवक्षितम्, आवरणविषयताभावेपि तदवच्छेदकत्वं सम्भवत्येव, घटकारणताशून्यस्यापि दण्डत्वस्य तदवच्छेदकत्ववत्, तथा च न जडावरणप्रसङ्ग इति चेन्न,— तथा सति चैतन्यस्याप्यावरणप्रसङ्गात् । चैतन्यत्वावच्छिन्नव्यवहारयोग्यताया विद्यमानत्वात् चैतन्यमनावृतमेवेतिचेत् ? उभयोरन्यूनातिरिक्तवृत्तित्वाविशेषात्, व्यवस्थया अवच्छेदकत्वानुपपत्ते, अन्यूनातिरिक्तवृत्तित्वातिरिक्तावच्छेदकत्वकल्पनाया मानाभावात् । नन्वानन्दत्वप्रवृत्तिनिमित्तकपदघटितव्यवहारप्रतिबन्धकत्वमेव आनन्दत्वप्रवृत्तिकपदघटितव्यवहारयोग्यताया आनन्दत्वाभावव्यवहारयोग्यताया वा आनन्दावरण

ननु भवत्पक्षेपि जीवब्रह्मणोः स्वरूपं स्वयम्प्रकाशम्, तदुभयमपि कर्मरूपयाविद्यया तन्मूलगुणत्रयमयपापरूपया मायया तिरोहितमिति निर्विगानमेव; अन्यथा संसारात्यन्ताभावप्रसङ्गात्; ततश्च भवतोपि समानं चोद्यमिति समदुःखसुखौ भवावेति चेन्न;— भवत एव दुःखसम्बन्धः, अस्माकन्तु सुखमेवेति पश्यतु भवान् ।

---

त्वम्, चैतन्यत्वप्रवृत्तिनिमित्तपदघटितव्यवहारं प्रति तु न क्वापि योग्यता योग्यताभावो वा प्रतिबन्धक इति तदनावरणम्, इयमेव चानन्दचैतन्ययोरावरणव्यवस्थेत्युच्यत इति चेत्। किं प्रतिवध्यो व्यवहारो लाक्षणिको विवक्षितः, उत मुख्यः? आद्ये इदानीमप्यानन्दादिजनकत्वादिना लक्षणया स्वस्मिन्नहमानन्द इत्यादिव्यवहारस्स्यात्। न द्वितीयः, मुख्यव्यवहारस्य आनन्दत्वादिविशिष्टविषयतया तद्व्यवहारप्रतिबन्धकयोग्यताया महावाक्यार्थाखण्डब्रह्मावरणसम्भवात्, विशिष्टव्यवहारस्यापि विशेष्यभूताखण्डब्रह्मविषयतया तदावरणत्वे विशेषणीभूतानन्दत्वादिविषयतया जडावरणप्रसङ्गात्, तत्प्रकारकव्यवहाराभावस्य तत्प्रकारकज्ञानाभावादुपपन्नत्वेन प्रतिबन्धानपेक्षणाच्च । किञ्च — उक्तयोग्यताया जडेपि सत्त्वात् तस्याप्यावरणप्रसङ्गः । नच तत्सत्त्वेपि तस्यास्स्वभावजाड्यप्रयुक्तत्वान्नाज्ञानस्य तदावरणप्रयोजकत्वमिति वाच्यम्, तस्यापि मिथ्यात्वेनाविद्याधीनत्वात् घटतदवच्छिन्नचैतन्यगतयोग्यतयोर्विनिगमनाभावात् । व्यवहारप्रतिबन्धकताप्यविशिष्टैव । यश्च प्रयोगः, तत्र सप्रकारकज्ञानस्यैव हेतुत्वादाश्रयासिद्धिः । कारणाभावेनार्थान्तरत्वम् । प्रतिकूलपदस्य प्रतिबन्धकपरत्वे अद्वैतसाक्षात्कारकालीनात्मनि बाधश्च । हेत्वसिद्धिश्च, विशिष्टज्ञानस्य विजिहीर्षादेरिदानीमभावात् । अपरोक्षज्ञानदशायां तत्सम्भवाच्च । द्वितीयहेतौ तत्कारणाभावात् तद्विषयतिव्यवहारजाते व्यभिचारः ।

अन्यथेति । तिरोधानाभावे ब्रह्मस्वरूपनिरतिशयानन्दानुभवात् तत्तत्पुण्यपापस्वरूपकर्मानुगुणस्वर्गनिरयादिफलप्रदत्वस्य च ज्ञानात् पुण्यपापरूपकर्मानुष्ठानं न स्यात्, तदभावेच तन्मूलजन्मजरामरणादि

ब्रह्मणस्तावत् स्वरूपं स्वयम्प्रकाशमपि नान्यस्मै प्रकाशते, तद्धर्मेण तु तस्य प्रकाशते, सर्वेषामात्मनां स्वरूपमपि स्वस्मा एव स्वप्रकाशत्वात् अन्यस्मै तदीयज्ञानान्तरकर्मतयैवावभासते; ततश्च तद्गोचरज्ञानप्रसरोत्पत्तिप्रतिबन्धादिलक्षणं तिरोधानमुपपन्नमेव। स्वस्मै तु नित्यं प्रकाशमानत्वान्नित्यसर्वज्ञत्वाच्च ब्रह्मणो न स्वरूपहानाज्ञत्वादिदोषलेशावकाशः। जीवस्य तु स्वरूपं यद्यपि स्वस्मै स्वयं प्रकाशते, यद्यपि च तत्रैव देहाद्यध्यासः, तथापि न भवत्पक्षवद्दोषः; प्रकाशमानाकारस्याधिष्ठानत्वोपाधिकत्वात्, तदारोपप्रतिबन्धकस्य तत्तद्विरोधिधर्मप्रकाशस्य विनिवारणेन तिरोधानोपपत्तेश्च। देहादि विलक्षणस्वरूपप्रकाशे कथन्तेध्यास इति चेन्न; - वस्तुतो विलक्षणत्वेपि विलक्षणवित्त्वभानात्। शुक्तिरजताख्यातावितिदम्भानवत्।

---

रूपससारो न स्यात्, यथा भगवच्छेषतैकरसस्वरूपस्य तदनुगुणनिरतिशयपुरुषार्थरूपतच्चरणपरिचरणयोग्यतायाश्च ज्ञाने तद्विरोधिकर्मानुष्ठानाभावात् संसारात्यन्ताभावप्रसङ्ग इत्यर्थः। नान्यस्मै प्रकाशत इति। स्वरूपप्रकाशेनेति शेषः। तद्धर्मेणे ति। स्वच्छन्दद्वयेनाप्यन्यः परामृश्यते। सर्वेषामि ति। स्वस्माएवे त्यत्र प्रकाशत इत्यनुषज्यते। स्वप्रकाशत्वप्रयुक्तभान स्वस्मा एवेत्यर्थः। ततश्चे ति। आदिशब्देन विद्यमानप्रकाशनाशो गृह्यते। तच्च ज्ञानकालोत्पन्ने तमसि सम्भवत्येव। ज्ञानप्रतिबन्धकत्वादिकमपि साक्षात्परम्परा साधारणं विवक्षितम्, तेन इन्द्रियसंयोगप्रतिबन्धादिहेतुकुड्यादेरपि तिरोधायकत्वलाभः। ज्ञानहेतुप्रतिबन्धक वादिशब्दार्थः। यथा परमते स्वप्रकाशब्रह्मणस्तिरोधाने स्वरूपनाशः तिरोधायकाज्ञानाश्रयत्वेनाज्ञत्वं च प्रसज्यते न तथा सिद्धान्त इत्याह स्वस्मै तु नित्य मिति। प्रकाशमाने ति। विरोध्याकारस्वरूपप्रकाशागोचरत्वादिति भावः। धर्मभूतज्ञानेनापि न प्रतिबन्ध इत्याह तदारोपे ति। सिद्धान्त इव आनन्दत्वादीनां स्वरूपप्रकाशविषयत्वादाव-

इदमर्थो हि चस्तुतोरजतात् विलक्षणोपि न तथा भाति, तद्वैलक्षण्य व्यवस्थापकस्य शुक्तित्वादेरभतीते। तथेहापि सावयवत्वस्थूलत्वा नित्यत्वविकारित्वजडत्वादिधर्मविशिष्टदेहाद्वैधर्म्यरूपनिरवयवत्वाणुत्व नित्यत्वनिर्विकारत्वस्वप्रकाशत्वादीना स्वरूपप्रकाशे प्रकाशाभावा त्तद्विपरीताकारारोप स्वरूपमात्रेच प्रकाशमाने युक्त एव। ममा प्येवमस्त्विति चेन्न, - भवत्पक्षे तत्तद्धर्माणामभावात्। तदभाव स्तदप्रकाशस्योपकारक एवेति चेत्? तथासति नित्यतिरोधाना न्नित्याध्यासप्रसङ्ग। नहि तत्तत्प्रकाशलक्षणा तिरोधाननिवृत्ति कदा चिदप्युपपद्यते। अन्नण्यसतान्तेपा तत्वज्ञानोदयदशाया प्रकाशे तत्वज्ञानस्यैवातत्वज्ञानत्वप्रसङ्गेन पुनरप्यनिर्मोक्षप्रसङ्गात्। ब्रह्म स्वरूपमेव तथा तथा भातीति न दोष इति चेत्? किन्तथात्व स्वरूपम्, उत स्वरूपातिरिक्तम्? पूर्वत्रेदानीमपि तत्प्रकाशो दुर्वार। उत्तरत्र तु तदानीन्तनभ्रान्तिर्दुर्वारेति दुस्तर व्यसनम्। ततो यदि निर्धर्मकमपि जडत्वेनाभ्युपेतम्, तदा तत्स्वरूपा प्रकाशलक्षण तिरोधानमपि वक्तु शक्यते, यद्वा स्वयम्प्रकाशमपि

---

रणेन तदप्रकाशेऽपि न स्वप्रकाशापत्तिर्नाप्यध्यासानुपपत्तिरिति शङ्कते ममापीति। तथासती ति। तिरोधाननिवृत्त्यभावे अविद्याया अध्यनिवृत्तेरिति भाव। कदाचिदपी ति। बन्धमोक्षावस्थयोरित्यर्थ। नतु न तत्वज्ञाने स्वरूपाति रिक्तानन्दत्वादिधर्मभानम्, येन भ्रान्तित्व स्यात्, किन्तु स्वरूपमेव आन न्दत्वादितत्तद्धर्मरूपतया भासत इति शङ्कते ब्रह्मरूपमि ति। किं तथे ति। तथाशब्दार्थ आनन्दत्वादिकमित्यर्थ। तिरोधानमपी ति। अपिशब्दो थार्थ। अधिष्ठानज्ञानाभावादध्यासस्तु तदापि नापपद्यत इति भाव।

सधर्मकत्वेनाभ्युपेतम्, तदा तद्धर्माप्रकाशलक्षणं तिरोधानं सुवच मिति न कथञ्चिदपि निर्विशेषनित्यस्वयम्प्रकाशे स्वस्य परस्य वा ज्ञानान्तरागोचरे वस्तुनि तिरोधानवाचोयुक्तिर्घटत इति ।

इति शतदूषण्यां तिरोधानानुपपत्तिः
पञ्चत्रिंशो वादः ।

---

तद्धर्माप्रकाशलक्षणं तिरोधानमित्यत्र तत्वज्ञाननिवर्त्यमिति शेषः। अतो निर्धर्मकत्वादेव तद्धर्मविशिष्टतया प्रकाशाभावरूपमावरणं सम्भवतीति न चोद्यावकाशः।

इति वाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
तिरोधानानुपपत्ति

पञ्चत्रिंशस्कन्धः ।

श्रीरस्तु ।

## अथ षट्त्रिंशो वादः ।

नमस्त्रेधा विभक्तानामात्मनामन्तरात्मने ।
ब्रह्मणे ह्यवस्त्राय बन्धमोक्षैकहेतवे ॥

यदुच्यते तावदात्माद्वैतवादिभिरेक एवात्मा देहाद्युपाधिभेदेन बहुधा प्रतिभाति, तरङ्गचन्द्रवत्, सौभर्यादिवच्च । तथा च प्रयोगाः- विगीतानि शरीराणि मयैवात्मवन्ति, शरीरत्वात्, सम्प्रतिपन्नमच्छरीरवत्; सर्वं जाग्रच्छरीरं मदविद्याकल्पितम्, शरीरत्वात्, कल्पितत्वाद्वा, स्वप्नदृष्टमच्छरीरवत्, सर्वोऽप्यात्मा अहमेव, चेतनत्वात्, अहमिव; सर्वाणि सुखदुःखानि मयैव भुज्यन्ते, सुखदुःखत्वात्, मत्सुखदुःखवत्, विगीतानि शरीराणि देवदत्तात्मना आत्मवन्ति, शरीरत्वात्, सम्प्रतिपन्नदेवदत्तशरीरवत्, एवं सहस्रशोऽनुमानानि विभज्य प्रयोज्यानि । विप्रतिपन्नश्शरीरभेदोऽनेकात्मनिरपेक्षः, शरीरभेदत्वात्, सौभरिशरीरभेदवत् । एवमनुमानान्तराण्यपि करणभेदादिपक्षीकारेण

---

नम इति । आत्मैक्ये सति बद्धमुक्तनित्यव्यवस्था न स्यात्, तथा ब्रह्मणो जीवान्तर्यामित्वं संसारमोक्षस्थितिबन्धहेतुत्वं च भज्येतेति भावः । उपाधिपदेन प्रतिबिम्बोपाधिराकाशादौ घटादिवदवच्छेदकतयोपाधिश्च मतभेदेन विवक्षितः । तरङ्गचन्द्रवदि ति ब्रह्मणो जीवः प्रतिबिम्ब इति मते । सौभर्यादिव दिति आकाशादिभ्यो घटाकाशादिवत् ब्रह्मण उपाधिना भिन्नो जीव इति मते । तथाचे ति । यथा जीवैक्यं सिध्यति तथेत्यर्थः । स्वशरीरे सिद्धसाधनतापरिहाराय विगीतानी ति । मये ति । अनात्मान्तरवत्त्वेऽपि मयात्मवत्त्वमस्तीति नार्थान्तरशङ्का, गौरवादेवात्मान्तरस्य निरासात्, तस्मादेवदार पल्पितार्थानुवादः । एवमि ति । प्रतिपुरुषमुक्तचतुर्विधानुमानानि प्रयोज्यानि । ऐक्यसाधकानुमानमुक्त्वा भेदनिरासकमाह विप्रतिपन्न इति । देवदत्तादिशरीराणां परस्परभेदः एकात्ममात्राधिष्ठेयधर्मिप्रतियोगिक इत्यर्थः । घटानां परस्परभेदे व्यभिचारवारणाय शरीरे ति । एवमि ति।

भाव्यानि । एवमनभ्युपगमे कल्पनागौरवप्रसङ्ग इति । ननु — पण्डितत्वमूर्खत्वसुखित्वादिविरुद्धधर्माध्यासाद्भेदस्सिद्धः, तथाचाक्षपादैस्सूत्रितम्- "नानात्मानो व्यवस्थात" इति, उक्तंच-त्वदासन्नैस्साङ्ख्यैरपि- "जन्मजरामरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चेति ॥" सत्यपिच विरुद्धधर्मे यद्यभेदः, तदा सत्यमिथ्यैक्यादिकमपि स्यादिति शून्याद्वैतमेव स्यादिति चेन्न;- तेषां विरुद्धत्वाभावात् । सहानवस्थानलक्षणो ह्यत्र विरोधोऽभिमतः, स चाधिकरणभेदे सिद्धे, तत्सिद्धिश्च विरुद्धधर्माध्यासादिति अन्योन्याश्रयणात् । नचैवं घटपटादिष्वपि विरोधपरिहारे सर्वभेदविलय इति वाच्यम्, तेषु स्वरूपभेदस्यैव स्फुटतरमुपलभ्यमानत्वात्; अन्ततः इष्टप्रसङ्गरूपत्वाच्च । अत एवानुमानानां प्रत्यक्षबाधोपि परिहृतः । अत्र परस्परसुखादिप्रतिसन्धानप्रसङ्गो बाधक इति चेन्न;- एकेना

---

देवदत्तकरणानां यज्ञदत्तकरणानाञ्च परस्परभेद एकात्ममात्राधिष्ठेयधर्मिप्रतियोगिक इत्यर्थः । सौभरिशरीरस्थकरणानां परस्परभेदो देवदत्तचक्षुःश्रोत्रादिकरणानां वा परस्परभेदो दृष्टान्तः । आदिशब्देन देवदत्तादीनां बुध्यादिभेदो विवक्षितः । मूर्खत्वम् - अज्ञत्वम् । सुखित्वादी त्यादिपदेनासुखित्वस्वापतदभावादिर्गृह्यते । त्वदासन्नै रिति । अहमर्थाध्यासाङ्गीकारादिति भावः । सत्यमिथ्यैक्यादिकमि ति । आदिशब्देन निरधिष्ठानभ्रमो विवक्षितः । सत्यमिथ्याभेदे निरधिष्ठानभ्रमप्रसङ्गेन शून्याद्वैतं स्यादित्यर्थः । तेष्वि ति । विरुद्धधर्माध्यासात् भेदकल्पनायामुक्तदोषस्स्यादेव, नचात्र कल्प्यते, प्रत्यक्षेण भेदोपलम्भादिति भावः । अन्तत इति । सर्वस्यापि भेदस्य मिथ्यात्वादिति भावः । अतएवे ति । आत्मस्वरूपभेदस्य स्फुटतरोपलम्भाभावेन वैषम्यात् भेदमानस्य मिथ्यात्वाच्चेत्यर्थः । तदभिन्नत्वे तदनुभूतानुसन्धानप्रसङ्ग इत्यस्य तदनुभूतसर्वानुसन्धानप्रसङ्ग इत्याशय मत्वा व्यभिचारमाह एकेने ति । यथाश्रुते दोषाभावात्

नुभूतानामेव क्वचिदप्रतिसन्धानदर्शनात्। नहि जन्मान्तरानुभूतेषु एकस्मिन्नपि वा जन्मनि चिरकालदृष्टेषु पूर्वदिवसभुक्तव्यञ्जनादिषु वा सर्वेषां पुरुषाणां तत्तत्प्रतिसन्धानमुपलभामहे। संस्कारप्रमोषात्तदपटुत्वाद्वा तत्र प्रतिसन्धानाभाव, ये पुनरप्रमुषितस्फुटतरसंस्कारास्ते जातिस्मरादयो जन्मान्तरानुभूतमेतज्जन्मानुभूतं च प्रतिसन्दधत इति चेन्न, अत्राप्यविद्यावैचित्र्यादुपाधिभेदप्रतिनियततया वा प्रतिसन्धानाभाव माक्षतानाम्, तत्त्वविदस्तु प्रह्लादवामदेवादय प्रतिसन्दधतीति तुल्यम्। यथोक्त "सर्वगत्वादनन्तस्य स एवाहमवस्थित। मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने॥" इत्यादि। श्रुतिश्च "तद्धैतत्पश्यन्नृषिर्वामदेव प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र" इति। आदिभरतऋभुनिदाघादिवृत्तान्तेषु च व्यक्तोऽयं पन्था।

किञ्च परम्परसुखादिप्रतिसन्धानमस्मदादिष्वपि प्रसज्यमानन्नानिष्टम्। योहि स्वसुखादीन् प्रतिसन्धत्ते स एवान्योपीत्यस्मन्मते तत्प्रतिसन्धानमप्येतत्प्रतिसन्धानमेवेति किमत्र प्रसञ्जनीयम्। नाहं राजादिसुखमनुभवामीति प्रतिसन्धानाभाव प्रत्यक्षसिद्ध इति चेन्न, अहं सुखमनुभवामीति राजशरीरे तदुपलम्भात्।

---

शङ्कते संस्कारे ति। अप्रमोषहेतु स्फुटतरे ति। स्फुटतरप्रतीतिगोचरविषयसंस्कारो विवक्षित। अत्रापी ति। आत्माभेदेपीत्यर्थ। तुल्य मित्यनेनान्वय। वैचित्र्यादि ति। विचित्रशक्तियोगादित्यर्थ। उपाधी ति। एतदन्त करणावच्छिन्नानुभूतमेतदन्त करणावच्छिन्नेनैव स्मयत इत्यर्थं। नाहं राजादी ति। ततश्च तत्प्रतिसन्धानमप्येतत्प्रतिसन्धानमित्येतदनुपपन्नमिति भाव। तदुपलम्भादि ति। नाहं राजादिसुखमनुभवामीति यस्यानुभव तस्यैवेति शेष। अत प्रत्यक्षसिद्धत्वात् प्रतिसन्धानस्य न तस्य तदभावप्रत्यक्षेण बाध इत्यर्थं।

अन्यस्यैव उपलम्भ इति चेन्न;- व्याप्यन्यत्वासिद्धेः । अहमस्मादन्यः अयं च मत्तोन्य इति परस्परान्यत्वं प्रत्यक्षसिद्धमिति चेन्न;- परस्याप्रत्यक्षत्वेन तद्गतान्यत्वस्य प्रत्यक्षयितुमशक्यत्वात् । स्वस्य प्रत्यक्षत्वेपि स्वगतान्यत्वस्यापि प्रतियोगिभूतपरप्रतीतिमन्तरेणानुपपत्तेः । परश्च प्रतीयमानो ऽन्यतया वा स्यात्, अनन्यतया वा, सामान्यतो वा? नाद्यः, प्रत्यक्षतस्तदप्रतीतेः । लिङ्गतोपि कश्चिदस्तीत्यनुमीयते, न तु मत्तोन्य इति । मुखविकासादिना स्वविरुद्धसुखाद्यनुमानेन्यत्वमप्यनुमितं भवतीति चेन्न;- तेषां विरुद्धत्वस्य प्रागेव दूषितत्वात् । न द्वितीयः, सर्वेषां स्वप्रतियोगिकव्यतिरेकभङ्गेन शून्यवादावतारात् । अत एव न तृतीय, प्रतिसन्धानमात्रात् भेदे स्वस्मा

---

तस्यैव प्रतिसन्धानं प्रत्यक्षसिद्धमित्येनदसिद्धमिति शङ्कते अन्यस्यैवे ति । असिद्धिरसिद्धेति शङ्कते अहमस्मादि ति । परस्ये ति । अधिकरणयोग्यताया भेदग्रहे तन्त्रत्वादिति भावः । तत किमित्यत आह परश्चे ति । अन्यतये ति । प्रतीयमान इति शेषः । प्रत्यक्षत इति । अधिकरणस्याप्रत्यक्षत्वादिति भावः । ननु मुखविकासादिना सुखादिकमनुमाय तस्य स्वाहन्त्वविरुद्धतया विरुद्धधर्माध्यासात् स्वान्यत्वेनानुमानमस्तीति शङ्कते मुखविकासेति । तेषामि ति । अन्योन्याश्रयेण विरुद्धत्वग्रहासम्भवान्नानुमानमिति भावः । सर्वेषामि ति । अनन्यत्वेन गृहीतावन्यत्वं गृह्यते तदान्यत्वानन्यत्वयो विरोधो नास्तीति वाच्यम्, विरोधेनान्यत्वेन ज्ञातादन्यत्वग्रहासम्भवात्, एवञ्च स्वस्यापि स्वानन्यत्वेन ग्रहात्तदन्यत्वतद्ग्रहयोः प्रसङ्गाच्छून्यवादावतारः, अथ द्वाद्विकस्य घटाद्विकत्वे निस्स्वरूपप्रसङ्गादित्यर्थः । प्रतिसन्धाने ति । स्वस्यापि प्रतिसन्धानात् स्वस्मादपि भेदग्रहप्रसङ्ग इत्यर्थः । ननु एवमपि राजशरीरावच्छिन्नस्याहं सुखमनुभवामीति प्रतिसन्धानस्य देवदत्तीयत्वे देवदत्तीयया नाहं राजादिसुखमनुभवामीति प्रतीत्या प्रतिसन्धानाभावस्यापि सिद्धिःस्यात्,

दपि भेदप्रसङ्गात्। तथापि कथं प्रतिसन्धानतदभावयोस्सिद्धिरिति चेन्न;- तदभावस्यासिद्धेः। सिद्धावपि देशकालोपाध्यादिभेदेन तदुपपत्तेः। अन्यथा स्वाश्रयैकदेशवर्तिसंयोगादि [गुण] विलयप्रसङ्गात्। नचैतद्युक्तम्, ईश्वरघटादिसंयोगस्य व्यापित्वे घटादेरपि विभुत्वप्रसङ्गात्। सयोगादीनां स्वाभावसमानाधिकरणतयैव धर्मिग्राहकेणैव सिद्धेस्तथाभ्युपगमः, इहतु न तथेति चेन्न;- अत्रापि प्रागुक्तानुमानैरद्वैतशास्त्रैश्च सुखादीनामपि तत्सिद्धेः। वैशेषिकादिभिस्तथाभ्युपगमाच्च। तथाच श्रूयते- "अथातोहंकारादेश" इत्यारभ्य, "अहमेवेदं सर्वमात्मैवेदं सर्वमि" ति। आत्मभेदश्च बहुशो निषिध्यते - 'नेह नानास्ति किञ्चन। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति। यत्र त्वस्य

---

एवञ्च विरुद्धयोः प्रतिसन्धानतदभावयोस्सामानाधिकरण्यापत्तिरिति शङ्कते तथापी ति। तदभावस्ये ति। तत्प्रतीतिर्भ्रान्त्येति भावः। विपरीतप्रमायां सत्या भ्रान्तिरप्यनुपपन्नेत्यरुचेराह सिद्धावपी ति। देशे ति। क्वचिदवयवे प्रदेशभेदेन क्वचित् एकस्मिन्नपि प्रदेशे कालभेदेन क्वचिन्निरवयवे कला-काशादावुपाधिभेदेन। आदिशब्देन सत्यत्वमिथ्यात्वादिभेदो गृह्यते। तदुपपत्तेः - प्रतियोगितदभावयोस्सामानाधिकरण्योपपत्तेरित्यर्थः। कथमित्यत्र प्रतियोगितदभावयोस्सामानाधिकरण्यानुपपत्तेर्हेतुतया विवक्षितत्वात् तत्सामानाधिकरण्यपरामर्शः। शङ्कते संयोगादीनामि ति। तथे ति। उपाधिभेदेनाविरोधाभ्युपगम इत्यर्थः। तत्सिद्धेः - स्वाभावसामानाधिकरण्यसिद्धेः। तथे ति। सुखादीना स्वाभावसामानाधिकरण्येनेत्यर्थः। अद्वैतशास्त्रमेव दर्शयति तथाचे ति। 'अथातोऽहंकारादेश' इत्यारभ्यानन्तरवाक्यैः 'अहमेवाधस्तादहमुपरिष्टा' दित्यादिभिरधस्त्यादिसर्ववस्तुतादात्म्यस्य प्रतीतेः 'अहमेवेद सर्वं' मिति तत्रत्यवाक्यान्तरेणापि तत्प्रतीतेरद्वैत सिद्धमित्यर्थः। इत्यारभ्य श्रूयते, अहमेवेदं सर्वमिति च श्रूयत इत्यन्वयः। यत्रत्वस्ये ति। 'यत्र हि

सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयान्नात्मैत्येवोपासीत, द्वितीयाद्वै भयं भवती " त्यादिभिः । तथाच स्मृतिः- " तस्यात्मपरदेहेषु सतो प्येकमयं हि यत् । विज्ञानं परमार्थो हि द्वैतिनोतथ्यदर्शिनः ॥ यद्यन्योऽस्ति परः कोपि मत्तः पार्थिवसत्तम । तदैषोहमयं चान्यो वक्तुमेवमपीष्यते ॥ वेणुरन्ध्रविभेदेन भेद ष्षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथा सौ परमात्मनः ॥ आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैकोह्यनेकस्थो जलाधारेष्विवांशुमान् ॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ " इति । उक्तंच भगवता - ' सर्वभूतस्थमात्मानं सर्वभूतानिचात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शन ॥ ' इति । एवंविधान्यन्यान्यपि वचनान्यसङ्ख्यातत्वान्न कार्त्स्न्येनोदाहर्तुं शक्यन्ते । नच बद्धमुक्तव्यवस्थाभावप्रसङ्गः, ब्रह्माज्ञानवादे त्वितः पूर्वं मुक्तानामेवाभावात् । एकमेव हि ब्रह्मैकया अविद्यया बध्यमानं बहुतया बम्भ्रमीति, तदेव कदाचिन्मोक्ष्यत इति स्थिते । शुको मुक्तो वामदेवो मुक्त इत्यादि शास्त्रं कथमिति चेन्न; - कथञ्चित्स्वप्नपुरुषमोक्षवत् तस्यापि मिथ्यात्वात् । जीवाज्ञानवादे तु प्रतिजीवमविद्याभेदाज्जीवानाञ्च बिम्बप्रतिबिम्बस्थानीयत्वात्प्रातिस्विकाविद्यानिवृत्त्या प्रत्येकमोक्षे जीवान्तरस्थित्युपपत्तेः ।

---

द्वैतमिव भवति तदितर इतर पश्यती ' त्युपक्रमात् ' यत्र त्वस्य सर्वमात्मैवाभू ' दित्येवकारार्थे द्वैतनिषेधे तात्पर्यमिति भावः । आत्मेत्येवे ति । ' अथ योऽन्यां देवतामुपास्ते अन्योसावन्योऽहमस्मीति न स वेद ' त्युपक्रमादेवकारेण भेदोपासननिषेधात् भेदनिषेधसिद्धः, एव सर्वजीवाना परमात्मना भेदनिषेधे परस्परभेदनिषेधो प्यर्थसिद्ध इति भावः । एकमयमि ति । मयट्स्वार्थकः । अभेदव्यापिन इति । अभेदेन व्यापिन इत्यर्थ । ननु ब्रह्मणो बद्धावस्थाया

ब्रह्मणस्तु नित्यमुक्तत्वेन बद्धमुक्तावस्थयोरेवाभावात्। तस्माद-विद्यापरिकल्पितोयं जीवानां मिथो भेद इति।

अत्रोच्यते यदुक्तं 'विगीतानि शरीराणि मयैवात्मवन्ती' ति; तत्र मयेति किमहमर्थो विवक्षितः, उत तदनुबन्धिनी संवित्, उत तदुभयोत्तीर्णः कश्चित्तयोरपि साक्षी? नाद्यः, एकस्मिन्नपि शरीरे भवद्भिरहमर्थस्यात्मत्वानभ्युपगमेन तद्दृष्टान्तस्य साध्य विकलत्वात्। पक्षस्य चाप्रसिद्धविशेषणत्वात्। अनात्मनात्म वन्तीति प्रतिज्ञाविरोधापत्तेः। स्वसिद्धान्तविरुद्धाहमर्थात्मत्वतद्भेद सङ्कथनेनापसिद्धान्तप्रसङ्गाच्च। न द्वितीयः, अस्माभिस्तस्याः क्वचिदप्यात्मत्वानभ्युपगमेन साध्यविकलत्वादेव। तथैवाप्रसिद्ध विशेषणत्वमपि, सर्वत्र संविन्मात्रस्यास्माभिरात्मत्वप्रतिक्षेपात्। तथैव च विरोधः, अनहमर्थेन संविदा आत्मवन्तीति प्रतिज्ञानात्। नापि तृतीयः, भवदभिमतस्य साक्षिणोऽस्माभिरन्यत्र प्रतिक्षेपात्। अस्मदिष्टेन तु सर्वाध्यक्षेणेश्वरेणात्मवन्तीति साधने सिद्धसाधनात्। जीवाधिष्ठितान्यपि हि शरीराणि परमात्मनात्मवन्त्येव, तस्य सर्व शरीरत्वात्। सद्वारकमिति तु विशेषः। एवमुत्तरेष्वपि प्रयो-

---

जीवस्य मुक्तौ ब्रह्मैक्यात् पुनर्बन्ध एव स्यादिति न बद्धमुक्तव्यवस्थोप-पत्तिरित्यत्राह ब्रह्मणस्त्वि ति। यद्वा प्रागुक्तपक्षपरित्यागेन एतत्पक्षपरिग्रहे हेतुमाह ब्रह्मणस्त्वि ति।

प्रतिज्ञाविरोधे ति। यद्यप्यनात्मनात्मवन्तीति न प्रतिज्ञाक्षरं, तथाप्यहमर्थस्य वस्तुतोऽनात्मत्वात् प्रतिज्ञाविरोधो द्रष्टव्यः। संविन्मात्रस्ये ति। संविदाश्रय एवात्मा, न तु संविदित्यर्थः। घटादिविषयज्ञानमेव संविदिति भावः। सद्वारकमि ति। सद्वारकमेवेति भावः।

गेष्वस्मच्छब्दविकल्पेन दूषणमूह्यम् । विशेषतोपि ब्रूम - यत्तु-मदविद्याकल्पितमिति साध्यते, तत्रापि दृष्टान्तस्य साध्यविकलत्वेन, स्वप्नदृष्टानामपि पदार्थानामीश्वरसृष्टत्वस्य श्रुतिसिद्धत्वात् । 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान्पथ सृजते, सहिकर्ता' तीश्वरकर्तृत्वश्रवणात् । समर्थित चैतत् 'सन्ध्ये सृष्टिराह ही' त्यस्मिन्नधिकरणे । मदविद्याकल्पितमित्यस्य साध्यस्य प्रपञ्चसत्यत्वप्रतिपादनेन बाधोपि द्रष्टव्य । तेनैव कल्पितत्वादिति हेतोरसिद्धिश्च ।

यत्तु सर्वोप्यात्मा ऽहमेव, चेतनत्वादिति । तत्राहमर्थत्वमात्रसाधने सिद्धसाधनता । स्वतादात्म्यसाधने वक्ष्यमाणेन विरुद्धधर्माध्यासेन बाध । चेतनत्वादिति हेतोस्स्वपक्षेणासिद्धि । दृष्टान्तस्य साधनविकलता च । चिद्रूपत्वमात्रस्य हेतुत्वे धर्मभूतज्ञानेनैकान्त्य । त्वत्पक्षे वृत्तिज्ञानेनापि । वैशेषिकादिमतेनासिद्धिश्च । आत्मत्वादिति प्रयोगेपि चेतनत्वचिद्रूपत्वादिविकल्पेन दूषणमूह्यम् । आत्मत्वजातिमत्त्वादिति विवक्षाया नानात्मवादप्रसङ्ग, व्यक्तिभेदनान्तरीयकत्वाज्जाते ।

यत्तु सर्वाणि सुखदु खानि मयैव भुज्यन्त इति । तत्र स्वहृदयविसवादस्तावत् । यदिच सर्वाणि दु खानि स्वेनैव भुज्यन्ते, तर्हि कथ परहिंसादिप्रवृत्ति । नहि स्वसुखोच्छेदाय स्वदु खोत्पादनाय वा प्रेक्षावन्त प्रवर्तेरन् । अद्वैतदर्शिना न

---

स्वपक्षेणे ति । ज्ञानाश्रयत्वमेव चेतनत्वमिति भाव । स्वप्रकाशत्वं चित्त्वमिति विवक्षाया दोषमाह वैशेषिकादी ति । स्वपक्षेतु धर्मभूतज्ञानेनानैकान्त्य द्रष्टव्यम् । चिद्रूपत्वादी ति । आदिपदेन स्वप्रकाशत्व गृह्यते । यथाश्रुतविवक्षायामाह स्वहृदये ति । तदनुवधिचैतन्यमात्रविवक्षायामाह यदिचे ति । अद्वैते ति । तथा प्रवृत्तेर्द्वैतभ्रम एव

तथा प्रवर्तनमिति चेन्न, सर्वतत्त्वोपदेशिना भगवता वासुदेवे नापि स्वयमेव वा धनञ्जयादिमुखेन वा परपीडादर्शनात् । नित्यमुक्तत्वेनास्पृष्टसुखदुःखस्यात्मनस्तद्भोक्तृत्वसम्भवादपसिद्धान्तश्च । अतएव दृष्टान्ते साध्यवैकल्यं च । अथ परमतेन भोक्तृत्वमन्वारुह्योच्येत, तदापि तन्मतेनाहमर्थस्यैवात्मत्वात्तदद्वैतसाधने भवत कथमात्माद्वैतसिद्धिः ।

अस्मच्छब्दानुबन्धेन यान्यन्यान्यैक्यसाधने ।
प्रयुक्तान्यनुमानानि तेषामेषा निराक्रिया ॥

यत्पुनरस्मच्छब्दानुबन्धमुत्सृज्य विगीतानि शरीराणि देवदत्तात्मनात्मवन्तीति प्रयुक्तम्, तत्राप्यहमर्थत्वसंविन्मात्रत्वाद्यात्मशब्दार्थविकल्पेन प्रागुक्तदोषो दुस्तर एव ।

यच्च प्रतिपन्नश्शरीरभेदोनेकात्मनिरपेक्ष इति, तत्रैकात्माधिष्ठितत्वविवक्षायामीश्वराधिष्ठानेन सिद्धसाधनता । भिन्नात्माधिष्ठानराहित्यविवक्षायान्निषेध्यसिद्धौ तथैव तत्सिद्धेर्बाध । तदसिद्धौ किन्निषेध्यम् । क्वचित्प्रमितस्यैव निषेध्यत्वमिति स्थितमन्यत्र । एवमन्येष्वप्यात्मैक्यसाधनेषु दूषणमूह्यम् ।

य पुनर्विपक्षे दण्डवत्प्रदर्शित कल्पनागौरवप्रसङ्ग इति, स तदा स्यात्, यदि नोपलभ्येत न श्रूयेत वा भेद । वक्ष्यते तदुभयम् । प्रतिप्रयोगाश्च चैत्रात्मा मैत्रात्मनो भिन्न, कदाचिदपि मैत्रानुभवजनितस्मृतिरहितत्वात्, घटवत्, व्यतिरेकेण

---

हेतुरिति भाव । तदापी ति । नहि त्वदभिमतसंविदो भोक्तृत्वमभ्युपगच्छन्ति, किन्त्वहमर्थस्यैवेति भाव । संविन्मात्रत्वादी ति । आदिपदेन साक्षी- त्वादिग्रहणम् । तत्रैकात्मे ति । यथाश्रुते वक्ष्यमाणदूषणभीत्या एवं विवक्षा इति भाव । निषेध्यसिद्धावि ति । निषेध्यप्रसिद्धौ पक्षएव तत्पर्यवसानात्

वा, यो मैत्रालभिद्यते स तदनुभवजनितस्मृतिमान्, यथामैत्रात्मैव, इत्यादयः । नचात्र हेत्वसिद्धिः, स्वात्मप्रत्यक्षसिद्धत्वात् । अन्यथा ऽऽचार्यानुभूतमखिलं च स्मरन् किमर्थं शृणोषि । पराभिप्रेतं च जानन् किमर्थं विकल्पयसि । मयि च त्वदभिप्रेताभिज्ञे किमर्थमुत्तरं ददासि । परोक्तं च त्वदुक्तमभिमन्यमानः किमर्थं दूषयसि । निर्विशेषणतया पूर्वेषां प्राबल्यमिति चेन्न;- विशिष्टव्याप्त्युपलम्भानुरोधिनो बलीयस्त्वात् । अन्यथा मेयत्वाभिधेयत्वादीनामाभासहेतूनां निर्विशेषणतामात्रेण बलीयस्त्वे सविशेषणानां हेतूनामुपप्लवः । तेन पूर्वेषामपि बाधो निर्विशेषणानामपि जायते ।

यत्तु— पण्डितत्वमूर्खत्वादीनां विरुद्धत्वन्नास्ति, अधिकरणभेदे सिद्धे सहानवस्थानलक्षणविरुद्धत्वम्, ततश्च स इत्यन्योन्याश्रयणादिति । तत् किं क्वचिद्विरोधमभ्युपगम्य सोत्र नास्तीत्युच्यते, उत क्वचिदपि विरोधाभावमभिमत्य? नाद्य, अविशेषात् । नहि सितासितादिभेदात् ज्ञानाज्ञानादिभेदस्य वैषम्यं पश्यामः । अधिकरणस्वरूपभेदस्य स्फुटोपलम्भाद्वैषम्यं सिद्ध

---

याध इत्यर्थः । हेत्वसिद्धिरिति । सन्दिग्धासिद्धिरित्यर्थ । अन्यथेति । साध्याभावे हेत्वभावे चेत्यर्थः । मयि चेति । त्वदभिप्रेताभिज्ञत्वेन ज्ञानादिति भावः । साध्याभावे असाधारण दोषमाह परोक्तञ्चेति । निर्विशेषणतयेति । व्याप्त्योर्निरोधादन्यतरस्यातिरस्कारे भिन्नविषयत्वेपि लाघवन्नियामकमिति पूर्वेषां प्राबल्यं न समप्रतिरोधत्वमिति भावः । उपप्लवः । स्यादिति शेषः । उपसंहरति तेनेति । पूर्वेषामपीत्यपिना भूयस्त्वेपीति विवक्षितम् । अविशेषादिति । विरोधाभ्युपगमहेतोर्धर्मिभेदस्याविशेषादित्यर्थः । सितेति । सितासितादिरूपात्मकात्तदाश्रयद्रव्यभेदात् ज्ञानाज्ञानादिरूपस्य भेदस्य वैषम्यं न पश्यामः ।

मिति चेन्न;- असिद्धेः । नहि वैधर्म्यानुपलम्भेपि वस्तूनां भेदस्सिध्यति, तस्यैव तत्त्वात् । अन्यथा वैधर्म्याग्रहेपि स्वरूपोपलम्भमात्रेण भेदसिद्धौ संशयविपर्ययोच्छेदप्रसङ्गात् । अथ पुनर्वैधर्म्योपलम्भवेळायां स्वरूपभेदोप्यन्यः प्रतीयत इत्यभिमन्यसे, तर्ह्यत्रापि तथानुमन्यस्व । नापि द्वितीय., अविवादप्रसङ्गात् । नहि स्वसिद्धान्ताविरोधिनि परमते विवादसम्भव॰ । अन्यथा स्वसिद्धान्तवादिभिरपि विवादप्रसङ्गात् । अनेकान्तवादस्य च साम्राज्यापातात् ।

किञ्च—

स्थिरीकृतो विरोधस्स्याद्विरोधं प्रतिरुन्धता ।
विरोधाप्रतिरोधेहि विरोधो निरुपद्रवः ॥
विरोधोद्घाटनम्मुक्त्वा किन्नु दूषणमुच्यते ।
सर्वत्रैवाविरोधे तु भवेत्सर्वविरोधिता ॥

यत्तु— मलपितम्, घटपटादिष्वपि विरोधपरिहाराद्भेदविलय

---

असिद्धेः, वैधर्म्यस्येति शेषः । निमधिकरणस्वरूपो भेद इति विवक्षितम्, किंवा अधिकरणे स्वरूपानुबन्धी भेदस्स्वरूपभेद इत्यन्योन्याभावो विवक्षित., इति विकल्पमभिप्रेत्य प्रथमे दोषमाह नही ति । स्वरूपानुबन्धी प्रतियोगिस्वरूपानुबन्धी, प्रतियोगिज्ञानाधीनज्ञानः, तेन वैधर्म्यव्यावृत्तिः । हिशब्दो भिन्नक्रमः । तस्यैव तत्त्वाद्धि वैधर्म्यानुपलम्भेपि वस्तूना भेदो न सिध्यतीति । द्वितीय शङ्कते अथपुनरि ति । तर्ही ति । देवदत्तघटयोर्ज्ञानाज्ञानलक्षणवैधर्म्य ग्रहणवेलाया तयोः तत्स्वरूपैरनिरूप्यो ऽन्यो भेदः प्रतीयते, एवञ्च ज्ञानाज्ञानयोर्विरोधसिद्धे. तद्रूपविरुद्धधर्माध्यासाभ्यात्मभेदस्सिध्यतीति भावः । एव चात्रामूर्तपद ज्ञानाभावपरम् । स्थिरीकृत इति । किञ्च विरोधः प्रतिरुध्यते न वा ? आद्ये विरोधतदभावयोर्विरोध. स्थित॰, द्वितीये सर्वोऽपि विरोधः स्थित इत्यर्थ. । विरोधोद्घाटनमि ति । सर्वत्र विरोधोद्घाटनेनैव दूषणमु-

इत्यत्र इष्टप्रसङ्गत्वमिति ; तत्त्वसिद्धान्तोच्छेदायोक्तम्, सर्वाद्वैते सत्यमिथ्यार्थविभागभङ्गप्रसङ्गात् । सर्वमिथ्यात्वस्य च भवद्भिरनभ्युपगमात् । विरोधमुत्सृज्य सत्यमिथ्याविभागस्य दुरुपपादत्वाच्च । एवञ्च विरोधसिद्धावनुमानादिसिद्धपरप्रतियोगिकभेदस्य स्वात्मनि प्रत्यक्षतया प्रत्यक्षबाधोपि सिद्धः । अतएव परस्परप्रतिसन्धानप्रसङ्गोपि निरूढश्च । पटुप्रत्ययाभ्यासादराहितातिशयतादात्विकसंस्कारवशेन प्रतिसन्धानप्रसङ्गे सति न जन्मान्तराद्युदाहरणावकाशः ।

यत्तु तत्रोक्तम्- अविद्यावैचित्र्यादुपाधिभेदप्रतिनियततया वा प्रतिसन्धानाभाव इति, तदपि न, अविद्यास्वरूपतत्प्रमाणादेरन्यत्र प्रतिक्षेपात् । अन्यथा चिदचिद्विभागस्यापि तद्वैचित्र्यनिबन्धनतया तदैक्यस्यापि प्रसङ्गात् । उपाधिभेदस्तु न प्रतिसन्धानप्रतिबन्धकः, सौभर्युपाधिभेदवत्, अन्यथा जातिस्मरत्वमपि कस्य

---

च्यते, विरोधाभावे तत्र स्यात् । अपिच सर्वत्र विरोधाभावे विरोधेन सह विरोधाभावादविरोधिनामपि सर्वेषां विरोधिता स्यादित्यर्थः । एवञ्चे ति । अनुमानादिसिद्धस्य परस्य विशेषणम् । भेदस्फुटोपलम्भाविशेषात् सत्यमिथ्याविभागस्य सत्यत्वाच्च विरोधसिद्धौ मुखविकासादिना स्वानिरुद्धसुखादिमत्तयानुमानेनान्यत्वेन प्रतियोगिग्रहणेपि दोषाभावात् भेदप्रत्यक्षसम्भवात् तद्बाधः, अविशब्दात् विरुद्धधर्माध्यासलक्षणप्रतिकूलतर्कबाधश्च सिद्ध इत्यर्थः । अतएवे ति । उक्तरीत्या प्रतिसन्धानतदभावयोर्विरोधे सिद्धे प्रतिसन्धानाभाववत्तया निश्चिते प्रतिसन्धानप्रसञ्जने नेष्टापत्तिरित्यर्थः । नहि जन्मान्तरेत्यादिनोक्तव्यभिचारमुद्धरति पटुष्विति । पटुप्रत्ययेनाभ्यासेनादरेणचाहितातिशयो यस्संस्कारः तद्वशेनेत्यर्थः । परस्परस्य पटुप्रत्ययाभ्यासादराहितातिशयस्संस्कारो यदा तदा तद्बोधगर्भविषयप्रतिसन्धानप्रसङ्ग इति प्रसञ्जने तात्पर्यम् । अन्यथे ति । अप्रतिसन्धानस्याविद्यावैचित्र्याधीनत्वे । अविद्याया प्रतिक्षेपादतिप्रसङ्गाच्च नेत्यन्वयः । सौभरी ति । उपाधिशरीरम् । अन्यथे ति । उपाधेः प्रतिबन्धकत्वे कस्य

चित्र स्यात् । अन्तःकरणैक्यात्तदुपपत्तिरिति चेन्न,- केषाञ्चि त्कल्पान्तरानुभूतस्मृतिदर्शनात् । अन्तःकरणभेदात्सुखादिव्यव स्थया बाह्यकरणभेदादपि व्यवस्था किन्न स्यात् । नच तथाऽस्ति, दृष्टमेव स्पृशामीति प्रतिसन्धानात् । एवं पाणिपादाद्यवयवभेदा दपि प्रसङ्गो दर्शयितव्यः ।

यत्तु तत्वविदः प्रह्लादवामदेवादयः प्रतिसन्दधत इत्युक्तम्; तदपि मन्दम्, तेषां सर्वान्तरात्मभूतपरमात्मपर्यन्तस्वात्मानुसन्धा नेन तथा तथा व्यपदेशात् । अत एव हि "सर्वगत्वादन- न्तस्ये" त्युक्तम् । तदभिप्रायेण च श्रुतिः "तद्धैतत्पश्य न्नृषि" रिति । तदेतद्ब्रह्मान्तर्यामिकत्वं पश्यन्नित्यर्थः । एव मेव हि "सर्वं समाप्नोषि ततोसि सर्वः" इत्यादिकमपि । एते नैवादिभरताद्यनुसन्धानप्रकारोपि निर्व्यूढः । अन्यथा तत्वविदां सर्वात्मगतसुखदुःखानुसन्धाने त्वेकदर्वीकरभयपलायितस्यानन्तसर्प मध्यनिपातन्यायेन तत्त्वदर्शित्वं विपरीतफलं स्यात् । नच तेषां सर्वकर्मक्षयात् भोगो नास्तीति वाच्यम्; स्वगतसुख

---

चिदपि जातिस्मरत्वं न स्यात् । अपिशब्दस्सौभरिप्रतिसन्धानाभावप्रसङ्गसमुच्च यार्थः । नन्वन्तःकरणोपाधिभेद एव प्रतिसन्धानप्रतिबन्धकः, अतोऽन्तःकरणै क्यादिह प्रतिसन्धानमुपपद्यत इति शङ्कते अन्तःकरणे ति । कल्पान्तरे ति । पूर्वान्तःकरणं कल्पान्तरे नष्टमिति भावः । 'तन्मनोकुरुते' त्यादिना हि मनस्सृष्टिः श्रूयते । बाह्ये ति । करणत्वाविशेषादिति भावः । इष्टापत्तिं परिह रति नचे ति । सर्वगत्वादि ति । अनन्तस्यैव सर्वत्र विद्यमानत्वादित्येवं काराध्याहारः । अन्यवृत्तिनिषेधायोगादात्मतयेति विवक्षणीयतया आत्मतये त्यध्याहारः, समाप्यात्मत्वादित्यध्याहारः, हेतुकथनवैरस्यं च परपक्षे स्यादिति भावः । अन्यथे ति । एतादनुसन्धानस्य सर्वान्तरात्मत्वप्रयुक्तत्वमपहायाभेद- प्रयुक्त त्वाङ्गीकारे । विपरीतफलं स्यादि ति । प्रारब्धकर्मावसाने निर्दोषाविद्या-

दुःखानुसन्धानस्यैव भोगत्वेन तदनङ्गीकारव्याघातात्।

यत्तु सुखादिप्रतिसन्धानप्रसङ्गे परप्रतिसन्धानमपि स्वप्रतिसन्धानमेवेति किमत्र प्रसञ्जनीयमित्युक्तम्; तदपि विरोधोपपादनेनैव परिहृतम्।

यत्तु परस्परान्यत्वोपलम्भे जल्पितम्- परस्याप्रत्यक्षत्वे तद्गतान्यत्वमपि न प्रत्यक्षयितुं शक्यमिति; तस्य किं प्रत्यक्षनिर्बन्धेन, अनुमानतोपि तत्सिद्ध्युपपत्तेः। स्वात्मनि तदन्यत्वस्य प्रत्यक्षत्वे स्वप्रतियोगिकतद्गतान्यत्वस्यानुमातुं शक्यत्वात्। यो यद्गतान्यत्वप्रतियोगी स ततोन्यः, यथा सव्यहस्ताद्दक्षिणहस्त इति हस्तस्थत्वाद्व्याप्तेः। यत्तत्रोत्तरम्परः प्रतीयमानोन्यतया वा, अनन्यतया वा, सामान्यतोवेति; तत्रान्यतयैवेति ब्रूमः। यद्यपि तत्र न प्रत्यक्षम्, तथापि मुखविकासाद्यनुमितेन हर्षादिना स्वस्मिन्ननुपलभ्यमानेन स्वस्मादन्यतयैवानुमातुं शक्यते। दर्शितं च

---

निवृत्तौ सत्यां भेदक्लेशस्याप्यभावात् सकलर्यात्मभिरैक्यात् परिमितस्वकीयसंसारे अतृप्तया युगपदपरिमितसंसारप्राप्तये ब्रह्मज्ञानसम्पादनं स्यादिति च भावः। नित्यप्राप्तमप्यानन्दस्वरूपं संसारदशायां विक्षिप्तचित्ततया अप्राप्तमिव स्थितम्, मोक्षदशायां चित्तविक्षेपाभावात् प्राप्तं भवतीति ह्युच्यते, तत् संसारदशायां भेदाभासमहिम्ना अप्राप्त इव स्थितोऽपि अपरिच्छिन्नसंसारो ब्रह्मज्ञानेन निश्शेषाविद्याविनाशात् भेदाभासनिवृत्त्या प्राप्तो भवतीत्यस्मिन्नर्थे पर्यवसितम्, ततश्च परमदुःखप्राप्तिरेव फलं स्यादिति भावः। विरोधोपपादनेने ति। प्रतिसन्धानतदभावयोर्विरोधस्य सिद्धत्वात् प्रतिसन्धानं तदभाववत्तया प्रत्यक्षसिद्धे न सम्भवतीत्यर्थः। ननु विरुद्धधर्मोपलम्भेन परस्मिन् स्वस्मादन्यत्वानुमानमपि स्वगतान्यत्वप्रत्यक्षत्ववदन्यत्वेन प्रतियोगिज्ञानादित्येव वाच्यम्, प्रत्यक्षानुमित्योरविशेषात्, तथाचान्योन्याश्रयः; किञ्चैवं स्वगतान्यत्वानुमानमिति पूर्वोक्तवैधर्म्यञ्च, वैयर्थ्यात्, तस्यापि प्रकारान्तरत्वे स्वगतान्यत्वप्रत्यक्ष

सुखदुःखतदभावादीनां यथोपलम्भं विरुद्धत्वम् । अत एव सामान्यतः प्रथमप्रतीतावप्यनन्तरं विरुद्धधर्मोपलम्भेनापि भेदानुमितिसिद्धा ।

एतेन प्रतिसन्धानतदभावयोः कथं सामानाधिकरण्यमित्यत्र तदभावासिध्दिवचनमपि प्रत्युक्तम् । तदभावसिध्दावपि उपाधि भेदेन तदुपपत्तिस्तु प्रागेव दूषिता ।

यत्तु प्रतिसन्धानतदभावविरोधशमनाय प्रदेशवर्तिसंयोगादिक मुदाहृतम्; तद्विवक्षितमजानतैवोक्तम् । नहि वयं प्रतिसन्धान स्वरूपस्य सर्वत्र वृत्तिं प्रसञ्जयामः, आत्मवैभववादिनो हि प्रदेश वर्तिन एव ज्ञानादिगुणान् वदन्ति । यत्र कचित्प्रदेशेनुभवो त्पन्नावपि तदन्येनापि प्रदेशेन प्रतिसन्धानादिकमवर्जनीयमेव । अन्यथा दक्षिणहस्तेन स्पृष्टं सव्यहस्तेन स्पृशामीति प्रतिसन्धानं

---

परगतान्यत्वानुमित्योरन्योन्याश्रय इत्यरुच्या सामान्यतः प्रतियोगिप्रतीत्या भेदधी सम्भवात् परस्परभेदप्रतीतिरिति पक्षान्तरमवलम्बते अत एव सामान्यत इति । उपलम्भानुसारादित्यर्थः । एतेन प्रतिसन्धानभानात् भेदे स्वस्मादपि भेदधी प्रसङ्ग इति पूर्वपक्षोक्तदोषो निराकृतः, उपलम्भानुसारेण भेदस्यैव तदङ्गी कारात् । प्रथमप्रतीतावपि । प्रतियोगिन इति शेषः । प्राथम्यमानन्तर्यञ्च स्वगतान्यत्वप्रत्यक्षापेक्षया द्रष्टव्यम् । परस्परान्यत्वज्ञानार्थे परगतान्यत्वज्ञाने प्रकारद्वयमाह विरुद्धे ति । अपिशब्देन स्वगतान्यत्वप्रत्यक्षं समुच्चीयते । एतेन – उपलम्भानुसारादित्यर्थः । नहिवयमि ति । प्रदेशविशेषोत्पन्नस्य प्रदे- शान्तरेपि वृत्तिन्न प्रसञ्जयाम इति भावः । यत्रे त्यतः प्रागपीत्यिति शेषः । प्रतिसन्धानादिकमि ति । आदिपदेन तत्कार्यव्यवहारपरिग्रहः । एवे त्यनन्तर मित्यध्याहारः, प्रसञ्जयाम इत्यनेनान्वयः । अन्यथे ति । दक्षिणहस्तेन स्पार्शनघटाद्यनुभवानन्तरं सव्यहस्तेन स्पार्शनघटादिसाक्षात्कारो जायमानः

न स्यात् । सौभरिप्रतिसन्धानमपि दूरमपास्येत ; तत्रापि प्रादेशिकप्रतिसन्धानोत्पत्त्या प्रतिसन्धानाभावस्य वक्तुं शक्य त्वात् । तस्मादाश्रयणविषयीकरणयोरविशेषभ्रमात् संयोगादिनिदर्शनम् । श्रुतयस्तु " अहमेवेदं सर्वम्, आत्मैवेदं सर्व " मित्यादिकाः प्रह्लादादिवाक्योक्तन्यायेन निर्व्यूढाः । " नेह नानास्ति किञ्चने " त्यादिभेदनिषेधास्तु समस्तचिदचिद्विशिष्टे ब्रह्मण्येकस्मिन् ज्ञाते विशिष्टबहिर्भूतप्रतिक्षेपपराः, यथा— शरीरजातिगुणवसनभूषणादिपरिगणिते कस्मिंश्चित् पुरुषेवस्थिते सत्रैक एव तिष्ठति नान्यः कश्चिदिति व्यपदिशन्ति; तद्व दत्रापि । एवमनभ्युपगमे ऽहन्त्वमादिलोकोपलम्भविरोधः । शास्त्रप्रत्यक्षविरोधे प्रत्यक्षप्राबल्यं स्थितमन्यत्र । तथा " नित्यो नित्यानां चेतनश्चेतनानामेको बहूनामि " त्यादिभेदश्रुतिशत कोपश्च । विषयभेदाद्विरोधे शाम्यत्यन्यतरबाधोनुपपन्न इति

---

प्राचीनस्पार्शनानुभवजन्यसंस्कारसहकारात् पूर्वानुभूतत्वांशे प्रतिसन्धानरूप एव दक्षिणहस्तेन स्पृष्टं सव्यहस्तेन स्पृशामीत्याकारो जायते, सच सव्यहस्ता वच्छेदेनैव जायत इति भाव । सौभरी ति । स्वप्रशरीरावच्छेदेनानुभूतस्य उत्थितेन स्मरण जातमात्रस्य स्तन्यपानादिप्रवृत्तिमूलभूतस्मृतिश्च न स्यादित्य प्युदाहार्यम् । वक्तुमि ति । प्रसञ्जयितु शक्यत्वादित्यर्थ । तस्मादि ति । स्वाभावानवच्छिन्नमेव प्रदेशमाश्रयतीत्यस्ति नियमः, न तु स्वाभावानवच्छिन्न मेव प्रदेश विषयीकरोतीति, तथाप्याश्रयणाद्विषयीकरणेऽपि तन्नियमभ्रमात् संयोगादिनिदर्शनमित्यर्थः । नेहे ति । चिदचिद्विशिष्टस्य वस्तुन' प्रमाणसिद्धतरा- दिह जगति चिदचिद्विशिष्टब्रह्मणो नानाभूत भिन्न किमपि नास्तीत्यर्थः । ज्ञात इति प्रामाणिकतापरम् । ननु विशेषणस्य विशिष्टात् विशेष्याद्वा भिन्नत्वान्निषेधानुपपत्ति', नवा बहिर्भूतप्रतिक्षेपसिद्धिरित्यत्राह यथे ति । ननु परत्वात् ' नेह नाने ' त्यद्वैतश्रुत्या द्वैतश्रुतिबाधोऽस्त्वित्यत्राह विषयभेदादि ति ।

सगुणनिर्गुणश्रुतिचिन्तने सुस्पष्टम् ।

मीमांसाशास्त्रसन्दर्भः सर्वो विषयभेदतः ।
श्रुतीनामविरोधाय जायते ननु बाधनात् ॥

एतेन स्मृतिष्वपि भारोऽवरोपितः । तत्रापि ब्रह्मात्मकत्व प्रतिपादनप्रकरणे प्रागुक्तन्यायावतारः । जीवानां परस्परभेदनिषेध प्रकरणे तु ज्ञानरूपतयात्यन्तसमस्वरूपाणां कर्मकृतदेहोपाधिक देवत्वादिभेदस्य स्वरूपानुबन्धित्वप्रतिक्षेपे तात्पर्यम् । तथाचोच्यते " देवादिभेदे ऽपध्वस्ते नास्त्येवावरणो हि सः । " " पुमान्न देवो न नरो न पशुर्नच पादपः । " इत्यादिना । " यद्यन्योस्ति परः कोपि " त्यत्रान्यशब्देनान्यादृशत्वमेवोच्यते, अन्यथा परशब्दपौनरुक्त्यात् । एवं सत्यात्मना परस्परसाम्य प्रतिपादकवाक्यान्तरानुगुण्यमपि सिध्यति । अत एव भगव द्वचनमपि निर्व्यूढम्, " सर्वत्र समदर्शिनः " इति तत्रैवोक्तेश्च । घटाकाशतरङ्गचन्द्राद्युदाहरणवाक्यस्य जीवविषयत्वे ऽयमेव न्यायः । तत्तु यदा परमात्मविषयम्, तदा तद्गतदोषैरस्पृष्टत्व मात्रे तदुभयदृष्टान्ततात्पर्यमिति " वृद्धिह्रासभाक्त्वमन्तर्भावादुभय सामञ्जस्यादेव दर्शनाच्चे " ति सूत्रेणैव समर्थितम् ।

---

मीमांसे ति । ननुबाधनादविरोधाये त्यन्वयः । एकस्याः श्रुतेः श्रुत्यन्तर विरोधः तद्विरुद्धार्थप्रमाणकत्वम्, तच्च तर्कितम्, तच्छमनं च मीमांसान्यायैर्न प्रामाण्यनिराकरणेन क्रियते, किन्तु अविरुद्धविषयान्तरप्रदर्शनेनैवेत्यर्थः । अनवरोपितभारस्मृतिविषयआह जीवानामि ति । उक्ततात्पर्यनिर्णये हेतुः स्मृतिरेवेत्याह तथाचे ति । साम्यप्रतिपादके ति । " विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनिचैव श्वपाके च पण्डितास्समदर्शिनः " ॥ इत्यादि यम् । भगवद्वचन मिति । पूर्वोक्त " सर्वभूतस्थमात्मान " मित्यादिकम् ।

एवमनभ्युपगमे बद्धमुक्तव्यवस्थाभङ्गश्च ।

यत्तत्रोक्तम्- ब्रह्माज्ञानवादे तावत्पूर्वम्मुक्ता एव न सन्ति, शुकादिमोक्षोपि स्वप्नदृष्टपुरुषमोक्षवन्मिथ्येति; तत्र तावदद्वैत विद्योपदेशिनान्त्वदाचार्याणामपि मोक्षस्य मिथ्यात्वे स्वयं कथं मोक्षमन्विच्छसि ? कथं वा शिष्यांश्च प्रेरयसि । आमोक्षा ज्जीववच्छरीरं किमित्यपरिज्ञानादिति चेन्न;- सर्वशरीराणामेका-त्माधिष्ठितत्वे मिथ्यात्वे चाविशिष्टे तत्तदधिष्ठाने च प्रतिभासमात्र सिद्धेर्दृष्टृदृश्यशरीरविशेषासिद्धेः । ततश्च पश्चात्तनोपि मोक्षो मिथ्याभूत इति कथमद्यतनाद्विशेषः । तस्मान्न कदाचिदपि मोक्ष इति वा न कदाचिदपि बन्ध इति वा स्यात् । इष्टमेवैत दुभयमपीति चेन्न;- पूर्वत्र नित्यबन्धप्रसङ्गेन निवर्तयितुमश-क्यत्वात् उत्तरत्र निवर्त्याभावाच्च बन्धनिवर्तनोपायोपदेशादि परशास्त्रैरनर्थक्यादिप्रसङ्गात् । जीवाज्ञानवादे तु ब्रह्मणो बन्धान भ्युपगमात् ब्रह्मव्यतिरिक्तस्य च मिथ्यात्वात् केवल बाधिता बाधितव्यवस्थैव स्यात् , नतु बद्धमुक्तव्यवस्था । अथ ब्रह्म प्रतिबिम्बस्थानीयानामपि जीवाना ब्रह्मत्वम् , तदा ब्रह्माज्ञानवाद प्रसङ्गे प्रतिपादित एव दोष इति ।

---

एवमिति । एव श्रुत्यादितात्पर्यमनभ्युपगम्य स्वरूपभेदाभ्युपगम इत्यर्थः । सत्यस्य सत्याधिष्ठानविषयस्य वा शरीरस्य सजीवत्वमित्यत्राह मिथ्यात्व इति । तस्मादि ति । इतः पूर्वं मोक्षानङ्गीकारे पश्चादपि नस्यात् , पश्चादङ्गी-कारे अविशेषाद्वामदेवादिमुक्तेरपि स्वीकार्यत्वात्तस्याश्च श्रुतिप्रतिपाद्याया प्रधा-नादित्वेन कदाचिदपि बन्धो न स्यादित्यर्थः । बाधिते ति । वामदेवा द्यो बाधिताः, अन्य इदानीन्न बाधिता इति स्यादित्यर्थ. । ननु प्रति बिम्बजीवस्य मिथ्यात्वमते स्यादय दोष , ननु बिम्बब्रह्माभिन्नजीवपक्ष इत्य-त्राह अथे ति । ब्रह्माज्ञानवादप्रसङ्ग इति । न कदापि मोक्ष इति वा न

एवं भास्करादिपक्षेपि परस्परं जीवानां ईश्वरेण चाभेदस्य स्वाभाविकत्वात् उपाधिभेदस्य चाकिञ्चित्करत्वस्थापनात् - सर्वसुखदुःखादिप्रतिसन्धानप्रसङ्गे बद्धमुक्तजीवेश्वरव्यवस्थाभङ्गप्रसङ्गो दुर्वारः।

यत्तु - भेदवादेप्यतीतकल्पानन्त्यात्प्रतिकल्पमेकमुक्तावपि सर्वमुक्तिप्रसङ्गात् कथं बद्धमुक्तव्यवस्थेत्याहुः; तदपि मुग्धभाषितम्, अनन्तघटध्वंसेपि घटान्तरस्थितिवदनन्तकल्पाना ध्वंसेपि कल्पान्तरवदनन्तपार्थिवपृथक्कारेपि द्रव्यान्तरानन्त्यवद्यथोपलम्भमानन्त्यातिशयाद्व्यवस्थोपपत्तेः। एकस्य वात्मनः कथमितः पूर्वमपवर्गाभावः? हेत्वनागमनादिति चेत्? एवमनेकेष्वपीतिभावय, तथा

---

कदाचिदपि बन्ध इति वा स्यादित्युक्तो दोषो विवक्षितः। एवोपाधिनिगमेष्युपाध्यन्तरगतप्रतिबिम्बैक्यात्तत्त्वज्ञानात् प्रागिव पश्चादपि मोक्षो न स्यात्, बिम्बब्रह्मैक्यान्मुक्तौ तु न कदाचिदपि बन्धः, तस्य प्रागपि सत्त्वात्। ननूपाधिविगमे सति प्रतिबिम्बस्य बिम्बैक्यमेव, न प्रतिबिम्बान्तरैक्यमिति न पश्चाद्बन्धः, बिम्बैक्यन्तु काल्पनिकभेदनिवृत्तिः, न स्वाभाविकाभेदः इति न प्रागपि मोक्षप्रसङ्ग इतिचेन्न, -- उपाधिनिवृत्तौ तन्निबन्धनत्वाविशेषात् बिम्बाभेदवत् प्रतिबिम्बान्तरात् भेदस्यापि निवृत्त्यवश्यम्भावात्। अनन्तघटे ति। अनन्तघटध्वंसेपि घटान्तरस्थितिवदनन्तकल्पाना ध्वंसेपि कल्पान्तरस्थितिवच्चानन्तजीवानाम्मुक्तत्वेपि जीवान्तरबन्धोपपत्त्या बद्धमुक्तव्यवस्थोपपत्तेरित्यर्थः। तत्र हेतुः आनन्त्यातिशयादि ति। अतीतकल्पापेक्षया जीवानामानन्त्यातिशयादित्यर्थः। आनन्त्यातिशये दृष्टान्तमाह अनन्तपार्थिवे ति। द्रव्यान्तरानन्त्यवत् - द्रव्यान्तरानन्त्यस्येवेत्यर्थः। पार्थिवानन्त्यापेक्षया द्रव्यान्तरानन्त्यस्य यथातिशयः, तथा कल्पानन्त्यापेक्षया जीवानन्त्यस्यातिशयादित्यर्थः। कल्पानन्त्येपि प्रतिकल्पं मुक्तिर्माभूत्, शुकादीनामेव कतिपयाना मुक्तिरस्तु, अतो वा बद्धमुक्तव्यवस्थोपपत्तिरित्याशयेन प्रतिबन्दिमाह एकस्यचे ति। प्रसङ्गात् बद्धमुक्तव्यवस्थावत् ससार्यससारिव्यवस्थापि युक्तेत्याह तथे ति। तदाक्षिपति

अनन्ता एव जीवा इत्यपि यथाप्रमाणमनुसन्धत्स्व । नन्वेवमपि कश्चिन्नित्य मुक्तः कश्चित्तु बध्यते मुच्यते चेति व्यवस्था न सिद्ध्यति, आत्मना स्वतस्समत्वादीश्वरस्य साधारण्यादिति चेत् ? हन्तैवमास्तिकपदवीमनुप्रविष्टोसि ! ततश्च किं जीवेश्वरभेदमनभ्युपगम्य पृच्छसि, उत तदभ्युपगमेन ? न प्रथम, श्रुतिविरोधादभेदवादिनापि सर्वज्ञत्वादिवैषम्याङ्गीकाराच्च । नापि द्वितीय, आत्मत्वाविशेषेपि कथमीश्वरो नित्यमुक्त इतिवदपहास्यत्वात् ? ससारहेत्वत्यन्ताभाववत्तया धर्मिग्राहकेण तत्सिद्धेरिति चेत् ? हन्तानीश्वरेष्वपि केषुचित्तथा धर्मिग्राहकसद्भावे किं कुर्म । अनीश्वरत्वादेव ससारयोग्यत्वमस्तीति चेत् ? तत्सत्यम्, सा स्वरूपयोग्यता, नतु सहकारियोग्यता । स्वरूपयोग्यत्व सहकारियोग्यत्व व्याप्तमिति चेन्न,- निस्तुषबीजादिष्वङ्कुरादिसहकारिसन्निपातादर्शनात् । तथाप्यविरुद्धयोरससर्गे प्रमाणाभावे कालविप्रकर्षेन्याप्त इति चेन्न,- मुक्तानामुत्तरकालबन्धाभाववदुपपत्ते । हेतूनामत्यन्तोच्छेदात् न पुनस्सहकार्यागमोपुनरावृत्तिश्रुतेरिति चेन्न,

---

नन्वि ति । एवमपि - आनन्त्यात् बद्धमुक्तव्यवस्थोपपत्तावपीत्यर्थ । समत्वादिति । ससारयोग्यताप्रयोजकवैजात्याभावादित्यर्थ । ईश्वरसङ्कल्पादपि न व्यवस्थेत्याह ईश्वरस्ये ति । आस्तिकपदवीमि ति । स्वत आत्मना समत्वाङ्गीकारादित्यर्थ । आस्तिकपदवीमनुप्रविष्टेन त्वया स्वतो जीवेश्वरभेदोप्यभ्युपगन्तव्य, अन्यथा श्रुतिविरोधात्, एवञ्च जीवेश्वरयोरात्मत्वाविशेषेपि ससारित्वाससारित्वव्यवस्थावज्जीवेष्वप्युपपद्यत इति 'ततश्चे' त्या 'द्यपहास्यत्वादि' त्यन्तग्रन्थस्यार्थ. । जीवेश्वरभेदेपि सर्वज्ञत्वकिञ्चिज्ज्ञत्ववैषम्यवदात्मना ससार्यससारिव्यवस्था सम्भवतीति प्रसङ्गादास्तिक प्रत्यप्यभेदवादिनापि सर्वज्ञत्वादिवैषम्याङ्गीकाराच्चेत्यनेनोक्तम् । अविरुद्धयोरि ति । स्वरूपयोग्यस्यात्मस्वरूपस्य

तुल्यत्वात्। अत्यन्ताभावादिति हि विशेषः, सतु निरुद्ध इति चेन्न, धर्मिग्राहकतस्तत्सिद्धौ विरोधासिद्धेः। ततश्च तद्विपरीतानुमानाद्युत्थानमपि प्रतिरुद्धम्। धर्मिग्राहकमेव न पश्यामीति चेत्[१] तर्हि निर्विषयं चोद्यमिति तूष्णींभव, अधीष्व वा तत्वमाचार्येभ्य इति। तदेतत्सर्वमादिभरतवाक्यव्याख्यानव्याजेन भाष्यकारैस्सूचितमिति द्रष्टव्यम्।

इति शतदूषण्या आत्माद्वैतभङ्गः
षट्त्रिंशो वादः।

---

सहकारिसंसर्गाविरोधात् कदाचित् तत्सन्निपातस्स्यादिति भाव। सत्विति। सहकारिसम्बन्धात्यन्ताभाव इत्यर्थः। तद्विपरीतेति। विमतः कदाचित् बन्धहेतुसंसर्गी आत्मत्वात्, सम्मतवदित्यनुमानमित्यर्थः॥—

इति वाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां आत्माद्वैतभङ्गः
षट्त्रिंशःस्कन्धः।

श्रीरस्तु ।

अथ सप्तत्रिंशो वाद ।

आत्मतत्त्वविदा पुंसा यद्दास्य लाभ्यकारणम् ।
तद्वन्दे परमानन्दमिन्दिरामन्दिर मह ॥

यत्पुनर्महासाहसिका दृढतरनिरूढदेहात्ममोहमन्दधिय प्रत्य क्षादिविरोधमपि तिरस्कृत्य स्वात्मानमेवेश्वरमभिमन्यन्ते, तदपि भेदसामान्यस्य आत्मनानात्वस्य च समर्थनात् "एको बहूना" मित्याद्युक्तैकानेकतादात्म्यायोगाच्च निरस्तप्रायमेव । विशेषतोपि पश्याम । जीवस्येश्वरत्व किं प्रत्यक्षबलादभ्युपगम्यते, उतो पपत्तिसामर्थ्यात्, यद्वा शास्त्रवैभवात्? अन्यत कुतश्चिन्न सम्भ स्यैव । नाद्य, अनीश्वरतयैव स्वात्मन उपलम्भात् । अप्रतीतेश्वरस्य कथ तत्प्रतियोगिकानीश्वरत्वनिरूपणमिति चेन्न, —

---

आत्मतत्त्वविदामि ति । **यद्दास्य** मित्यनेन शेषशेषिणोरभेदानुपपत्त्या वादार्थ स्सूचित । तत्त्वविदामि ति तस्य तात्त्विकत्वम्, लास्यकारण मिति पुरुषार्थता, तदर्थं **परमानन्दामिन्दिरामन्दिर मह** इति भोग्यता, चाविष्क्रियते । **यदि** त्यादि । देहात्मभ्रमो हि स्वातन्त्र्यभ्रमहेतु, तस्मिन् सति पापप्रवृत्ते प्रशानाशादीश्वरशेषत्वज्ञानाभावात् । **दृढतरत्वम्**- शास्त्रेणापि दुर्निरासत्वम् । **तदपी** ति । भेदसामान्यस्यैवाभावात् जीवेश्वराभेद इत्येतत् भेदसमर्थनान्नि रस्तम्, प्रतिसन्धानतदभावव्यवस्थयात्मनानात्वसाधनाज्जीवेश्वराभेदोऽपि तुल्य न्यायाभिरस्त इत्यर्थ । **एक** इति । "एको बहूना" मित्याद्युक्त्या य एकानेके तेषा तादात्म्यमित्यर्थ । उपपत्तिरनुमानम् । किं निरङ्कुशैश्वर्यं कश्चिदभ्युपगम्य तदभेद प्रत्यक्ष इत्युच्यते, उतानभ्युपगम्य? आद्य आह **अनीश्वरतये** ति । प्रत्युतेति भाव । ननु अभावप्रत्यक्षे प्रतियोगिप्रत्यक्ष योग्यानुपलब्धिश्च हेतु, अत्र चेश्वरस्यायोग्यत्वान्न प्रत्यक्षतापि योग्यानुप लब्धि, अत कथमीश्वरभेदप्रत्यक्षमित्याशयेन शङ्कते **अप्रतीते** ति । न हि योग्यस्यानुपलब्धिर्योग्यानुपलब्धि, किन्तु यत्र यत्सम्बन्धसत्त्व तत्र

श्रुत्यादिभि प्रमितेश्वरतत्त्वाना तत्प्रतियोगिकभेदनिरूपणोपपत्ते, म्यात्मनि अप्रत्यक्षमेयादिभेदोपलम्भवत्, यदीश्वर स्वात्मा प्रत्यक्षमेव तथोपलभ्येतेत्यप्रतीतेश्वराणामपि स्वगतेच्छाविघात दु खादिदर्शनाद्यावत एवानीश्वरत्वोपलम्भरूपत्वात् । अनीश्वरोह मित्युपलम्भो नास्तीति चेन्न,- अशक्येष्वनीश्वरोहमित्येवोपलम्भात् । सामर्थ्याभावलक्षणधर्मविषयोयमनीश्वरशब्द इति चेन्न,- ईश्वरप्रती तावपि तस्यैव धर्मस्य ईश्वरव्यतिरेकात्मनोल्लिख्यमानत्वात् ।

---

तत्सम्बन्धतत्तया तदुपलम्भानवयकत्वम्, तथात्यानुपलब्धियोग्यानुपलब्धि, साचानाप्यस्तीत्याशयेन परिहरति यदीश्वर इति । अनेन योग्यतोपपादिता । इतिहेतौ । तादात्म्यसत्त्वे तादात्मतयोपलम्भ आवश्यको यत इत्यर्थ । अप्रतीते ति । नेत्यनेनान्वय । अभावत्वेन प्रतीतावेव प्रतियोगिप्रतीति कारणम्, न स्वरूपप्रतीतावित्याशय । ननु यदि भेदवाचकानीश्वरशब्दानु विद्धोपलम्भो दु खादे, तदा तस्येश्वरभेदरूपता स्यात्, अत्र तदभावात् कथ दु ख्मीत्याद्युपलम्भमानस्यानीश्वरत्वोपलम्भतेत्याशङ्कते अनीश्वरोह मिति । अशक्येष्वि ति । अशक्येषु विश्वसृष्ट्यादिष्वनीश्वरोऽहमिति बुद्धिरि च्छाविघातादिक भेदत्वेन भेदशब्दानुविद्धतया विषयीकरोति, अतस्तत्समान विषय प्रतिहतेच्छोऽहमित्याद्युपलम्भोऽपि भेदोपलम्भरूप इत्यर्थ । नन्व शक्येष्वनीश्वरोऽहमिति बुद्धिस्सामर्थ्याभाव विषयीकरोति, न तु विहतेच्छत्वा दिकमनीश्वरशब्दानुविद्धतया ईश्वरभेदत्वेन, इत्याशङ्कते सामर्थ्ये ति । ततश्च न तत्समानविषयत्वेन विहतेच्छत्वादिबुद्धेर्भेदोपलम्भत्वमिति भाव । ईश्वरे ति । प्रतीतेश्वराणामनीश्वरप्रतीतिरीश्वरभेद विषयीकरोति, तत्र चायमेव सामर्थ्याभावो भेदत्वेन प्रतीयते, सच विहतेच्छत्वादिरेव, भावान्तरस्यैवा भावत्वात्, तत्समानविषयत्वात् सामर्थ्याभावविषयबुद्धिरपि विहतेच्छत्वात्मक भेदविषयत्यर्थ । सामर्थ्याभावबुद्धयत प्रतीतेश्वरानीश्वरबुद्धिसमानविषयत्वात्

माभूद्वा स्वात्मन्यनीश्वरशब्द, ईश्वरव्यतिरेकरूपधर्मोणा स्वरूप तत्तावत् प्रतीतिरपरिहार्या । कार्यविशेषेषु ईश्वरोऽहमित्यभिमन्यन्त एव सर्वे पुरुषा । कर्मण्यैश्वर्यजोषोपिकार इत्युच्यत इति चेन्न, क्षेत्रज्ञानामपि तावन्मात्रेश्वरत्वप्रतिपादनेऽस्माकमिष्टापातात् । एतावानेवेश्वरशब्दार्थो लोके व्युत्पत्तिसिद्ध इति चेन्न,- ईश्वरत्वस्यात्यन्तनिम्नोन्नततारतम्यवत्तयोपलम्भात् । तत किमिति चेत् ? इयदेवेश्वरत्वमिति परिच्छेदासिद्धि । तथापि लोकसिद्धो त्कर्षकाष्ठामात्रे पर्यवसानमस्त्विति चेन्न, - लोकायतवादप्रसङ्गात्, सर्वव्यक्तिसाधारणाकारस्यैव वाक्प्रवृत्तिनिमित्तत्वेन लोके प्रसिद्धे । साधारणाकारेणेश्वरशब्देन प्रतिपिपादयिषिते तद्विरुद्धदु खादिधर्मवत्तामात्रस्य प्रतिक्षेपायोगात् । सर्वविषयमीश्वरत्वमनुपलब्धमिति

---

भेदबुद्धिरुपरतम्, तत एव प्रतिहतेच्छत्वादिबुद्धेर्भेदोपलम्भत्वसिद्धेरत्वरसाद- शक्येष्वनीश्वरोऽहमिति बुद्धिमनभ्युपगम्य पक्षान्तरमाह **माभूद्वे** ति । अलौकिकेश्वरानभ्युपगमेन प्रत्यक्षादेव जीवेश्वरैक्यसिद्धिरिति द्वितीय कल्प शङ्कते **कार्ये** ति । निरतिशयैश्वर्यवद्भेदस्य साध्यत्वादसर्वविषयेश्वरैक्यसाधने ऽर्थान्तरमित्याह **क्षेत्रज्ञाना** मिति । जीवेष्वदृष्ट सर्वविषयैश्वर्य तावदसम्भावितम्, तद्विशिष्टाद्भेदसाधनमप्रसिद्धेरशक्यम्, यत्तु लोकदृष्टम् – तदाश्रयात् भेदस्तु बाधित इति कथमीश्वरभेदसाधनमिति शङ्कते **एतावान्** इति । लोक एवेश्वरत्वोत्कर्षापकर्षोपलम्भात् लोकोत्तर सर्वविषयैश्वर्य सम्भाव्यत इति भाव । ननु लोकसिद्धैश्वर्यकाष्ठैव निरतिशयैश्वर्यम्, सर्वविषये प्रमाणाभावात्, तदभेदश्च जीवस्य प्रत्यक्षसिद्ध एवेत्याशयेन शङ्कते **तथापी** ति । **लोकायते** ति । सर्वविषयेश्वरबोधकशास्त्रानादरादिति भाव । एवञ्च शास्त्रात् सर्वविषयेश्वरसिद्धे साधारणाकारविषयेश्वरबुद्धिशब्दमात्रात्तादृशेश्वरभेदस्तद्विरुद्धधर्मवत्त्वरूप प्रतिक्षेप्तुमशक्य इत्यर्थ । **दु खादी** ति । दु खादिक हि विरुद्ध धर्म, स च प्रत्यक्षसिद्धो न प्रतिक्षेप्य इति भाव । गूढाभिसन्धिरशङ्कते **सर्वे** ति।

चेत्? सत्यम्, तत एव हि शास्त्रावतारः । अनुपलम्भादेव बाधे शास्त्रमपि तत्प्रतिपादनानर्थकमिति चेन्न; - अनुपलम्भमात्रेण बाधेतिमरात्रात्, योग्यानुपलम्भस्यासिद्धेः, सिद्ध्यतश्च तस्य स्वस्मिन्नीश्वरत्वमात्रप्रतिक्षेपसामर्थ्यात् ।

---

अनुपलम्भबाधेन शास्त्रेश्वरसिद्धिरित्यभिसन्धिः । गूढाभिसन्धि-रेवोत्तरमाह सत्यमिति । अनुपलम्भमात्रं न बाधकमित्यभिसन्धिः । शङ्काभि-सन्धिमुद्घाटयति अनुपलम्भादिति । उत्तराभिसन्धिमुद्घाटयति अनुप-लम्भेति । पूर्वं योग्यताया उपपादितत्वात् विरोधं परिहरति सिध्यत इति । ईश्वरस्वरूपानुपलम्भमात्रं बाधको वाच्यः, स त्वयोग्यानुपलम्भत्वादबाधकः, जीवात्म-तयानुपलम्भस्तु योग्यानुपलम्भोऽपीश्वरतादात्म्याभावस्यैव साधक इत्यर्थः । ननु अहं निर्दुःख इति प्रतीतिरन्तःकरणविशिष्टविषयेति केवलस्य जीवस्ये-श्वराभेदे न विरोध इति चेन्न; — अन्तःकरणस्य विशेषणत्वेनाप्रतीतेरैक्या-ध्यासाभ्युपगमात् । किञ्च विशिष्टस्य पदार्थान्तरतया उभयगततया विशेष्य-गततया वा प्रतीतौ भेदसिद्ध एव, विशेषणगततया प्रतीतिस्त्वसिद्धैव, नाहं निर्दुःख इति जानतः पुरुषस्य जीवेश्वरैक्यप्रतीत्यसिद्धेः, तथा सति हि सविशेषणे हीति न्यायः प्रवर्तेत । ननु दुःखमन्तःकरणपरिणामत्वात् तद्गत-मेव, अतो निर्दुःखभेदोऽपि तद्गत एव, अतः प्रतिबिम्बभूते जीवेऽन्तःक-रणतादात्म्येन प्रतिपन्ने दुःख्यहं निर्दुःख इति प्रतीतिरन्तःकरणतादात्म्या-ध्यासनिबन्धना, शरीरतादात्म्याध्यासात् स्थूलोऽहमिति प्रतीतिवदिति चेत्? तर्हि बिम्बप्रतिबिम्बभेदाध्यासात् प्राङ्मुखत्वप्रत्यङ्मुखत्वरूपविरुद्धधर्मप्रतीति-वदिहाप्यहं निर्दुःखः चैतन्यं निर्दुःखमिति युगपद्दुःखतादात्म्यतद्भेदरूप-विरुद्धधर्मद्वयविशिष्टप्रतीतिः स्यात् । नन्विदं चैतन्यस्येष्टमेव, ईश्वरे तदभ्यु-पगमात्, प्रतिबिम्बस्य तु जीवस्य नास्ति, [illegible] मत्याभूतत्वादिति चेन्न; — त्वयैव बिम्बप्रतिबिम्बाभेदस्य समर्थितत्वेन उक्तव्यवस्थाया असम्भवात् । कथं तर्हि श्यामत्वावदातत्वव्यवस्थेति चेत्? न कथञ्चित् । यद्यपि भेदाध्यासात् प्राङ्मुखत्वप्रत्यङ्मुखत्वादीनां भिन्नाधिकरणत्वेन प्रतीतेर्व्यवस्थितत्वभ्रमो वर्तते,

तथाप्ययथारथा नापैति, नहि वह्नेरदाहकत्वभ्रममात्राद्दाहकत्वमपैति । ननु भेदसत्ताग्राहि प्रत्यक्षं भ्रमं, अधिष्ठानसत्तागोचरत्वात्, नच बाधकाभावान्नैवमिति वाच्यम्, "तदात्मानं स्वयमकुरुत" इत्यादिना ब्रह्मविवर्तत्वावगतेः; जडाजडयोरास्तवैक्यायोगादिति चेन्;— तदात्मानमित्यत्र तच्छब्देन इदंशब्दनिर्दिष्टं परामृश्यते, 'असद्वा इदमग्र आसीत् ततो वै सदजायत' इति पूर्ववाक्ये प्रकृतत्वात्, अतो नानेन ब्रह्मविवर्तत्वसिद्धिः । अतो वाक्यस्यायमर्थः - इदम्— परिदृश्यमानस्थूलचिदचिद्विशिष्टं ब्रह्म, असत् अव्याकृतसूक्ष्मचिदचिद्विशिष्टम्, आसीत्, ततः अनन्तरम्, सर्गकाले, नामरूपविभागार्हस्थूलचिदचिद्विशिष्टमासीत्, निमित्ताकाङ्क्षायामाह तदात्मानमिति, असद्रूपतापन्नमिदमात्मानं स्थूलरूपतयायुक्तं स्वयमेवाकुरुतेति ।

अत्र नवीनाः - न तावद्भेदविशेषभेदे प्रत्यक्षं प्रमाणम्, तत्र चक्षुरादेरसम्भवात्, मन इति चेत्? न प्रमाणं मनोऽस्मास्मयोग्यानुपलब्धिकम्। सोपाधिकस्थो भेदोऽप्यनाप्यक्षमितिगोचरः ॥ मनो न प्रमाणम्, प्रमाणत्वपर्यवसानाधिकरणसहकारित्वात्, आलोकवत् । विपक्षे सर्वत्र मानसत्वापत्तिः, एकप्रमाणपरिशेषापत्तिश्च । सन्निकर्षाभावाच्च भेदे न प्रमाणम्। इन्द्रियसंयुक्तविशेषणता सन्निकर्ष इति चेन्न, निरवयवात्मनस्संयोगाभावात्, तस्याव्याप्यवृत्तित्वात्। नचात्र प्रत्यक्षसहकारिणी योग्यानुपलब्धिरस्ति, प्रत्यक्षयोग्यस्यानुपलब्धिर्हि सा । प्रतियोगितद्व्याप्येतरसकलप्रतियोग्युपलम्भकसमवधानस्थैर्यानुपलब्धिरसैति चेत्? सापि प्रत्यक्षयोग्यस्यैव सम्भवति, यतः प्रतियोग्युपलम्भकः प्रतियोगिप्रत्यक्षजनकमेव वाच्यम्, नच नाहमीश्वर इति प्रतीतिसमये प्रतियोग्युपलम्भकसमवधानमस्ति, तत्कालीनमनआदेस्तदयोग्यत्वात् । नच यत्र यत्सत्त्वमनुपलब्धिविरोधीत्यादियाग्यानुपलब्धिनिर्वचनं युक्तम्, असता प्रतियोगिसत्त्वेन विरोधनिरूपणात् । अत एव तर्कित यत्र यत्सत्त्वमनुपलब्धिविरोधीत्यपि निरस्तम् । नच यत्र यत्सत्त्वापादनेनानुपलम्भाभाव आपादयितुं शक्यते तत्र तदभावः प्रत्यक्ष इति वाच्यम्, आपादनस्य व्याप्तिज्ञानसाहित्यमथ प्रतियोगिसत्त्वापादनस्य वाच्यम्, तथाचाभावधीपूर्वं नियमेन तत्सत्त्वे व्यतिरेकव्याप्तिज्ञानादनुमितिरेव स्यात् । अस्तु वेयं सहकारिणी, न मानान्द्रियभावे

सम्भवति, मनस्त्वादेर्घटे तर्वितस्य तद्व्यापकगुणत्वापादनेनानुपलम्भाविरोधित्वात् । ‘ श्रोतव्यो मन्तव्यः ’ ‘ आचार्यवान्पुरुषो वेद ’ इत्याद्युपदिष्टसहकार्यभावाद् । ‘ अनृतेन हि प्रत्यूढा ’ इत्युपदिष्टप्रतिबन्धकाद्वानुपलम्भसम्भवाच्चोक्तयोग्यानुपलब्धिः । किञ्च - ‘ यन्मनसा न मनुते ’ ‘ तं त्वौपनिषद ’ मित्यादिश्रुत्या वेदैकगम्यं ब्रवीति न मनसानुपलम्भाद्धर्मवत्तदभावसिद्धिः । किञ्चेदमीश्वरत्वम् ? यद्विशिष्टाभेदानुपलम्भात् भेद उच्यते ? न द्व्यणुकादिकर्तृत्वम्, तद्विशिष्टस्यातीन्द्रियत्वेन ततोऽपि तदभेदस्यानुपलम्भासम्भवात् ; नापि सर्वज्ञत्वम्, योगिना स्वज्ञाने सर्वविषयत्वभ्रमतश्च ईश्वरभेदप्रतीत्यनुपपत्तेः ; नापि नित्यसर्वज्ञानत्वम्, स्वनित्यताया इव ज्ञाननित्यताया अप्ययोग्यत्वेन तद्विशिष्टाभेदे योग्यानुपलब्ध्यसिद्धेः । किञ्च- अणुत्वे आत्मनस्सर्वशरीरव्यापिसुखाद्युपलम्भानुपपत्तेः, मध्यमपरिणामत्वे चानित्यत्वापत्तेः,- आत्मा विभुः; तस्य चाहमिहैवेति भासमानः परिच्छेद औपाधिको वाच्यः ; इत्युपाधिसद्भे सिद्धे भेदोऽप्यौपाधिक इति न तस्य सत्यत्वमिति ।

उच्यते । यदुक्तं प्रमाणसहकारित्वान्मनो न प्रमाणमिति; तन्न, स्वसाक्षात्कारहेतुभूते परामर्शे व्यभिचारात् ; एवं स्वविषयनिष्ठाभावप्रत्यक्षस्वविषयाभावप्रत्यक्षसंशयोत्तरप्रक्षादिहेतुत्वादपि व्यभिचारो द्रष्टव्यः । एवं गोलकद्वयावच्छिन्नचक्षुरवयविद्वये व्यभिचारः । उपदेशसहकृतप्रत्यक्षजन्यविभागज्ञानस्य चन्द्रालोकादिसंशयनिवर्तकत्वस्वीकारात्तत्र प्रमाद्वये व्यभिचारः । अप्रयोजकत्वं च । नच संनिकृष्टार्थविषयशाब्दबोधादौ चक्षुरादेरपि सहकारित्वप्रसङ्गः, चाक्षुषत्वादिसङ्करापत्तिश्चेति वाच्यम् ; व्यभिचारेण शाब्दज्ञाने चक्षुरादेरहेतुत्वात् । नच ज्ञानमात्रे मानसत्वप्रसङ्गः, परामर्शजन्यानुव्यवसायादिष्वनुमितित्वाभाववत्तदुपपत्तेः । चाक्षुषप्रत्यक्षे चक्षुर्विषयसन्निकर्षवन्मानसप्रत्यक्षे तद्विषयमनस्सन्निकर्षस्यापि हेतुत्वाच्च । नच मनसः करणत्वे एकप्रमाणपरिशेषापत्तिः, चक्षुरादेरालोकादिवत्सहकारित्वमात्रोपपत्तेः करणत्वे मानाभावात्, इति वाच्यम्, सव्यापारत्वात् ‘ येन क पश्येत् ’ ‘ केन क जिघ्रेदि ’ त्यादिश्रुत्या न करणत्वस्य [illegible] । अनुमानत्वसाक्षाद्व्याप्य

जातिपुरस्कारेण प्रमाकरणविभागान्न मनश्शरीरादेरालोकादेर्वा प्रमाणता । अत एव तत्रापि न चक्षुःश्रोत्रादेः पृथक्प्रमाणत्वम् । तदभिप्रायेणैव 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।' 'प्रत्यक्षमनुमानं च शास्त्रं च विविधागम'मित्यादिश्रुतिस्मृतयोऽपि ।

यदुक्तम् - सन्निकर्षाभावान्न मनः करणमिति; तन्न, अभावज्ञाने रूपादिज्ञानवत् प्रत्यक्षत्वानुभवबलेन तत्र संयुक्ततादात्म्यसंयुक्तसमवायादेरिव संयुक्तविशेषणतायाः प्रत्यासत्तित्वकल्पनात् । इन्द्रियाणां चाहङ्कारिकत्वान्न शब्दाभावग्रहे तदसम्भवः । यत्र यत्सत्त्वं यदानुपलब्धिविरोधि तदा तद्विशेषणता वा प्रत्यासत्तिः । भेदस्य प्रत्यासत्तिशरीरान्तर्गतत्वायोगात् गौरवान्निरस्तत्वाच्च भिन्नत्वे सत्यभिन्नसत्ताकत्वलक्षणतादात्म्यस्य प्रत्यासत्तित्वायोगेन प्रमाणविशेषणताया एव प्रत्यासत्तित्वस्य वाच्यत्वात् । समवायस्थानीयतादात्म्ये विशेषणताया एव प्रत्यासत्तित्वेन कल्प्यत्वाच्च । तस्य च साक्षिभास्यत्वे रूपादावपि तथाप्रसङ्गात्, अभावस्यापि साक्षिभास्यत्वप्रसङ्गेन षष्ठप्रमाणविलोपाच्च । तत्त्वतस्तु दुःखादिरेवेश्वराद्भेदः, तस्य च ज्ञानद्रव्यावस्थाभेदस्य मनसा संयोग एव सम्बन्धः, तस्य स्वरूपतस्स्वप्रकाशत्वेऽपि भेदत्वेन ज्ञानं मानसमेव । अत एवाभावस्य प्रत्यक्षत्वानुभवबलात् सन्निकर्षादिकल्पनागौरवमित्येतदपि परास्तम् ।

यत्त्वात्मनि निरवयवे मनस्संयोगो नोपपद्यत इति, तन्न, जीवे ईश्वराद्भेदो दुःखाद्यवस्थाविशेषः, स च द्रव्यम्, तेन च सावयवेनाहङ्कारिकस्य सावयवस्य मनसस्संयोगे नोक्तानुपपत्तिः । नचैवमप्यात्मनि भेदप्रतीत्यनुपपत्तिः, स्वप्रकाशोपनीतात्मनि भेदप्रतीत्युपपत्तेः । वस्तुतस्तु संयुक्तविशेषणतापि युज्यते । नच निरवयवात्मनि संयोगासम्भवः, अणोरपि स्वसंयुक्तस्वपूर्वदिग्वर्तिद्रव्यावच्छेदेन तद्द्रव्यसंयोग. अपरदिग्वर्तिस्वसंयुक्तद्रव्यसंयोगाभावश्च, अपरसंयुक्तदिग्वर्तिस्वसंयुक्तद्रव्यावच्छेदेन तत्संयोग. पूर्वदिग्वर्तिद्रव्यसंयोगाभावश्चेत्यवच्छेदकभेदोपपत्तेः । अवच्छेदकत्वं च स्वरूपसम्बन्धविशेषः, मूलाग्रादेरपि तद्वत्त्वे सति तदभाववद्वृत्तित्वलक्षणावच्छेदकत्वासिद्धेः ।

यत्तु—प्रत्यक्षयोग्यस्यानुपलब्धिर्योग्यानुपलब्धिः, सात्र नास्तीति, तन्न, आत्मत्वेनैव मनोयोग्यत्वात्। नच परात्मनोऽपि ग्रहणप्रसङ्गः, मनसो बहिरस्वातन्त्र्यात्। यदि पदेनादृष्टद्वारा तदुपार्जनादात्मनोऽन्य उच्यते। अत एव न परमात्मनो ग्रहणप्रसङ्गः, काचकामलादयुपहतचक्षुष इव रजस्तमोभ्यामुपहतस्य प्रतिबन्धादग्राहकत्वाच्च, 'मनसा तु विशुद्धेन' इत्यादिश्रुतेः।

केचित्तु — अल्पपरिमाणे परिमाणाभावग्रहप्रसङ्गान्नैव योग्यतेत्याहुः, तन्न, अधिकरणप्रत्यक्षस्याप्यभावप्रत्यक्षे हेतुतया तत्र तदभावादेव तदग्रहोपपत्तेः। नचैवमनुद्भूतरूपस्याप्युद्भूतस्पर्शस्य स्पार्शनप्रत्यक्षविषये तप्तवारिस्थवह्नौ अभास्वररूपाभावग्रहप्रसङ्गः, प्रतियोगिग्राहकेन्द्रियेणाधिकरणग्रहणस्य कारणत्वात्। नचैवं गन्धे शब्दत्वाभावशब्दभेदयोर्घ्राणेन्द्रियेणाग्रहणप्रसङ्गः, प्रतियोगिग्राहकेन्द्रियेणाभावग्रहे तदिन्द्रियेणाधिकरणग्रहणस्य कारणत्वात्। नचैवं वायौ रूपाभावस्याचाक्षुषत्वप्रसङ्गः, इष्टापत्तेः। नचैवं चक्षुरन्वयव्यतिरेकानुविधानानुपपत्तिः, चक्षुस्सन्निकर्षस्य लिङ्गत्वात्। सत्यपि सन्निकर्षे रूपाग्रहणे सत्येव हि तादृशानुपलब्ध्या रूपाभावानुमानम्। नच लिङ्गाग्रहेऽपि रूपाभावग्रहाद्रूपाभावप्रत्यक्ष इति वाच्यम्, एवं सति यस्य पुरुषस्यान्धकारे प्राथमिकवायुज्ञानं तस्य स्मृत्युपनीते पुरतस्सन्निकृष्टे वायौ रूपाभावग्रहप्रसङ्गात्। यदि त्वचैवोपनयोऽपेक्षित इत्युच्येत, तदासनान्यशाखाचलनादिभिः पुरतो ज्ञाते वायौ रूपाभावग्रहप्रसङ्ग इति। यदि सन्निकृष्टत्वज्ञानमेव कारणम्, त्वचाऽन्येन वेति न नियम इत्युच्यते, तदा भ्रमत सन्निकृष्टत्वभ्रमे पुरतस्सन्निकृष्टे वायौ रूपाभावग्रहप्रसङ्गः। यदि पुरतः सन्निकृष्टत्वज्ञानमपेक्षितमित्युच्यते, तदा पृष्ठस्थे वायौ तिर्यगवेक्षणेन रूपाभावग्रहस्यासिद्धिप्रसङ्गः। यदि मुखाभिमुख्यमेव पुरतश्शब्दार्थ इत्युच्येत, तदा मुखाभिमुख्यग्रहे सति चक्षुस्सन्निकृष्टत्वाभावभ्रमदशायां रूपाभावाग्रहप्रसङ्गः। यदि चक्षुरादिमुख्यग्रहणमपेक्षितमित्युच्येत, स्पष्टमेव तर्हि लिङ्गग्रहणमुपपादितम्। नचेन्द्रियसन्निकृष्टत्वज्ञानसहकारित्वं प्रत्यक्षमात्रे अभावप्रत्यक्षमात्रे वा, तदसिद्धेः नापि रूपाभावप्रत्यक्षे, नीलघटे पीतत्वाभावस्य तेन विनैव ग्रहणात्। एतेन पिशाचा

न्योन्याभावोऽपि व्याख्यातः, तस्यानुमेयत्वात् । नहि पिशाचशब्दार्थं कश्चि दस्तीति ज्ञानमात्रेण तदन्योन्याभावग्रह, किन्त्वतीन्द्रियत्वादिधर्मग्रहे सत्येव । अतो नियमेन वैधर्म्यग्रहणयोग्यत्वादनुमानमेव । एतेन घटे मनस्त्वा- भावग्रहोऽपि व्याख्यातः, तत्राप्यतीन्द्रियत्वादिधर्मग्रहनियमात् । नचोक्त सामग्र्याभावग्रहे विनिगमे गन्धग्रहदशायामपि तैरत्यन्ताभावतैरभेदयो- र्ग्रहप्रसङ्गः, तज्जात्यभिव्यञ्जकस्याभिव्यञ्जकसापेक्षत्वनियमात्, तदवच्छिन्नभेदे च व्यञ्जकत्वात् । नचाधिकरणप्रत्यक्षाभावाच्छब्दाभावप्रत्यक्षानुपपत्ति, यावि- र्यमभावत्वतो बधिरस्येवानुमेयत्वात् ।

यत्तु– यत्र यत्सत्त्वमनुपलब्धिविरोधीत्यत्र दूषणम्, तत्र, यदा यत्र यत्सत्त्वापादनेन तदुपलम्भ आपादयितुं शक्यते तदा तत्र तदनुपलब्धिस्तद भावग्राहिकेति विवक्षितत्वात् । ननु यस्य पुंस उपलम्भापादनसम्भव उच्यते तस्य प्रतियोगितद्व्याप्येतरसकलप्रतियोग्युपलम्भकसामग्रीसमवधानज्ञानमस्ति, नवा ? नाद्य, अदृष्टातीन्द्रियघटितसामग्र्या दुर्ज्ञानत्वात्, न द्वितीय, उपलम्भापा दनासम्भवात्, सहकारिवैकल्यादप्यनुपलम्भोपपत्तेरिति चेन्न – प्रतियोगित- द्व्याप्यादृष्टेतरसकलप्रतियोग्युपलम्भकसत्त्वज्ञानं तावदस्ति, तावता चापादनसम्भव, अतीन्द्रियकालादेरपि ज्ञानात्, नचादृष्टविलम्बात्कार्यविलम्ब, येन तद्विरहाद नुपलम्भोपपत्तिराशङ्क्येत । नन्वतीन्द्रियप्रतियोगिकाभावग्रहे प्रतियोग्युपलम्भक सकलकारणज्ञानं न सम्भवति, प्रतियोग्युपलम्भकं हि प्रतियोगिप्रत्यक्षजनकम्, तस्य चाप्रसिद्धत्वादिति चेन्न, – प्रतियोगिवृत्तिधर्मं यत्प्रत्यक्षकार्यतावच्छेदक शरीरमविष्ट तत्समानाधिकरणकार्यतानिरूपितयावत्कारणसमवहितत्वस्य विवक्षि तत्वात् । अस्ति हि तद्घटाभावप्रत्यक्षेऽभावचाक्षुषज्ञानत्वं कार्यतावच्छेद कम्, तदवच्छिन्नकारणमालोकः, जन्यप्रत्यक्षत्वं कार्यतावच्छेदकम्, तदव च्छिन्नकारणमिन्द्रियम्, जन्यविशिष्टज्ञानत्वं कार्यतावच्छेदकम्, तदवच्छिन्न कारणं विशेषणज्ञानम्, जन्यज्ञानत्वावच्छिन्नं प्रति मनःप्रभृति, जन्यत्वाव च्छिन्नमेव प्रति कालादि । वायौ रूपाभावसाक्षात्कारे तु रूपसाक्षात्कारत्व कार्यतावच्छेदकम्, महत्त्वं कारणमित्यादि । पिशाचत्वात्यन्ताभावग्रहे पिशाच वृत्तिधर्मो जातित्वम्, तद्घटितकार्यतावच्छेदकं जातिप्रत्यक्षत्वमित्यादि ।

यद्वा- त्रित्र एतेनानुगमप्रयासेन, प्रतियोगिन उद्भूतरूपवत्त्वज्ञानात् अधिकरणस्यालोकादिमत्त्वज्ञानाच्च घटादेः, वायोर्महत्त्वज्ञानात् प्रतियोगिन उद्भूतत्वज्ञानाच्च रूपस्य, अधिकरणयोग्यत्वज्ञानात् प्रतियोगिनो जातित्वज्ञानाच्च पिशाचत्वस्येति, क्रमेणाननुगतैरेव हेतुभिरत्र तत्र प्रतियोग्युपलम्भापादनसम्भवो द्रष्टव्यः ।

एतेनापादनव्याप्तिविरहेण दूषणमपि निरस्तम्; उक्तरूपेणानुगतत्वाननुगतस्य यादृशेकमहत्त्वादियोग्यत्वादरेव व्याप्तित्वात् । व्याप्तिज्ञानस्य व्याप्तिरोध्यनुपलब्धेरज्ञातत्वात् अकारणतया पक्षधर्मताज्ञानाभावेनानुमितियोगाच्च किञ्चित्कर्तृकप्रमा आपादयितुं शक्या, न प्रतियोग्यत्वमापादनं च येन केन चित्, एवं चापादकस्यैव व्याप्तिज्ञानमिति न तेनापाद्यप्रमाकर्तृभावानुमितिसम्भव ।

एतेन प्रतियोगिताव्याप्येतरयावत्प्रतियोग्युपलम्भककालीनानुपलब्धियोग्यानुपलब्धिरित्येतदप्युद्धृतम्, प्रतियोग्युपलम्भकपदेन प्रतियोगिवृत्तिधर्मावच्छिन्नपनकत्वनियतयातीन्द्रियाप्रसिद्धिपरिहारात् ।

यत्तु अतीन्द्रियप्रतियोगिकाभावे प्रतियोग्युपलम्भापादनं न सम्भवति, तत्र धर्मिणोऽप्यप्रत्यक्षतापादकत्वादिति, तन्न, अन्यापादनमनपेक्ष्य प्रतियोग्युपलम्भापादनस्यैव विवक्षितत्वात् । नह्येतदनुपलम्भापादकत्वेऽपि नास्ति, नया मनसि घटत्वापादनेऽस्ति । यद्वा या यत्र प्रतियोगिव्यतिरेकप्रयुक्तानुपलब्धिस्सा तत्राभावग्राहिका, अस्ति चैतद्घटे मनस्त्वाभावग्रहे, वायौ रूपाभावग्रहे, स्तम्भे पिशाचान्योन्याभावग्रहे च, नतु जलपरिमाणो पृथिवीत्वाभावे, वायावनुद्भूतरूपाभावे, आत्मनि धर्माभावे, मनसि घटत्वाभावे वा स्ति, तत्राधिकरणमहत्त्वाभावप्रतियोग्युद्भूतत्वाभावादीनां प्रयोजकत्वात् ।

एतेन — सहकार्यभावात् प्रतिबन्धकाच्चानुपलम्भसम्भवान्न योग्यानुपलब्धिरिति निरस्तम्, सहकार्यभावे प्रतिबन्धकसद्भावेऽप्युक्तयोग्यानुपलब्धेरस्त्वात् । किञ्चाचार्योपदेशो न तावदात्मस्वरूपप्रत्यक्षे ईश्वरस्वरूपाभेदप्रत्यक्षे वा सहकारी, तदभावेऽप्यहं सोऽहमित्युपलम्भात्, नापीश्वरत्वावच्छिन्नाभेदप्रत्यक्षे, तदवच्छिन्नाभेदप्रत्यक्षस्य कदाप्यप्रसिद्धेस्तत्र सहकारित्वाकल्पनात्, श्रवणा-

धनन्तरं चित्स्वरूपाभेदप्रत्यक्षस्य आचार्योपदेशश्रवणादीनां हेतुत्वस्य स्वीकारात् । अपि च यदि सर्वज्ञाभेदस्स्यात् तदा तत्प्रत्यक्षस्याचार्यकर्तृत्वेनाचार्योपदेशादीनां सर्वज्ञत्वस्यैवानुपपत्तिः, तज्ज्ञानवदभेदस्य तेन तेनोपलम्भ गमनवत् ।

यत्त्वीश्वरस्याविकल्पानुपलब्धिदूषणम्; तदास्तु तावत् द्व्यणुककर्तृत्वम्; नच द्व्यणुकस्यातीन्द्रियत्वात् तत्कर्तृत्वभेदवदभेदानुपलम्भोऽसम्भव इति वाच्यम्, अतीन्द्रियत्वेऽपि धर्मं जानामि धर्ममिच्छामि द्व्यणुकं जानामीतिवत् कृतेरैन्द्रियकत्वेन तद्विशिष्टभेदोपलम्भसम्भवात् । किञ्च — द्व्यणुककर्तृत्वम् — द्व्यणुकोपादानापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं विवक्षितम्; नचात्र शङ्काकलङ्कावकाशः । नित्यसर्वविषयापरोक्षज्ञानवत्त्वेनेश्वरत्वात्, तद्विशिष्टभेदश्चोपलम्भ्य एव; सर्वविषयापरोक्षेण नित्यज्ञानस्यापि विषयीकरणात् । यत्तु — ज्ञाने सर्वविषयकत्वनित्यत्वभ्रमवत्तद्वदभेदानुपलम्भो नास्तीति; तन्न, तादृशभ्रमासम्भवात् । किञ्च — नित्यसाक्षात्कारवत्त्वाद्योगिभिः सर्वैश्च नित्यज्ञानादिविशिष्टभेदस्यानुपलम्भादीश्वरभेदस्सिद्ध्यति ।

यदुक्तम् — सोपाधिकयोर्भेदोऽयमिति; तन्न, जीवस्याणुत्वेन स्वतः परिच्छिन्नतया तदर्थमुपाधियोगस्याकल्प्यत्वात् । उत्क्रान्तिगत्यागतिश्रुतिभिः, 'एषोऽणुरात्मा चेतसा वेदितव्यः ।' 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः' 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेयः स चानन्त्याय कल्पते' इति श्रुतिभिश्च सूत्रकारैरेव साधितम् । नचैषोऽणुरात्मेति परमात्मन एवाणुत्वं दुर्दर्शत्वं प्रतिपाद्यते, 'न चक्षुषा गृह्यते' इत्यादिना तस्यानन्तरपूर्ववाक्ये प्रकृतत्वात्, वेदितव्यत्वलिङ्गाच्चेति वाच्यम्; 'यस्मिन् प्राणः पञ्चधा संविवेश' इति यच्छब्दयोगेनैतच्छब्दस्य वक्ष्यमाणपरामर्शित्वात् । नच तत्रापि परमात्मैव प्रतिपाद्यत इति वाच्यम्, नहि 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः' इतिवत् सर्वाधारत्वमिह प्रतिपाद्यते, किन्तु जीवासाधारणप्राणचित्तेन्द्रियाधारत्वमात्रम्, अतो जीवपरत्वमेवास्य युक्तम् । नच वेदितव्यत्वलिङ्गविरोधः, नियन्तृ-

निगमेष्वात्मनोऽणुत्वप्रतिपादनादविरोधात्; इह च पूर्वं 'बुद्धेश्च गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति परमात्मनो महत्त्वमुक्त्वा, 'एषोऽणुरात्मे'ति जीवे तद्वैलक्षण्यप्रतिपादनात् । 'बुद्धेर्गुणेन' इत्यत्र बुद्धेर्गुणेनाराग्रमात्रः - आत्मगुणेन महानिति नार्थः, चकारादितान्वयकल्पनाप्रसङ्गात्, अध्याहारप्रसङ्गात्, चैवेति समुच्चयार्थनिपातानन्वयाच्च, किन्तु अवरो जीवः उक्तप्रकारः बुद्धेर्गुणेनात्मगुणेन चाराग्रमात्रः, आराग्रं चर्मसूची, बुद्धेर्विभुत्वयोग्यत्वेऽपि धर्मिणा अनुनिहितत्वेन मन्दद्युमणिप्रभावत्तद्दशायामाराग्रतुल्यपरिमाणत्वात् । इन्द्रियद्वारा पदार्थविषय हि प्रसरः । बुद्ध्या सह गुणमणुत्वस्य धर्मित्वात् पादाग्निसन्तापाद्यानुभवसामर्थ्यं पुनस्तथाहुक्तमाह 'बालाग्रेत्या' दिना । पुनः पृथक्कीर्तनात् स्वाभाविकताप्रसिद्धिः । न चात्मनोऽणुत्वे जगदान्ध्यप्रसङ्गः, धर्मभूतज्ञानेनैव जगतः प्रकाशात् । न च गर्भाद्दीर्णगुणात्मकानुपपत्तिः, तस्यैव धर्मभूतज्ञानस्य तत्तद्देहव्यापित्वादिपरिणामोपपत्तेः । न च गुणत्वादन्यत्र वृत्त्यसम्भवः, 'प्रज्ञा च तस्मात् प्रसृता पुराणी' 'तदाऽस्य क्षरति प्रज्ञा दृतेः पादादिवोदक' मित्यादिना द्रव्यत्वावगमात् । द्रव्यत्वेऽपि प्रभाया इव सजातीयद्रव्यान्तराश्रितत्वतद्गुणीभावतद्देशान्तरव्याप्त्यादिरुपपद्यते । तदेतत्- 'गुणाद्वालोकव' दिति सूत्रकारैरेवोक्तम् । तथाच शौनकवचनम्- 'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथे' त्यादि । अतः स्वतः परिच्छिन्नत्वान्न तदर्थमुपाधिकल्पना । अस्तु वा सोपाधिकः परिच्छेदः, तथापि शरीरमेव परिच्छेदोपाधिरस्यात्, तु स्यादेस्तत्राभावात् तत्प्रयुक्तो निर्दु:खादिभेदप्रत्ययस्स्वरूपगोचर एव । नचाहङ्कारानात्मत्वस्यादप्रत्ययस्य तत्सम्बन्धिताविषयत्वस्य च सिद्धत्वात् भेदप्रतीतिस्सोपाधिकगोचरेति चेत्? यथैवमहङ्कारस्यानात्मत्वमुपजीव्यते, तथा सति परिच्छेदादुपाधिकल्पनप्रयासो व्यर्थः । अस्तु वान्तःकरणस्य परिच्छेदोपाधिकत्वम्, अथापि भेदप्रतीतिर्न तन्निष्ठा, मानाभावात्, नाहमीश्वर इति सोपाधिकसामानाधिकरण्यात्तन्निष्ठत्वमिति चेन्न,- स्थूलोऽहं जानामीति शरीरोपाधिकसामानाधिकरण्येऽपि ज्ञातृत्वस्यादमर्थनिष्ठत्वात् । अथापि स्थौल्यवत् सोपाधिकत्वस्यापि सम्भवान्न स्वरूपनिष्ठत्वनिर्धारणमिति न भेदप्रत्यक्षत्वात् भेदं

ततश्च नाहमीश्वर इत्यनुपलम्भात् सिद्धयति, न पुनरीश्वरो नास्तीति । तदेवं कर्मवश्यानां प्रतिहतिभूयिष्ठसङ्कल्पानामाध्यात्मिकादिदुःख सन्ततिसन्तप्तानां स्वदुःखमूलोन्मूलनाय लौकिकमलौकिकं वा हेतुमन्विच्छतामस्मदादीनामनीश्वरत्वे प्रत्येकं प्रत्यक्षतः परस्पर-मनुमानतश्च सिद्धे न काचिदप्युपपत्तिर्जीवेश्वरत्वं साधयितुमीष्टे ।

एतेन द्वितीयोपि विकल्पो निरस्तः, स्वशरीरवत्परशरीरेपि जीवानामीश्वरव्यतिरेकस्य दुःखादिसम्भेदसिद्धत्वात् । तस्य च तेषां प्रत्यक्षत्वात् । तथाच सति जीवः ईश्वराद्भिन्नः चेतनत्वादित्यादौ बाधप्रतिज्ञाविरोधादयो द्रष्टव्याः । अथ विरुद्धधर्ममिथ्यात्वेन जीवेश्वरयोः स्वरूपैक्यमविरुद्धमित्युच्यते, तथापि जीवेश्वरयोः

---

सिद्धिरिति चेन्न;— अहमर्थस्यौपाधिकत्वेऽपि स्थूलो जानामीति प्रतीतिवदह नियच्छामीति प्रतीतेरावश्यकतया नियन्तृभेदप्रतीतेरसम्भवात् । ननूपाधिनैव दोषेण प्रतिबन्धान्न सर्वनियन्तृत्वप्रतिभास इति चेत्? तर्हि सर्वनियन्तृत्वप्रतिभासः क्वापि न स्यात् । जीव एव नियन्तृत्वप्रतिभासे क्वापि उपाधिः प्रतिबन्धक इति चेत्? तर्हि जीवेशाभेदसिद्धौ तस्यैव प्रतीत्युपपत्तावुपाधिगतभेदाध्यासोपपादनमयुक्तम् । तस्मात् स्वरूपगोचरैव भेदाध्यक्षप्रमितिरिति ।

प्रत्यक्षासिद्धिहेतुमुपसंहरंस्तेनैव द्वितीयकल्पस्यापि निरस्ततामाह तदेवमित्यादि निरस्त इत्यन्तेन । कर्मवश्याना मित्यादिना ईश्वरभेदरूपा अपहतपाप्मत्वादिप्रतिपक्षा धर्मा विवक्षिताः । प्रतिहती त्यादिना सत्यसङ्कल्पत्वप्रतिपक्षधर्मः, दुःखे त्यादिना विजघत्सापिपासासत्यकामत्वप्रतिपक्षधर्माः । आध्यात्मिकादौ त्वनेव जरामृत्यू अन्तर्गतौ । अनुमानतः — विरुद्धधर्मवत्त्वरूपलिङ्गानुमानतः । अनुमानेन फलितं दूषणं दर्शयति तथा च सतीति । मिथ्याभूतभेदविषयत्वात् प्रत्यक्षानुमाने न बाधके इत्याशयेन शङ्कते अथेति । तथापी ति । धर्मिणस्सत्यत्व एव विरुद्धधर्मत्वमिथ्यात्वादर्थैक्यसिद्धिः, ननु

कार्यकारणोपाधिरूपेणाध्यस्तत्वाभ्युपगमात् रज्ज्वारोपितसर्पभूदळनादेर्भ्रमाध्यस्ततेजस्तिमिरादिविरुद्धवर्गस्य च तादात्म्यविरोधो न स्यात् । न चैतद्युक्तमभ्युपेतुम्, व्यावहारिकत्वेनेति यथालोकं व्यवस्थाप्यत्वात् । आरोपितोभयबाधदशायामप्यधिष्ठानमात्रपरिशेष एव, न पुनरारोपितयोस्तादात्म्यम्, नाप्यधिष्ठानारोपितयोः ; अन्यथा सर्वशून्यत्वे सर्वसत्यत्वे वा पर्यवसानात् । तैमिरिकस्य चन्द्रे चन्द्रान्तरवत् स्वस्मिन्नेव स्वाध्यासात् अविरोध इति चेन्न;- उपरिदेशस्य तत्र चन्द्रान्तराध्यासाधिष्ठानत्वं चन्द्रस्य वा द्वित्वाध्यासाधिष्ठानत्वमिति न क्वचिदपि स्वस्मिन्नेव स्वाध्यासः । स्वमहिमप्रतिष्ठितत्वाद्युक्तेरपि निरालम्बत्वादिमात्रे तात्पर्यम् । तथापि चन्द्रद्वित्ववत्स्वरूपभेदाध्यासः, तन्निवृत्तौ स्वरूपैक्यमविरुद्धमिति चेत्? हन्तैवमचेतनवर्गेऽपि किन्न कल्प्यते । तन्मिथ्यात्वप्रतिपादनबलादिति चेन्न ;- 'नेह नानास्ति' इत्यादिना

---

तन्मिथ्यात्वेऽपि, अन्यथा रज्ज्वारोपितसर्पभूदळनयोस्तेजस्तिमिरयोश्च सर्पत्वभूदळनत्वतेजस्त्वतिमिरत्वादिधर्माणां मिथ्यात्वादैक्यप्रसङ्ग इत्यर्थः । ननु जीवेश्वरयोः पारमार्थिकत्वाभावादुपपत्तिनिरपेक्षत्वाद्विरुद्धधर्मवतोरप्यैक्यसिद्धौ को दोष इत्यत आह व्यावहारिकत्वेनेति । भेदस्य व्यावहारिकत्वान्न व्यावहारिकैक्यसम्भवः, धर्मिमिथ्यात्वान्न तात्त्विकैक्यसम्भवः, तथैव सर्पभूदळनादिषु व्यवस्थादर्शनादित्यर्थः । ननु व्यवहारदशायां यथालोकं व्यवस्थास्तु, भेदनिवृत्त्यनन्तरमैक्यं भविष्यतीत्यत्राह आरोपितेति । ननु सर्पभूदळनवन्नात्र जीवेश्वरौ द्वावप्यध्यस्तौ, किन्तु ईश्वरे जीवोऽध्यस्त इत्यत्राह नापीति । ननु "स्वे महिम्नि प्रतिष्ठितः" 'पतिं विश्वस्यात्मेश्वर' मिति श्रुत्यवगतस्वाश्रयत्वस्येश्वरत्ववत् स्वाधिष्ठानत्वमपि न विरुध्यत इत्याशङ्क्य दृष्टान्तासिद्ध्या दूषयति स्वमहिमेति । तन्निवृत्तिं — तस्य नित्यनिवृत्तिं, तेन मिथ्यात्वं

ज्ञातृज्ञेयज्ञानरूपसमस्तनिषेधाभ्युपगमात् , 'यत्रत्वस्य सर्वमात्मैवाभूदि' ति वाक्यशेषेण त्वदनभिमतस्यापि सर्वेन्चरूपेणस्यस्य स्वरसप्रतीतेः । प्रत्यक्षादिसिद्धविरोधानुसारेण तत्र तादात्म्यं परित्यजाम इति चेत् , तर्हि सैव दृष्टिर्जीवेश्वरयोरपि किन्न निक्षिप्यते । अन्यथा तादात्म्यसन्देहस्य विरोधस्य च निर्मूलत्वे प्रतिवाद्यपि यत्किमपि जल्पन् निगृह्येत ।

नापि तृतीयः । शास्त्रमपि हि सहस्रशो जीवेश्वरयोर्भेदमेव कण्ठोक्त्या क्वचित्प्रतिपादयति,

---

विवक्षितम् । ननु निरुद्धधर्मिमिथ्यात्वेऽप्यैक्ये प्रमाणाभावादनेतावतास्य नेश्वरैक्यमित्यत्राह यत्रत्वस्ये ति । शास्त्रमपी ति ।

यदाह — नवीनः —

मानान्तरप्रसिद्धत्वान्मिथ्यात्वदनयोगनात् ।

भयतारविरोधाच्च न श्रुतिर्भेदगोचरा ।

अस्ति हि पामराणामपि नाहमीश्वर इति भेदप्रत्ययम् , अनुभवसिद्धेर्थे च न श्रुतितात्पर्यम्, किञ्च अहमर्थे प्रतीयमाने भेदस्य उक्तरीत्या परिच्छिन्नत्वप्रतिभासानुरोधेन सोपाधिकतया मिथ्यात्वेन न तत्र तत्त्वावेदकश्रुतितात्पर्यम् ; किञ्च — भेदज्ञानादनवद्यपुमर्थाभावेन तस्य स्वपरश्रुतिजन्यत्वायोगश्च ; प्रत्युत 'उदरमन्तरं कुरुते । अथ तस्य भयं भवती' त्यादिना विपरीतफलमेव श्रूयते ; किञ्च 'नान्योऽतोऽस्ति द्रष्टे' त्यादिश्रुतिभिरनधिगताबाधितप्रयोजनवदैक्यमात्रस्य जीवे प्रतिपादितत्वाच्च, — न भेदस्तयो स्त्रश्रुत्यर्थ इति ।

तत्र मानान्तरसिद्धत्वात् भेदस्य न तत्र श्रुतिः प्रमाणमिति किमिदमप्रामाण्यम् ? किं सापेक्षत्वम् , किं वा अप्रमाणकत्वम् , उत तात्पर्याभावः ?

नाद्य, पुरुषद्वयप्रत्यक्षयोरिव श्रुतिप्रत्यक्षयोस्समानविषयत्वाभावेन परस्परसापेक्षत्वासिद्धेः । न द्वितीयः, पुरुषद्वयप्रत्यक्षवदेव श्रुतिप्रत्यक्षयोरन्यतराप्रामाण्यासिद्धेः । मानान्तरसंवादो हि प्रामाण्यमेव साधयति । न तृतीयः, मानान्तरसंवादस्य प्रामाण्याभासहेतुत्वेन तस्य तात्पर्याभावहेतुत्वासिद्धेः । मानान्तरसिद्धार्थबोधने प्रयोजनाभावात्तत्र प्रामाण्यमिति चेन्न, — प्रयोजनाभावेऽपि प्रत्यक्षादेः प्रामाण्यदर्शनात् । ननु सर्वज्ञ भगवन्तमारभ्याद्यावदाचार्यक्रमागतेन नियमाध्ययनाध्यापनधारणादिभिर्महता प्रयत्नेन प्रवर्त्यमानो वेदो लेशतोऽपि न व्यर्थीभवितुमर्हतीति चेन्न, — जपादिप्रयोजनस्य निष्प्रत्यूहत्वात् । न च तत्प्रयोजनं स्वाभाविकमर्थपरत्वं विहन्ति । किञ्च परमपुरुषार्थोपासनाप्रीतभगवदधीनत्वात् भेदबुद्ध्यभावे तदुपासनासम्भवात् भेदबुद्धिः परमपुरुषार्थोपयोगिनी । भेदस्य प्रत्यक्षसिद्धत्वात् तस्यैवायं पुरुषार्थस्स्यादिति चेत् ? परमपुरुषार्थोपयोगिभेदप्रतिपादनाविशेषे तस्यैवेति कुतो निर्णीयते । अपि च भेदस्य प्रत्यक्षसिद्धत्वेऽपि कस्यचित् भेदप्रत्यक्षस्य बाधितत्वदर्शनेन भेदप्रत्यक्षेऽप्यनाश्वासप्रसङ्गे तन्निवृत्तये निर्दोषश्रुत्या भेदप्रतिपादनं युक्तमेव । किञ्च दुष्टहेतूपपादितभेदमिथ्यात्वनिरसनमपि प्रयोजनं घटत एव, 'तद्धैक आहुरसदेवेदमग्र आसीदि' ति वादिनिरसनमपि हि दृश्यते । किञ्च- भेदवाक्यापातप्रतीत्या भेदशास्त्रप्रवृत्तिवारणार्थमद्वितीयात्मश्रवणनियम इति त्वदुक्तरीत्यैवाद्वैतवाक्यापातप्रतीत्याद्वैतशास्त्रप्रवृत्तिवारणार्थं भेदश्रुतिभि तत्प्रतिपादनमिति किन्न स्यात् । अपिच वैधर्म्यमेव हि भेदः, ततश्च जीवे किञ्चिज्ज्ञत्वदुःखाकरत्वादिरूपवैधर्म्यस्य प्रत्यक्षत्वेऽपि कर्मवश्यत्वसूक्ष्मत्वपारवश्यत्वनियाम्यत्वशेषत्वशरीरत्वादिधर्माणां परमात्मनि नियामकत्वादिसर्ववैधर्म्याणां च मानान्तराप्राप्तत्वात् तेषामेव श्रुतौ प्रतिपादनात्तत्र न कश्चित्क्षुद्रोपद्रवः । किञ्च कस्या भेदश्रुतेर्व्यर्थानुवादतया भेदे तात्पर्याभाव उच्यते ? न तावत् 'द्वा सुपर्णे' ति श्रुतेः, तत्र भेदप्रतिपादनस्यानन्यार्थत्वात् । नापि 'समाने वृक्षे' इति श्रुतेः, विशोकतानिमित्तदर्शनविषयतया प्रतिपादनार्थत्वात् । नापि 'पृथगात्मान' मिति श्रुतेः, भेदज्ञानस्य मोक्षोपायतया प्रति

पादनार्थत्वात् । 'अयोन्तर आत्मानन्दमय' इत्यस्य 'स य एवं वि' दित्या दिना भेदज्ञानान्मोक्षप्रतिपादनार्थत्वात् । 'तस्मिंश्चान्यो मायया सन्निरुद्ध' इत्य स्यापि 'पृथगात्मान' मिति श्रुत्यनुरोधेन मोक्षाय ज्ञातव्यभार्थस्यप्रतिपाद नार्थत्वात् । एवं सर्वत्र स्पष्टम् । औपाधिकत्वेन मिथ्यात्वात् भेदो न शास्त्र प्रतिपाद्य इत्यपि न, परिच्छेदार्थमुपाधिकल्पनस्य निरस्तत्वात् । फलप्रयोजन त्वात् भेदो न शास्त्रतात्पर्यमिति, तत्र, 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इत्यादिभिर्भेदज्ञानस्य मोक्षसाधनत्वावगमात् । यत्तु – भेदज्ञानस्य विपरीतफलं श्रूयत इति, तत्र, असिद्धे, 'उदरमन्तरं कुरुते' इति श्रुतेरेतावत् एतस्मिन्नात्मनि उत् अपि, अरम् – अल्पम्, अल्पमपि, अन्तरम् – भेदमपि, य कुरुते जानाति, अथतस्य, भयम् जन्मादिभयम्, भवतीति नार्थ, 'यदाह्येवैष' इति पूर्ववाक्योक्ताभयहेतु प्रतिष्ठाप्रतिकोटिभूतोह्यन्तरशब्दार्थो वाच्य, प्रतिष्ठाशब्दस्य नैक्यमर्थ, लक्ष णाया स एव दोष, लाभार्थविदतिधात्वस्वारस्यच, ऐक्यस्य च नित्यप्राप्त तया ज्ञानलक्षणाया वाच्यत्वात् सतम्यस्वारस्यच, ब्रह्मण ऐक्यप्रतियोगित्व विवक्षाया तृतीयाप्रसङ्गात्, स्वप्रतियोगिकैक्याधारत्वविवक्षाया स्वस्ये त्यध्याहार, अत प्रतिष्ठाशब्दस्याभेदपरत्वाभावाच्चान्तरशब्दो भेदपर, तथाच सति परोक्तेर्शनपरत्वेनास्वारस्यम्, तस्मादयमर्थ – प्रति- ष्ठाशब्दो दृढसम्बन्धवचन, तस्य चोपास्योपासकभावलक्षणसम्बन्धविशेषपर्यव सान युक्तम्, स्वरूपत प्रतिष्ठितत्वस्य नित्यसिद्धत्वात् 'ब्रह्मसंस्थोऽमृतत्व

5 मेति' 'श्रेनिय ब्रह्मनिष्ठम्' 'तन्निष्ठस्य मोक्षोपदेशा' दित्यादिप्रयोग दर्शनात् । अन्तरशब्दोऽपि तत्प्रतिकोटिभूतार्थपरो वाच्य, स च विच्छेद, तत्परत्वञ्च निरन्तर सान्तरमित्यादिप्रयोगाद्युक्तम् । अतो ब्रह्मोपासनान्मोक्ष, तद्विच्छेदाच्च ससार इति – वाक्यार्थ । 'नेह नानास्ति किञ्चने' त्यत्रापि नानाशब्दो विनार्थ, 'विनञ्भ्यां नानाञौ न सहे' ति सूत्रेण विनार्थे व्युत्पादनात्, 'पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने' इति अमरोक्तेश्च । ततश्च ब्रह्मण पृथग्भूत तदप्रकारभूत स्वनिष्ठ वस्तु नास्तीत्यर्थ । 'अथ

येन्यथातो विदु' रित्यत्रापि न भेदज्ञाननिन्दापरत्वम्, भूमविद्याया अभेदपरत्वस्यादमर्थात्मत्वसमर्थने निरस्तत्वात्; अतःस्वनिरुक्तत्वेन ज्ञाने 'एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति क्षय्यलोककारणत्वेन उक्तकर्मवदसत्वरूपमन्यराजत्व स्यादित्यर्थः। 'अथ योन्यां देवतामुपास्ते' इत्यपि स्वाज्ञान्य ज्ञाननिन्दापरम्, नचैव लक्षणाप्रसङ्गः, अहमन्य इति ज्ञानं हि अहम्बुद्धेः स्वपर्यवसायित्व एव स्यात्, अतोऽहम्बुद्धेः परजनिषेध्यभूतब्रह्मपर्यन्तत्वाभावान्न जानातीति निन्द्यते। तस्मात् 'पृथगात्मान' मिति भेदज्ञानस्य मोक्षसाधनत्वोपदेशान्न येनापि वाक्येन तन्निन्दासम्भवः।

श्रुत्यन्तरविरोधान्न भेदः श्रुत्यर्थ इत्यपि न; 'अदृष्टो द्रष्टे' ति अन्यादृष्टस्य नियन्तुर्द्रष्टुः प्रकृतत्वेन तादृशस्यैव द्रष्ट्रन्तरस्य निषेधात्; अन्यथा प्रमाणान्तरविरोधात्। यथा- अस्मिन् ग्रामे देवदत्त एव पुरुषो नान्य इत्युक्ते न पुरुषमात्रं निषिध्यते, किन्तु नैवंविधोऽन्यः पुरुष इति बुद्धिस्वास्थ्यादिविशिष्टपुरुषान्तरं निषिध्यते। किञ्च 'नान्योऽतोऽस्ति द्रष्टे' त्येतावता द्रष्ट्रन्तरनिषेधसिद्धौ अतश्शब्देन विशिष्टपरामर्शो विशिष्टान्यनिषेधार्थ एव। ननु समानद्रष्टृनिषेधे 'नान्यो ऽतोऽस्ति श्रोते' त्यनुपपन्नम्, ब्रह्मणि श्रवणमननादेरसम्भवात्, जीवाभेदपरत्वे श्रवणादेर्जीवधर्मत्वाद्युक्तमेव; 'अदृष्टोद्रष्टे' ति पूर्ववाक्येऽपि जीवाभेदपरत्वादेव श्रवणादिकीर्तनमिति चेन्न;- अन्यो द्रष्टा नास्तीत्यनेनात्र द्रष्टृत्वं प्रतीयते, नच त्वया ब्रह्मणो द्रष्टृत्वमिष्यते। अतश्शब्दास्वारस्यं च दर्शितमेव। अस्तिपदास्वारस्यं च, तस्य स्वरूपनिषेधे स्वारस्यात्। भेदपरत्वे मन्तव्येति हि नवितव्यम्। 'य आत्मनि तिष्ठ' न्निति 'एषत आत्मान्तर्याम्यमृत' इति पूर्वं भेदप्रतिपादनेन स्वप्रकरणविरोधात्, 'एषत आत्मान्तर्याम्यमृत' इति वाक्यशेषविरोधात्, प्रतिपर्यायं 'एषत आत्मान्तर्याम्यमृत' इति अत्यादरेण व्यतिरेककीर्तनेन कृत्स्नस्यापि प्रकरणस्य भेदतात्पर्यावगत्या महावाक्यतात्पर्यविरोधाच्च नैतद्वाक्यमभेदपरम्। नच 'एषत आत्मे' त्यात्मशब्दः स्वरूपपरः; षष्ठ्या उपचरितार्थप्रसङ्गात्, आत्मशब्दस्यापि शरीरप्रतिसम्बन्ध्यात्मन्येव स्वारस्याच्च ।

श्रवणाद्युपपत्तिः कथमिति चेत्? पूर्वत्रहि प्रतिपर्याय नियन्तृत्व प्रतिपादितम्, तदपेक्षित ज्ञातृत्व द्रष्टेत्यादिना प्रतिपाद्यते; पूर्व 'यमात्मा नवेदे' ति ब्रह्मवेदननिषेधात् ब्रह्मज्ञानान्मोक्षश्रुत्यनुपपत्तिः, 'एषत आत्मे' त्याद्युपदेशनैरर्थ्यं चेति शङ्कायामदृष्ट इत्यादिना निषेधतात्पर्यमुच्यते । 'अदृष्ट' इति । रूपसाक्षात्कारागोचरः, चक्षुरविषय इति यावत् । अश्रुतः— शब्दसाक्षात्काराविषयः, श्रोत्राविषयः । अमतः- मानसमननाख्यविचाराविषयः, अप्रतर्क्यः । अविज्ञातः, बुद्धिकार्याध्यवसायो विज्ञानम्, तदविषयः । द्रष्टा - रूपसाक्षात्कर्ता । श्रोता - शब्दगोचरसाक्षात्कारवान् । मन्ता - विचार्यगोचरसाक्षात्कारवान् । विज्ञाता - अध्यवसेयसाक्षात्कारवानित्यर्थः । अन्यथा द्रष्टा श्रोतेत्यादेः श्रवणमननादिकर्तृपरत्वे अदृष्टाश्रुतादिपदानां तन्निषेधकत्वस्य वाच्यत्वाद्द्रष्टव्यः श्रोतव्य इत्यादिश्रुतिबाधः । एवञ्च 'नान्योऽतोऽस्ती' त्यत्रापि श्रोतृमन्त्रादिपदस्य न श्रवणमननादिकर्तृजीवपरत्वम्, येन द्रष्टृश्रोत्रा द्यभेदाज्जीवैक्यसिद्धिः । तस्मादेतत्सदृशः किमन्यो विद्यत इत्यपेक्षायां तन्निषेधति 'नान्योतोऽस्ती' ति । यद्वा- 'सकारणं करणाधिपाधिपः न चास्य कश्चिज्जनिता न चाधिपः' 'पतिं विश्वस्यात्मेश्वरम्' 'रुद्र समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः । ब्रह्मा मामाश्रितो राजन्नाहं कञ्चि दुपाश्रितः ॥' 'स वेत्ति वेद्यं नतु तस्यास्ति वेत्ते' त्यादिश्रुतिस्मृतिषु अन्यान् प्रति कारणत्वरक्षकत्वशेषित्वाश्रयणीत्वाद्यभिधाय, तस्यापि कारणाधिपान्तरादिशङ्कानिरासार्थं कारणाधिपान्तरादिनिषेधवत्, सर्वेतरान्तरत्वनियन्तृत्वाद्यभिधानानन्तरं किन्तस्याप्यान्तरतन्नियामकः कश्चिदस्तीति शङ्कानिरासाय तन्निषेधः क्रियते । अतोऽधिकः अस्यापि नियामको ऽन्यो द्रष्टा नास्तीत्यर्थः । 'न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकमि' ति यद्वधौ पञ्चमी । 'नात्र काचन भिदास्ती' त्यत्रापि नृसिंहाभेदेन प्रणवप्रशंसापरत्वाच्च जीवे श्वराभेदसिद्धिः । 'द्वासुपर्णे' ति । जीवस्य द्वौ पर्णौ — पुण्यापुण्यरूपौ ऐहिकामुष्मिकश्रेयस्साधने वा, ईश्वरस्य निग्रहानिग्रहसङ्कल्पौ, सयुजौ - अविनाभूतौ, सखायौ – लीलापरिकरत्वभोगप्रदत्वाभ्यां परस्परोपकारकौ, वृक्षमित्येक-

चानेन एकत्वलाभाद्वृक्षस्य द्वाभ्यामेवरूपसम्बन्धार्थंसमानशब्दः, ततश्च जीवेनेन ईश्वरेणापि शरीरशरीरिभावसम्बन्धो लभ्यते, पिप्पलशब्दः फलन वचनः वैषयिकसुखमुपलक्षयति, स्वादु-भुज्यमानमाधरुचिप्रदम्, वैराग्यस्या जनकमित्यर्थः ।

ननु - अयं मन्त्रः पैङ्गिरहस्येन्तःकरणजीवपरतया व्याख्यातः 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वम्, अनश्नन्नन्यो अभिचाकशीति अभिपश्यतीति ज्ञः, द्वावेतौ सत्वक्षेत्रज्ञावि' ति । अत्र स्वाद्वत्तीत्येतदन्तस्य वाक्यस्य सत्वपरत्वम्, अनश्नन्नित्यादेः क्षेत्रज्ञपरत्वं च प्रतीयते । नच सत्वक्षेत्रज्ञशब्दौ जीवपरमात्मपराविति वाच्यम्, तयोरन्तःकरणजीवपरतया प्रसिद्धत्वात्; 'तदेतत्सत्वं येन स्वप्नं पश्यतीति अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः' इति पैङ्गिश्रुत्यैव तथा व्याख्यातत्वाच्च । येनेति करणत्वप्रतीतेस्सत्वं ह्यन्तःकरणम् । स्वप्नद्रष्टृत्वाच्च क्षेत्रज्ञो जीवः । इति ।

उच्यते, न तावज्जीवपरमात्मपरत्वमस्य मन्त्रस्यापवदितुं शक्यते, अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने 'समाने वृक्ष' इत्यनन्तरमन्त्रे जीवपरयोः प्रतिपन्नत्वादस्य मन्त्रस्य तदैकार्थ्याच्च । 'समान वृक्ष परिषस्वजाते' 'समाने वृक्षे पुरुषो निमग्न' इति तयोरैकार्थ्यं हि प्रतीयते; 'समाने वृक्ष' इत्यत्र च पुरुषो जीवः, अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात्, 'शोचति मुह्यमानः' (पश्यति वीतशोक) इति पदानामस्वारस्यप्रसङ्गाच्च । अन्यश्च परमात्मा, ईशशब्दोक्तत्वात्, स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च । न केवल मनन्तरमन्त्रैकार्थ्यात् द्वासुपर्णे ति मन्त्रस्य जीवपरमात्मपरत्वम्, किन्तु 'स्वाद्वत्ति अनश्नन्नन्य' इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते; चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवदन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं हि न सम्भवति । जीवस्य च वृक्षशब्दोक्तदेहपरिष्वङ्गदशायामेवानश्नत्वमपि नोपपद्यते । तर्हि पैङ्गिश्रुतेः कोऽर्थः ? उच्यते, सत्व- बद्धजीवः, 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री [redacted] जन्तुष्वि' ति नामानुशासनाज्जन्तुपरत्वावगतेः, जन्तुश्च चेतनः, 'प्राणी [redacted] चेतनो जन्मी जन्तुजन्यशरीरिणः ।' इति नामपाठात्; 'वन्यान्विनेष्य

निव दुष्टरता' मिति प्रयोगात्; नतदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैरि' ति दर्शनाच्च । क्षेत्रज्ञशब्दश्चात्र परमात्मपरः, अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः; विष्णोर्नामसहस्रमित्युपक्रम्य 'क्षेत्रज्ञोऽक्षर एवचे' ति प्रयोगात्; क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च। मोक्षधर्मे "ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥ सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धितत्त्वतः" इति, तत्रैव-'विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ।' 'क्षेत्राणि च शरीराणि ज्ञानानि च शुभाशुभे । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते॥' इति प्रयोगात् । तत्रैव 'कपिलासुरिसंवादे – 'ज्ञानानामासुरे क्षेत्रे क्षेत्रज्ञो द्रष्टा शुचि रपेक्षकः । ज्ञातृत्वो बुध्यमानाप्रतिबुद्धयो' परममृतं विदित्वा निरवयवमनामयमस्माद् द्वन्द्वाद्विमुच्यतएवे' ति बुध्यमानाप्रतिबुद्धशब्दाभिहितयोः चिदचितोः परस्य क्षेत्रज्ञशब्देनाभिधानात् । तत्रैव पञ्चविंशतितत्त्वानि वर्गशब्देनोक्त्वा, 'एतस्माद्वर्गादपवृत्तोपवर्गद' क्षेत्रज्ञशुचिरपेक्षकोबुध्यमानाप्रतिबुद्धयोः परस्ता' दिति, तत्रैव-अन्यदुदकमन्यत्पुष्करपर्णं तथान्यत्क्षेत्रमन्य.पुरुषः पञ्चविंशक', अन्यश्चास्मात् क्षेत्रज्ञ' इति, पुनश्च तत्रैव –'एवमासुरे अन्यद्द्रव्यमन्यः पुरुषः पञ्चविंशति तत्त्वमन्योऽस्मात्क्षेत्रज्ञ' इति पञ्चविंशात् परस्मिन् क्षेत्रज्ञशब्दप्रयोगात् । सनत्कुमारनारदसंवादे च –'पश्य पश्यति पश्यन्तमपश्यन्तञ्च पश्यति । पश्यन्तं पश्यन्त पश्यत्वात् पश्यापश्ये न पश्यत' ॥' इति श्लोकमुक्त्वा, 'प्रकृतिं क्षेत्रं क्षेत्रज्ञं चापरः क्षेत्रज्ञः पञ्चविंशकोनुपश्यति नतु पञ्चविंशक क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यती' ति प्रयोगाच्च । अत्र ह्यात्मशब्दवत् क्षेत्रज्ञशब्दस्य जीवपरसाधारणस्य पञ्चविंशपरशब्दविशेषितस्य जीवपरमात्मविषयत्वदर्शनाच्च । 'योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि स भूतात्मेति चोच्यते ॥' इति मानवप्रयोगाच्च । 'तदेतत् सत्त्व' मिति । येन कारणेन स्वप्नं पश्यति तेन कारणेन जीव इत्यर्थः । अन्तःकरणपरत्वपक्षेपि 'येने' ति करणपरत्वमनुपपन्नम्, परमते अन्तःकरणस्य कर्तृत्वाज्जाग्रद्दशायां जपाकुसुमवदात्मनि ज्ञातृत्वारोपनिमित्ततया कथञ्चिदुपचारात्करणत्वसम्भवेपि स्वप्नदर्शने न कथञ्चिदपि कर

णत्वम्, स्वप्नदर्शनस्य साक्षिरूपत्वाङ्गीकारात्। 'अभयोऽय' मिति। शारीरत्वाद्द्रष्टृत्वाच्च क्षेत्रज्ञ इत्यर्थः। यद्वा—'येने'ति कर्तरि तृतीया, पश्यतीत्यन्तर्भावितण्यर्थः, दर्शयतीत्यर्थ, देवदत्तेनोदनं पाचयतीतिवत्, उत्तरवाक्ये प्राज्ञस्य प्रकृतत्वात् स एव कर्ता। यद्वा—करणेवास्तु तृतीया, ब्रह्मणश्चिदचिदुपादानत्वश्रवणादुपादानत्वस्यावस्थाश्रयत्वरूपतया जीवोपादानत्वस्य तदीयज्ञानावस्थाश्रयत्वरूपत्वात् तच्च जीवस्य घटकत्वात् परमात्मनि जीवगतस्वप्नदर्शनाश्रयत्व प्रत्यपि घटकतया परमात्मन स्वप्नदर्शने जीवस्य करणतया व्यपदेशो युक्तएव। अस्मिन् पक्षे 'शारीरउपद्रष्टे' त्यत्रोपद्रष्टृत्व स्वप्नद्रष्टृत्वमेव। अतो 'द्वासुपर्णे' ति मन्त्रो जीवपरमात्मपर। अत्र समानशब्देन जीवशरीरस्य परमात्मशरीरत्वप्रतिपादनात् तस्यच भोगार्थत्वनिषेधात् श्रुत्यन्तरप्रसिद्धसार्वशरीरत्वप्रयुक्तमेव एतच्छरीरत्वकीर्तनमित्यवगमात्, पूर्वखण्डे सर्वात्मत्वोक्ति सर्वशरीरत्वनिबन्धना, नतु स्वरूपतादात्म्यनिबन्धनेति सिध्यति। 'स मा धीर पाकमात्मा विवेशे' ति वाक्ये, पाकम्—बाल माम्, धीर—परमात्मा, आविवेशेति जीवशरीरत्व पुनरपि पृथक् प्रतिपाद्यते। कावेतौ? सुपर्णौ। अज्ञानज्ञानयोश्च को हेतुरित्याकाङ्क्षायामाह 'समाने वृक्ष' इति। निमग्न—जलनिमज्जनेनेव तिरोहितस्वरूप। अनीशया—प्रकृत्या, ईष्ट इतीशा, सानेत्यनीशा, 'हलश्चे' ति घञ्। मुह्यमान—विपरीतज्ञानमज्ञान च प्राप्त। 'अनयाह वशीभूत काल्मेतन्न बुद्धवान्।' इति मोक्षधर्मवचनात्। यद्वा ईशा ऐश्वर्यम्, 'गुरोश्च हल' इति भावे अप्रत्यय, ईहेतियत्, अनीशा अनैश्वर्यम्, शोकनिवर्तनासामर्थ्यम्। कदा तर्हि शोकमोक्षो भवतीत्यत आह 'जुष्ट' मिति। स्वस्मिन् प्रीतिमन्तम्। भगवत्प्रसादेन स्वस्मादन्य कश्चिदीश्वरोऽस्तीति यदा पश्यतीत्यर्थ। आदिकर्मणि क्त। अ यमीशमस्य महिमान च पश्यतीत्य वय। समुच्चेतव्यन्तराच्चशब्दाध्याहार। अथवा 'नरमानय तरन्तुरगम्' 'विविदिषन्ति' 'यज्ञेन दानेन तपसानाशकेने' त्यत्रेवाध्याहार। 'इति'—इत्थम्भूतम्, द्वासुपर्णत्वाद्युक्तनियन्तृत्वापहतपाप्मत्वादिरूपम्। यदेत्युक्तेस्तदा वीतशोको भवतीत्यर्थ। 'अस्तिर्भवतिपर

प्रथमपुरुषो ऽप्रयुज्यमानोपी ' ति वचनादस्तिभवत्योश्च समानार्थत्वात् 'पञ्चदशान्याज्यानी ' त्यत्र भवन्तीति कल्पनवत् भवतीति कल्पनात्। 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामानि ' ति वद्धर्मधर्मिणोरुपास्यत्वकीर्तनम्।

यत्तु — बिम्बप्रतिबिम्बभावेन भिन्नयोर्जीवब्रह्मणोश्शरीरेऽवस्थानं 'द्वासुपर्णे ' त्यत्र 'समाने वृक्ष ' इत्यत्र च प्रतिपाद्यते, जीवस्य पर्णौ धर्माधर्मौ, ब्रह्मणोविद्यातत्सम्बन्धौ, सयुजौ — युक् बन्धः, तादात्म्यम्, सखायौ- जीवेश्वरः प्रसिद्धिं गतस्तेन च सः, अनेनोपकारेण सख्यम्; इतरपदानि स्पष्टार्थानि, पूर्वखण्डे 'ब्रह्मैवेद विश्वमिद वरिष्ठ ' मिति ब्रह्मणस्सर्वात्मत्वे निर्दिष्टे भोक्तृभेदात् ब्रह्मापि भोक्तृ स्यादित्याशङ्कायामय मन्त्रः पठ्यते। यौ द्वौ बिम्बप्रतिबिम्बभूतौ जीवेश्वरावस्मिन् शरीरे वर्तेते तयोर्मध्ये, 'अन्यः' बुद्धिप्रतिबिम्बभूतः, तदभेदाध्यासात्तद्धर्माभिमानी, 'अत्ति ' — कर्मफल भुङ्क्ते, 'अन्य. ' स एवान्यः सन् बुद्धितादात्म्यरहित॰, स्वरूपभूतचैत न्यात्मना, 'अनश्नन्नभिचाकशीति ' भोगरहितः प्रकाशते, औदासीन्योपाधया साक्षिमानमित्यर्थ.। 'अनश्नन्न्य ' इत्यत्रान्यशब्दः जीवस्यैवानुपहितरूपपरः, नत्वीश्वरपरः, देवदत्तो वामेनाक्ष्णा पश्यतीत्युक्ते तदितरेण दर्शननिषेध वद्धर्मादीश्वरे तन्निषेधसिद्धेस्तदुक्तिवैय्यर्थ्यात्। कथ भोक्तृजीवस्याशनाभावादि राहित्य स्वरूपम्? आगन्तुकस्य स्वरूपपरत्वायोगात्; नच तत् स्वाभाविकम्, जीवस्येदानीं भोगविशिष्टत्वात्, नहि दण्डविशिष्टस्तदानीमेव दण्डाभाव विशिष्टो भवतीत्याशङ्क्य, भोगस्य कल्पितत्वात् अधिष्ठानस्य कालत्रये प्यारोप्यशून्यत्वाद्दण्डिवैषम्यम्, नहि सर्पबुद्धिगृहीता रज्जुस्तदानीमपि सर्प रहिता न भवतीत्यभिप्रेत्याह 'समाने वृक्षे पुरुष ' इति। 'समाने ' — बिम्बप्रतिबिम्बरूपजीवेश्वराश्रये शरीरे, पुरुष॰ - बुद्ध्युपहित॰, 'निमग्नः ' — कर्तृत्वाद्यभिमानवान्, स्वरूपेणाप्रकाशान्निमग्नः, अत एव तत्कारणमोहावृतः, 'अनीशया ' — स्वस्यानन्दरूपेश्वरभावाप्रतीत्या, 'शोचति ' विषयागमापाय निमित्तदुःखमनुभवति, नचानीशा ईश्वरत्वाभावस्तृतीयया शोकहेतुत्वेन निर्दिष्टः,

ननु तदप्रतिपत्तिरिति वाच्यम्, तथा सति तस्य तव मते मुक्तावपि सत्त्वेन तदापि तन्निमित्तशोकप्रसङ्गात्; अस्मन्मते इदानीमपि तदभावादज्ञानमेवानीशा । अत एव जीवेश्वराभेदसाक्षात्कारात्तन्निवृत्तिमाह । 'जुष्टम्'- कार्यकारणसङ्घातैस्सेवितम्, अविवेकिभिः तदात्मतया गृहीतम्, 'यदा' अधिकारी, 'अन्यम्' - विवेचनाच्छरीरत्रयसाक्षितयावगतं शोधितत्वम्पदार्थम्, 'ईशम्' - ईशं सन्तम्, 'पश्यति' — ईश्वर इति स्वात्मानं पश्यति, साक्षात्करोतीति यावत्; तदा, 'अस्य' - आत्मत्वेनावगतस्य, 'महिमानम्'- अपरिच्छिन्नानन्दात्मकताम्; 'इति' - एति । नान्तरीयकतयानर्थनिवृत्तिं च दर्शयति 'वीतशोक' इति । अथवा - विवेकवैराग्यादिभिः प्रक्षालिताशयमलैस्सनकादिभिर्नैरन्तर्येणात्मत्वेन सेव्यमानमन्यं कार्यकारणसङ्घाताद्विलक्षणमीशं यदा पश्यतीत्यर्थः, नतु यदा जीवादन्यं पश्यति तदा तस्य महिमानं प्राप्नोतीत्यर्थः, तथा सति जीवेश्वरतदुभयभेदानां ज्ञानं मुक्तौ हेतुस्स्यात्, तथाच 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था अयनाय विद्यते' इत्यादिज्ञानज्ञेयनियमश्रुतिविरोधस्स्यात् । किञ्च - भेदे 'अस्य महिमानमि' त्येतद्विरुद्धम्, अन्यस्यान्यदीयमहिमप्राप्त्ययोगात्; तत्सदृशमहिमानमिति कल्पनायां लक्षणाप्रसङ्गात्; अत एव न स्तुतिमात्रपरतयापि व्याख्येयम्, सम्भवति मुख्यार्थेऽत्यन्तपरोक्षार्थताया अन्याय्यत्वात्, 'ब्रह्मवेद ब्रह्मैव भवती' ति वाक्यशेषविरोधाच्च । अत्र च ज्ञानाच्छोकनिवृत्तिः न पुण्यपापादेरिव सावशेषा, किन्तु तत्कारणपुण्यपापयोः तत्कारणाज्ञानस्य च निवृत्तत्वादात्यन्तिकीत्याह 'यदा पश्य. पश्यते रुक्मवर्ण' मिति । 'निरञ्जन' इत्यविद्याराहित्योक्तिः । 'परमं साम्य' मित्यैक्यमाह, अत्यन्तसादृश्यस्यैक्य एव पर्यवसानात्, भेदगर्भसादृश्यस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य' इत्यादिश्रुतिस्मृतिभिर्निषिद्धत्वात् । 'तथा विद्वान्नामरूपाद्विमुक्त' इत्यादिना मुक्तौ नामरूपादिराहित्यप्रतिपादनात्, नामरूपयोगाच्च साम्यं समत्वं यथार्थत्वमिति वा । तस्मान्नैताः श्रुतयो भेदे प्रमाणमिति ।

उच्यते — सङ्गतिस्तावदनुपपन्ना, चेतनाचेतनसर्वतादात्म्येऽभिहिते चेतनाचेतनगतास्सर्वे दोषाः ब्रह्मणि प्रादुष्ष्युरित्येव शङ्का स्यात्, ननु जीवाभेदमात्रे शङ्का; अचेतनसामानाधिकरण्यस्य बाधार्थत्वात्तत्र न शङ्केति चेत्? तथासत्यत्रापि बाधबुद्ध्या न शङ्का स्यात्; अत्राभेदार्थसामानाधिकरण्यबुद्धौ तत्रापि तथैव स्यादिति उभयत्र शङ्कोत्थितिरविशिष्टा; एकपदोपात्तयोश्चिदचितोरेकत्राभेदार्थं सामानाधिकरण्यमितरत्र बाधार्थमिति कुमतिः कस्यापि न जायत इति चिदचित्तादात्म्ये अविशेषेणैव शङ्का स्यात्; तत्र च नोत्तरमयम्मन्त्र इति नैवं सङ्गतिः। किन्तु पूर्वखण्डे उपास्यस्य हृदयावस्थानोक्त्या जीवस्योपास्यत्वशङ्कायान्तद्व्यावृत्तये उभयोर्हृदयावस्थानमेकस्य भोक्तृत्वादनुपास्यत्वमितरस्य भोक्तृत्वादिदोषविरहात् कल्याणैकतानतया प्रकाशमानत्वाच्चोपास्यत्वमिति प्रतिपादनार्थं प्रवृत्तोऽयं मन्त्रः।

एवमुत्तरमप्यनुपपन्नम्, त्वदुक्तशङ्कानिरासस्य अन्योत्ति अन्यः अनश्नन्नभिचाकशीतीत्येतावतैव सिद्धेर्द्वासुपर्णेत्यादिवैयर्थ्यात्, प्रत्युत 'द्वा सुपर्णेत्यादि त्वदुक्तार्थस्य बाधकमेव। तथाहि — पूर्वत्र जीवब्रह्मतादात्म्यं प्रतिपादितम्, तदनुपपन्नम्, ब्रह्मणो भोगप्रसङ्गात्, तच्चानुपपन्नम्, श्रुत्यैव ब्रह्मणो भोगनिषेधादिति शङ्कायां तस्यैव जीवस्य विशिष्टरूपेण भोक्तृत्वमविशिष्टरूपेण भोक्तृत्वाभावः, अतस्तेन रूपेण ब्रह्मैक्यमुपपद्यत एवेत्युत्तराभिप्रायकमिदं वाक्यमिति वाच्यम्, तथाच 'अन्योत्ति अनश्नन्योभिचाकशीती' त्येतावत्युक्तौ लक्षणाध्याहाराभ्यां स्वोत्प्रेक्षितार्थं आपादयितुं शक्येतापि, 'द्वासुपर्णावि' ति वाक्ये जाग्रति नोत्प्रेक्षावकाशः, त्वयापि जीवब्रह्मणोर्द्वावितिनिर्देश इत्युच्यते, अनश्नन्न् इति ब्रह्मण एवानशनमुच्यते, ततश्च पूर्वं ब्रह्मणो भोक्तृत्वाभावात् भोक्त्रभेदो नोपपद्यत इति या शङ्कोत्थिता सा पुनरपि ब्रह्मणोऽनशनाभिधानात् दृढीकृता। किञ्च द्वासुपर्णेत्युपक्रमादुभयोः किञ्चित् प्रतिपादयिष्यत इत्यवगम्यते, एकत्रैव प्रतिपिपादयिषितत्वे द्वावित्युभयनिर्देशवैयर्थ्यात्, अतस्त्वदुक्तार्थः उपक्रमविरुद्धः। किञ्चान्यशब्दः प्रतियोगिपर इत्युक्तम्, ततश्च स एवान्यस्सन् भुङ्क्त इत्युक्ते व्याघातः, स्वस्य स्वस्मादन्यत्वासम्भवात्। बुद्धितादात्म्यापन्नस्वरूपादन्यत्वमुच्यत इति चेत्? पूर्वेणान्यशब्देन तस्यानुपस्थितेः, द्वितीयेन तदन्यत्व

परामर्शायोगात् । प्रथमान्यपदेन बुद्धितादात्म्यविशिष्ट एवोच्यत इति चेत्? एवमपि स एवान्यः सन्निति व्याघात एव । परमार्थतोऽनन्यत्वान्न व्याघात इति चेत्? तर्हि भोक्तृत्ववदभावयोरपि तथैव व्याघाताभावादन्यस्सन्निति व्यर्थम् । एकस्याशनोक्तया इतरानशनस्यार्थसिद्धत्वात् तस्यानशनं न वक्तव्यमिति यदुक्तम्; तन्न, स्वादुपिप्पलमत्तीत्युक्ते इतरस्य स्वाद्वशननिषेधेऽपि नाशनमात्रनिषेधः । किञ्च पिप्पलमत्तीत्युक्ते इतरः फलमत्तीत्यपि स्यात्, ततश्च पिप्पलस्थानीयं निकृष्टं भोग्यमेको भुङ्क्ते, अपरस्तु फलस्थानीयमुत्कृष्टं भोग्यं भुङ्क्त इति प्रतीयेत । अतोऽनश्नन्निति सामान्यनिषेधस्सार्थः । किञ्च उत्तरत्र समाने वृक्ष इत्यत्र 'इति पश्यती' ति प्रकृतविशेषणपरामर्शो-च्छीघ्रप्रतीत्या शब्दोपस्थितानामेव परामर्शस्स्यात्, नत्वार्थिकस्य, विलम्बितप्रतीतिकत्वात्, अत आर्थिकस्याप्यनश्नन्निति पुनरुपादानमुत्तरत्र इतीति परामर्शार्थं युक्तमेव । 'समाने वृक्ष' इत्यत्रापि सङ्गतिरनुपपन्ना, रूपभेदकथनेनैव शङ्कायाः परिहृतत्वात् । ननु बुद्धिगतसुखदुःखादिर्हि स्वरूपं व्याख्यास्यते, तदेव च जीवस्य भोक्तृत्वम्, अतः कथं स्वरूपे तदभाव इति शङ्का स्यादेवेति चेत्? एवं मिथ्यात्वेन परिहारपूर्वं रूपद्वयोक्तिर्व्यर्था, ब्रह्मणोऽपि भोक्तृत्वप्रसङ्गश्च । अनीशयेति ज्ञानपरत्वमुक्तम्, तन्न, लक्षणाप्रसङ्गात्; नच मुक्तौ शोकप्रसङ्गः, भगवत्प्रसादे न तद्धेतुकर्मनिवृत्तेः । जुष्टमितीश्वर-विशेषणमेव, न स्वविशेषणम्, स्वोपस्थापकपदाध्याहारप्रसङ्गात्; कार्यकारण सङ्घातैरित्यध्याहारप्रसङ्गाच्च । उक्ताध्याहारप्रसङ्गादेव 'स्वात्मानमीशं सन्तं पश्यती'त्यनुपपन्नम् । इतीति नतिङन्तं पदम्, गुणाभावात्; किन्तु निपात एव, मोहाच्छोकप्राप्तेः पूर्वमुक्तत्वेन ज्ञानाच्छोकनिवृत्तेरेव वक्तुमुचितत्वात् । भवतिपदान्वयस्य शब्दानुशासनानुमतत्वं प्रागेवोक्तम् । तिङ्त्वेप्यनुपपत्तिः परेषामेव, महिम्नः प्राप्यत्वाभावात् । नच महिमशब्दः स्वरूपपरः, लक्षणाप्रसङ्गात् । नचान्यमहिम्नोऽन्येन प्राप्तुमशक्यता, एतीत्यस्य बुद्ध्यर्थ-त्वात् । अस्तु वा प्राप्त्यर्थता, अथापि न दोषः, महिमपदप्रयोगानुसारेण महिम पदेन तन्महिमसदृशमहिमलक्षणाया न्यायत्वात् । प्रथमश्रुतषष्ठीमुख्यार्थाय महिमपदलक्षणाया युक्तत्वाच्च । 'ब्रह्मवेद ब्रह्मैव भवती' ति वाक्यार्थस्तु ग्रन्थ एव निर्व्यूढः । नच 'तमेव विदित्वातिमृत्युमेती' ति

श्रुतिविरोध , तत्र तच्छन्दस्य पूर्वप्रकृतकारणत्वादिविशिष्टपरामर्शित्वात् , तमेव विद्वानित्यत्र एवमिति विशेषणपरामर्शेन तद्विशेषासम्भवात् । नहि राजानमेव पश्यतीत्युक्ते तद्गतरूपादिकमपि निषिद्धं भवति । तस्मा देवकारो ध्याने विजातीयप्रत्ययाव्यवधानार्थ । 'एकधैवानुद्रष्टव्य' मित्यत्र न स्वरूपैक्यमर्थ , किन्तु प्रकारैकत्वम् , अतस्तेन न त्वदिष्टसिद्धि । ननु तथापि नेष्टसिद्धि , बहुगुणोपासनस्य त्वदिष्टत्वादिति चेत् ? समस्तकल्याणगुणाकर इत्येव सर्वदा द्रष्टव्यम् , न तु जीववत् कदाचित् । अत एव 'समस्तकल्याणगुणात्मकोसावित्य' नात्मपदेन गुणानां स्वाभा विकत्वोक्ति ।

यदुक्तं पारम्यविशेषणात् साम्योक्तिरैक्यपरेति , तदत्यन्तोपहास्यम् , अत्यन्तेति विशेषणान्मोपहासे उत्कर्षसिद्धि तथा भेदघटितसाम्ये पारम्येण विशेषिते उत्कर्ष एव भेदे सिध्येत् । साम्यं सर्वात्मत्वमिति यदुक्तम् , तदतिरथनीय , तस्य तत्राव्युत्पत्ते । न चाय समशब्द सर्वशब्दपर्याय , तथा सति सर्वशब्दपर्यायस्य समशब्दस्य सर्वनामसंज्ञाविधानात् सर्वनाम संज्ञायाश्च 'समासकृत्तद्धिताव्ययसर्वनामाऽसर्वलिङ्गा जातिरेकद्रव्योपनिवे शिनी संज्ञा' इति वार्त्तिकेन एकसंज्ञाधिकारनिवेशात् सर्वनामसंज्ञया गुण वचनसंज्ञाया बाधितत्वात् 'गुणवचनब्राह्मणादिभ्य कर्मणि चे' ति घ्यञो ऽप्राप्ते । अत एव कैयटकारेण ष्यञन्त न भवतीत्युदाहृतम् सर्वत्र मिति । ऐक्यमित्यत्र सर्वनामत्वेपि प्रयोगप्रौढ्यनुसारात् ब्राह्मणादिषु निवेशो भियुक्तैरेव कल्पित । नचेह तथास्ति । पारम्यविशेषणाच्च न सर्वत्वमर्थ , सर्वशब्दो हि सङ्कोचकाभावादनवच्छिन्ने सर्वत्वे वर्तते, 'ऐतदात्म्यमिदं सर्व' मित्यादाविव । तत्र च न तारतम्यावकाश । किञ्च 'भोगमात्र साम्यलिङ्गाच्चे' ति सूत्रकारेण 'परमं साम्य' मित्यत्र साम्यशब्दस्य सादृश्यपरतयाङ्गीकृतत्वात् 'नामरूपाद्विमुक्त' इति संसारदशानुवृत्तदेवमनुष्यादि नामरूपप्रहाणमेव , 'स एकधा भवती' त्यादिना रूपान्तरश्रवणात् ।

कश्चिदाह—'द्वासुपर्णा' विति मन्त्रो जीवस्य भोक्तृत्वं वास्तवं न प्रतिपादयति, किं तर्हि? भोक्तृत्वाभावं प्रतिपादयितुं प्रवृत्तस्सन् का तर्हि भोक्तृत्वानुभवस्य गतिरित्याकाङ्क्षायामौपाधिकत्वान्मिथ्याविषयता गतिरित्यभिप्रेत्य औपाधिकत्वं द्योतयितुं भोक्तृत्वमुपाधिमस्तके निक्षिपति 'पिप्पलं स्वाद्वत्ती' ति, 'अनश्नन्नि' ति तु वस्तुतो निर्विशेषस्य जीवस्याध्यासदशायामपि वास्तवं भोक्तृत्वं प्रतिपाद्यत इति, देहादितादात्म्याच्चैतन्यं भोक्तृ न वस्तुत इतीममर्थं स्फुटीकरोति 'समाने वृक्ष' इत्यनन्तरमन्त्र, समाने वृक्षे देहाख्ये, निमग्नः तादात्म्याध्यासादविविक्ततामापन्नः, पुरुषः, भोक्ता जीवः, मुह्यमानः—शरीरादिगतैरनर्थजातैरात्मानमेव तद्वन्तं मन्यमानस्सन्, अनीशया अनैश्वर्येण, कृशोऽहमन्धोऽहं किम्मे जीवितेनेत्येवं दीनभावेनाध्यासमूलेन, शोचति, यदा तु देहादिभ्योऽनर्थाश्रयेभ्योऽन्यमतएव ईशम्—देहादितादात्म्याध्यासमूलदैन्यानास्पदमात्मानम्, इतिमहिमानम्—अस्य प्रसिद्धप्रकारमहत्त्वञ्च निविधपरिच्छेदराहित्यरूपम्, पश्यति, तदा वीतशोको भवति, नच प्राधान्येन प्रस्तुतस्य पुरुषस्यान्यत्वप्रतियोगित्वसम्भवे अप्राधान्येन प्रकृतशरीरस्य न तत्प्रतियोगित्वकल्पनमिति वाच्यम्, यद्विषयस्य भ्रमस्य शोकनिदानत्वमभिप्रेत्य समाने वृक्षे निमग्नो मुह्यमान इति च विशेषणं कृतम्, तद्विरुद्धदर्शनस्य शोकविगमहेतुत्वमित्याशयेनान्यत्वविशेषणमिति शेषा विशेषणानां साफल्यमुपपादनीयम्, नच समाने वृक्षे निमग्न इति मुह्यमान इति च जीवेश्वराभेदभ्रम उक्त इति वक्तुं शक्यम्, येन जीवादीश्वरस्यान्यत्वं तद्विरुद्धं स्यात्, किन्तु देहतादात्म्याध्यासः तद्धर्माध्यासश्चोक्त इति वक्तुम्, अतोऽर्थानुसारणाप्रधानस्यान्यत्वप्रतियोगित्वं न दोषः, अत एवान्यमीशमित्यस्य स्वात्मानमिति विशेष्याध्याहारोऽपि नदोषः, स्वानैश्वर्यप्रयुक्तशोकस्य पुरुषस्यानैश्वर्यदर्शनेन वीतशोकत्वोपवर्णनविरोधाच्चेति।

उच्यते, गुहाधिकरणन्यायेन एकस्य चेतनत्वेन निश्चितत्वात् द्वितीयोऽपि तत्सजातीयश्चेतन एव भाग्यः, सजातीयमादाय परिग्रह एव

दृष्टान्तत्वारम्भः च, चेतनधर्मैर्गिरिशोऽपगतिश्च । अत्र यद्यप्युपकारकत्वमात्रेण सामित्वमुच्यते, न तु मुख्यं साम्यमस्ति, जीवस्येदानीं परमात्मनि साम्या सम्भवात्, तथापि तादृशप्रवृत्तिनिमित्तयोग्यधर्मपरिग्रह एव कारणः । समानशब्दश्च तत्रैव कारणं, जीवपरयोरीश्वर प्रत्यपि शरीरत्वात् । तत्तु नित्य शरीरसम्बन्धेऽप्यनहतसाम्यमिति प्रतिपादनाय । अशनानशनयोरुपपत्तिश्च जीवेशयोरेव, अन्यत्र करणस्थानप्रसङ्गाभावात् ; तत्र तदुपपादयता गौणत्व श्रवणयोरपीति स एव दारः । 'समाने वृक्षे परिषस्वजाते' 'समाने वृक्षे पुरुषो निमग्नः' इति प्रत्यभिज्ञयैकार्थ्यप्रतीतेः, तस्य च वक्ष्यमाणरीत्या जीवेश्वरपरत्वात्तत्परत्वमेव युक्तम् । 'स्थित्यदनाभ्यां चे' ति सूत्रविरोधश्च । तथाहि— स्थित्यदनाभ्यां चेत्यत्र भेदव्यपदेशादित्यनुवर्त्यते, तथाच स्थित्यदनाभ्यां जीवेश्वरयोर्भेदव्यपदेशात् प्राणभृद्द्युभ्वाद्यायतनम्, अनश्नतो दीप्यमानात् नेयत्तोऽश्यादन्यत्वेन प्राणभृतो व्यपदेशात् । तस्मादस्य मन्त्रस्य जीवेश परत्वं सूत्रादवगम्यते ।

यत्तु जीवस्यानुभवसिद्धात् कर्तृत्वभोक्तृत्वादिविकारशालिनो रूपादन्य दसङ्गोदासीनचिन्मात्रस्वरूपमस्तीत्यत्र किं प्रमाणमित्याशङ्कायामाह 'स्थित्य दनाभ्यां चे' ति, स्थिति - अनश्नन्नित्यौदासीन्येन स्थितिः, अदनम् कर्म फलादनम्, आभ्यां कर्मफलभुक्स्वरूपादन्यस्य असङ्गोदासीनचैतन्यमात्रस्वरू पस्य सिद्धिरित्यर्थ इति, तन्न, सूत्रस्यैवमर्थपरत्वे स्थितेरित्येव वक्तव्यत्वेना दनग्रहणवैयर्थ्यात् । स्थित्यदनाभ्यां भेदव्यपदेशादित्यन्वये तु परस्परवैधर्म्यस्य परस्परभेदहेतुत्वेन द्वयमप्यर्थवत् । अतोऽनेन सूत्रेणास्य मन्त्रस्य जीवेश्वर परतया वर्णनात्तद्विरुद्धं बुद्धिजीवपरत्ववर्णनम् । पैङ्गिश्रुतिविरुद्धं च । अनश्न- न्निति हेयनिषेधपूर्वकं प्रकाशमानतया अभिधानात् तस्या उपादेयत्वं प्रती यते, तच्चाभिपश्यति च इति ज्ञातृत्वेनोपपादिता, यदि मन्त्रे भोगमिथ्यात्वे तात्पर्यं स्यात्, तदा ज्ञातृत्वस्यापि मिथ्यात्वादनुपादेयत्वं स्यात् । किञ्च अभिपश्यतीति अभिव्यक्तकल्याणगुणोपलक्षणतया सार्वज्ञ्येन प्रकाशोपपादनात् अनश्नन्नितीश्वरपरमेवेति प्रतीयते । न हि बाधकं विनोपसर्गस्य वैयर्थ्यं

युक्तम्, येन स्वप्न पश्यतीत्यत्र करणेतृतीयेति ह्युक्तम् । नहि कर्तुरन्त करणस्यात्मनि स्वगतकर्तृत्वाध्यासहेतुतया औपचारिककरणत्वव्यपदेशभाज करणेतृतीया युज्यते, सुब्विभक्तौ लक्षणाया अतिजघन्यत्वात् । स्वप्नेत करणतृत्यभावपक्षे न जघन्यमपि करणत्वम् । उपबृंहणविरोधश्च – 'सुपर्णा वेतौ सदृशौ सखायौ यदृच्छयास्मिन् कृतनीडौ च वृक्षे । एकस्तयो खादति पिप्पलान्नमन्यो निरन्नोपि बलेन भूयान् ॥ आत्मानमन्य च स वेद विद्वानपिप्पलादो न तु पिप्पलाद ।' इति भागवतोक्ते । 'समाने वृक्ष' इत्यत्र जीवेश्वरानुक्त्या जीवमात्रस्योक्तौ समानपदवैयर्थ्यम्, स्वात्मानमित्यध्याहार, अन्यत्वेनेश्वरत्वेनच पश्यतीति योजनास्वारस्य स्वयमेव सुगमम् । अनीशया – दैन्येन शोचतीतिह्युक्तम्, न तु दैन्यज्ञानेन, अतो दैन्यस्यैव शोकहेतुत्वेनोक्तेरशोकनिवृत्तौ तदभाव एव हेतुतया वाच्य, न तु तज्ज्ञानम्, ज्ञानस्य हेतुत्वोक्तेर्मोहाभावानुक्तेश्च । उत्तरखण्डस्य पूर्ववाक्योक्तविशेषणव्यतिरेकपरत्वाभावेन वृक्षशब्दस्यान्यत्वप्रतियोगिपरत्वमनुपपन्नम् । किञ्चानीशयेति दैन्येनेत्युक्तम्, अत दैन्यस्यैव शोकरूपत्वादित्थम्भावे तृतीया वाच्या, साच करणार्थत्वे सम्भवत्ययुक्ता । अनीशयेति प्रकृत्युक्तौ करणत्वमुपपन्नमेव । नच विशेष्यालाभ, 'मम मायामोहित जगदि' त्यादिना मोहहेतुत्वेन प्रकृते प्रसिद्धतया स्त्रीलिङ्गेन च प्रकृतेरेव झगिति बुद्धौ विपरिवृत्ते । 'आग्नेय्याग्नीध्रमुपतिष्ठते ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इत्यादावभिधानरूपोपस्थानहेतुतया सुप्रसिद्धत्वात् स्त्रीलिङ्गेन च ऋगेव हि बुद्धौ विपरिवर्तते । किञ्च – अनीशाशब्द ईशा न भवतीत्यनीशेति प्रकृतिपरोवा स्यान्नियन्तृत्वाभावपरस्स शक्तिपरो वा स्यात्, अतो जनुरनीशोऽयमितिवत् । किञ्च – स्वात्मान यदा पश्यतीत्युक्तौ स्वस्य महिमानमिति स्यान्नत्वस्येति । किञ्च – अस्ये त्यव्यवहितेशपरामर्शसम्भवेन्यपरामर्शो न युक्त । इतिशब्दश्चेशशब्दोपस्थापित जगन्नियमनतदुपयोगिमहिमपरत्व एव स्वरस । प्रकृतत्व विना प्रसिद्धमात्र ग्रहणे तु तन्महिमानमिति स्यात् ।

यत्तु स्वानैश्वर्ययुक्तयोस्त्याश्चैश्वर्याज्ञानाभिवृत्त्युपपत्तिरिति, तन्न, तथोपासनप्रीतेश्वरानुग्रहान्निवृत्त्युपपत्ते । तापार्तो जन्दायिन स्मरेदित्याद्यपि हि

दृश्यते। प्रकृतेरनीशयेत्यस्तत्त्वज्ञेन करणत्वेन च निर्देश ईश्वरप्रेरिताया जीव मोहहेतुत्वद्योतनार्थम्। तच्चेश्वरनिवर्त्यत्वसम्भवार्थम्। अत एव तन्निवर्त्तन सामर्थ्यप्रदर्शनार्थमीशमित्युपास्यनिर्देशः। ननु व्यावहारिको जीवब्रह्मभेदः, तयोरेवाशनानशने च विवक्षिते इति चेन्न;— द्वैतविषयतयाभिमते प्रकरणे व्यावहारिकभेदप्रतिपादनासम्भवात्। किञ्च - बिम्बप्रतिबिम्बपक्षे व्यवस्थयोरनुपपत्तिः प्रागेवोक्ता। उपाधिव्यापकस्य प्रतिबिम्बानुपपत्तिश्चोक्ता। शरीर व्यापकस्य तदन्तर्गतोपाधिव्यापकत्वमवर्जनीयमेव। घटाकाशवत् सोपाधिकभेदपक्षे उभयोश्शरीरव्यापकत्वे तदुपाध्योरपि तथात्वात् समानदेशव्याप्तया घटतत्सलिलयोरिव भेदकत्वानुपपत्तिः। जीवस्याव्यापकत्वे सर्वाङ्गीणसुख दुःखानुपलम्भप्रसङ्गः। इतरस्य व्यापकत्व सर्वव्यापकत्वश्रुतिविरुद्धम्। ननु जीव एवाव्यापक, उपाधेर्हृदयावस्थानेपि वृत्तेः प्रसरणशीलतया नोक्तदोष इति चेन्न, - जीवादन्यस्यानुपहितचिन्मात्रत्वे व्यापकोपाध्यवच्छिन्नत्वे च भेदोऽनुपपन्नः। नहि घटाकाशो महाकाशान्मठाकाशाद्वा भिद्यते। अस्तु वा भेद, तथापि यदवयवावच्छेदेन सुखाद्युत्पत्तिस्तदवयवावच्छेदेनेश्वरोपाधेश्च विद्यमानत्वादुभयोरपि सुखदुःखोपभोगो न निवारयितुं शक्य। घटाकाश निष्ठाः पदार्थास्सर्वेपि महाकाशेपि।

पृथगात्मानमित्यत्र यदुक्तम् - आत्मानम् - कार्यकारणसङ्घाताद्विलक्षणम्, प्रेरितार च ईश्वराभिन्नत्वेन ज्ञात्वा तेन ज्ञानेनामृतत्व प्राप्नोतीत्यर्थः, इति, तदसत्, आत्मान प्रेरितार चेति जीवपरमात्मनो पृथक्त्वप्रतियोगितया स्वरसतः प्रतीयमानत्वेनाश्रुतप्रतियोगिकल्पनायोगात्। ननु जुष्टस्सेवित इत्यर्थः, तत्र सेवितुरावश्यकत्वात् स क इत्यपेक्षायां कार्यकारणसङ्घात इहेति लभ्यते, तेनेति वायमुपस्थाप्यते, अतस्तस्य पृथक्त्वप्रतियोगित्वमुचितमिति चेन्न; - 'पृथगात्मानप्रेरितारंचे' ति उभयो- पृथक्त्वप्रतियोगित्वप्रतीतिस्वारस्यभङ्गप्रसङ्गात्। सेवितुरनुपस्थितत्वात् प्रीतिमतः प्रेरयितुरुपस्थितत्वाच्च तेनेति तत्परामर्शस्यैव युक्तत्वात्, सेवनस्य चेतनधर्मत्वाच्च। जुषिधातोस्सेवार्थत्व परित्यज्य प्रीत्यर्थकत्वस्यैव ग्राह्यत्वात्। किञ्च परमते

क्वचिद्विरोधिधर्मम्, क्वचित्तु भेदाक्षेपक सम्बन्धविशेषम् । यथा "क्रियागुणैरात्मगुणैश्च तेषा सयोगहेतुरपरोपि दृष्ट ।" 'जुष्ट यदापश्यत्यन्यमीशम्' 'पृथगात्मान प्रेरितार च मत्वा' 'द्वा सुपर्णा सयुजा सखाया समान वृक्ष परिषस्वजाते । तयोरन्य पिप्पल स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति' 'तस्माद्वा एतस्माद्विज्ञान मयात् । अन्योन्तर आत्मानन्दमय' 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध' । 'उत्तम पुरुषस्त्वन्य परमात्मेत्युदाहृत' । 'अन्यश्च राजन् स परस्तथान्य पञ्च विंशक' इत्यादिभिर्जीवपरयोर्भेद स्वशब्देनोच्यते । तथा 'यस्सर्वज्ञस्सर्ववित्' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभा विकी ज्ञानबलक्रिया च' 'स कारण करणाधिपाधिप' 'तमीश्वराणा परम महेश्वर तन्दैवताना परम च दैवतम् । पतिं पतीना परमम्' 'दाराभूतास्स्वतस्सर्वेह्यात्मान परमात्मन' 'आत्मदास्य हरेस्स्वाम्य स्वभावञ्च सदास्मर' इत्यादिभिर्विरो धिनो धर्मा । 'एपत आत्मान्तर्हृदये' 'एवमयमन्तरात्मन्' 'पुरुषो मनोमय' । 'य आत्मनि तिष्ठन् यस्यात्माशरीर' मित्यादिभि, 'पतिं पतीनामि' त्यादिभिश्च पूर्वोक्तैर्भेदाक्षे पक सम्बन्ध । मुक्तिदशायामपि विशेषतो भेद श्रूयते -

---

तत इत्यस्य वैयर्थ्यञ्च । अतोऽयमर्थ । आत्मान प्रेरितार चेशोदित स्वभावादिना पृथङ्मत्वा तत तस्मादेव, पृथक्त्वज्ञानात्, तेन प्रेरयित्रा जुष्ट, प्रीत्या परिगृहीत, अमृतत्वमेतीति । अत्र तत इति पदाभावे ज्ञानस्य प्रीतिहेतुत्व न प्रतीयेत, क्त्वाप्रत्ययस्यामृतत्वमेतीति समानकर्तृकक्रियैव सम्बन्धात् ।

ननु भेदश्रुतिस्सर्वापि व्यावहारिकभेदपरेत्यत्राह मुक्तिदशाया मिति ।

अत्र नवीन.—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणे' त्यत्र न तावत् सहश्रुतिर्ब्रह्मणा सहत्वं दर्शयन्ती भेदं दर्शयति, ब्रह्मणा सहत्वायोगात्, सहत्वं हि ब्रह्मण. पुत्रेण सहागत. पितेत्यनेन प्रधानक्रियानुकूलतज्जातीय-क्रियाकर्तृत्वेन, क्रिया पत्रथाइवानुज्ञामानेन । नाद्य, ब्रह्मणोऽपि भोगप्रसङ्गात् । न द्वितीय., ईश्वरस्य प्राणिमात्रभोगेनुज्ञादातृत्वान्मुक्तौ तस्य विशिष्य निर्देशवैयर्थ्यात्, ब्रह्मणस्सहत्वे भृत्येन सह भुङ्क्ते राजेत्यत्र भृत्यस्येवाप्राधान्यमावश्यकमिति तस्य सर्वशेषित्वमपि भज्येत । नच गर्भदासन्यायेन शेषस्यापि प्राधान्यम्, स्वामिनि भाविभृत्योपकारवदीश्वरे आप्तकामे मुक्तकृतोपकाराभावात् । तस्माद् ब्रह्मणा सहत्वायोगात्र सहयोगे तृतीया । नापि 'सर्वान्कामानि' ति सर्वशब्दबहुवचनाभ्यां मुक्तावनात्मभेदसिद्धि, तयोरल्पत्वनिवृत्तिमात्रपरत्वात्; त्वन्मतेपि सर्वशब्दस्यासङ्कुचितवृत्तेरसम्भवात् जगत्सर्जनलक्ष्मीविहारादिकामानां जीवेषु बाधितत्वात् । पृथक् जनानां तत्र तत्र क्रमेण सर्वै काम्यैरमरवधूपरिरम्भणादिभिरभिव्यङ्ग्य यत्सुखं ब्रह्मात्मकं तदभिप्रायेण सर्वान् कामानिति । तृतीयाचेत्थम्भावे, ब्रह्मस्वरूपेण मुक्त सह युगपत्परमानन्दमनुभवतीत्यर्थ । तथाच स्मृति—'सोऽश्नुते सकलान् कामानक्रमेण सुरर्षभा. । विदितब्रह्मरूपेण जीवन्मुक्तो न संशय ॥' इति । 'सर्वेष्वि' त्यादिभूमप्रकरणस्थ वाक्यं निर्गुणविद्यास्तुतिपरमिति न भेदे प्रमाणम् । सर्वज्ञतापरं वा, गत्यर्थस्य ज्ञानार्थत्वात् । 'अथ यदल्पं भिन्नं तन्मर्त्यं' मिति तद्भेदस्य तत्रैव निन्दितत्वादिति ।

उच्यते । जीवाभेदेन निखिलहेयास्पदत्वं तादृशभोगाश्रयत्वं च ब्रह्मणोऽङ्गीकुर्वतापि अखिलहेयप्रत्यनीककल्याणैकतानाप्राकृतदिव्यभोगे तत्तृप्त्याऽऽपादने कथं जिह्रेषि । प्रतिबिम्बपक्षे व्यवस्था दूरतो निरस्ता । औपाधिकपक्षे ईश्वरे तृप्तिसम्भवेपि न ब्रह्मणि मुक्तप्राप्ये सच्चिदानन्दैकरसे निरुपाधिके घटाकाशान्महाकाशस्येव जीवात् भेदाभावेन व्यवस्थासम्भव । अतृप्तेर्भोगस्यापि मिथ्यात्वात् ब्रह्मणि तदभावोक्तौ जीवेपि तथैव स्यात् । नहि जीवे तौ परमार्थौ । धर्मिसमसत्त्वादिडिम्भप्रलोभनानि विदुषां पुरतो न प्रभवन्ति । अन्तःकरणस्य धर्मित्वे तस्यैव बन्धमोक्षयो प्रसङ्गात् । आत्मनो धर्मित्वे भोगस्य धर्मिसमसत्त्वाभावेन ज्ञावपि मायाभावप्रसङ्गात् । तस्माद्यादृशस्य

सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता।' 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' 'इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः।' इत्यादिभिः। एवंच

---

भोगस्य हेयत्वं तादृशभोगस्य ब्रह्मण्यवर्जनीयतया जीववदेव भोगाभावो ब्रह्मणि दुर्वचः। सिद्धान्ते तु तृप्तिः—पूर्त्तिः, अवाप्तसमस्तकामत्वम्, तच्चोभयविभूतियोगएव। अकामनान्तु 'सोकामत' इत्यादिश्रुतिर्निरुणद्धीति न सा तृप्तिः। अतृप्तिरभिलषिताभावजन्यं दुःखं वा। नच ब्रह्मण उपसर्जनत्वप्रसङ्गः, भोग्यसाहित्यस्य विवक्षितत्वात्। गुणानामावश्यकत्वद्योतनार्थं प्राधान्येन निर्देशात्। सहशब्दस्य यौगपद्यार्थत्वमनुपपन्नम्, तदानीं तस्य बाधितत्वात्। बहुत्वे सत्येव हि यौगपद्यसम्भवः। सहयोगे जाग्रति नेत्थम्भावे तृतीया। सर्वशब्दबहुवचनाभ्यामपि भेदस्सिध्यति। सर्वशब्दबहुवचनयोरनन्वयादेव न त्वदुक्तपरिहारसम्भवः। किञ्च—कामानिति काम्यमानत्वं च नानन्दाभिव्यक्तिमात्रस्य, घटाज्ञानस्यापि स्वतः काम्यत्वप्रसङ्गात्; किन्तु प्राप्ताप्राप्तविवेकेन सुखरूपवृत्तेरेव वा तद्विशिष्टानन्दस्य वा काम्यमानता स्यात्, ततश्च मुक्तौ वृत्तिप्रसङ्गे संसारस्तदवस्थः। सुखरूपवृत्तावानन्दाभिव्यक्तिर्भवति, घटाकारवृत्तौ चैतन्याभिव्यक्तिमात्रम्; अत आनन्दाभिव्यक्तेरेव काम्यमानता; नचाद्वैतहानिः, स्वरूपभेदानङ्गीकारादित्यादिव्याहतभाषणानां व्याहतिरेवोत्तरम्। सिद्धान्ते तु सर्वान्कामानिति भगवद्गुणा गृह्यन्ते, ब्रह्मणेति समभिव्याहारात्; समस्तवस्तुपरिग्रहेपि न दोषः, कृत्स्नस्यापि वस्तुजातस्य तदीयतया मुक्तभोग्यत्वात्। सर्वत्वश्रुतिरल्पत्वनिवृत्त्यर्थेत्यपि न, लक्षणाप्रसङ्गात्। किञ्च—वैषयिकसुखे सुखरूपवृत्तेरपि काम्यमानत्वात्तस्येहा लाभादल्पमेवेह प्राप्यते। किञ्च लोके यदेवाल्पत्वकाष्ठाभूतं सुखं तत्र यत् स्वरूपमभिव्यज्यते तदेवात्रेति प्रभूतवैषयिकसुखान्मोक्षसुखमत्यल्पमेव स्यात्। प्रभूतसुखाभिव्यक्तस्वरूपमपीहेति चेत्? स्वरूपतारतम्यासम्भवेनाल्पसुखात् प्रभूतसुखस्य काम्यत्वं सुखस्याल्पत्वेपि सुखरूपवृत्तेरुत्कर्षादेवेति तदभावान्मुक्तौ पुरुषार्थोऽल्पत्वकाष्ठैव स्यादिति।

यातहँस्यश्रुतेर्गतिरित्यत्राह एवञ्चेति। तत्समर्श्ञाति सामानाधिकरण्यम्,

प्रत्यक्षाद्यविरुद्धतत्त्वस्थितौ श्रुतिशतसिद्धायां सर्वत्र जीवेश्वर सामानाधिकरण्यमैक्यनिर्देशश्च स्वस्वामिभावबन्धादिभिरुपचारतोपि निर्वोढव्यम् । तथाच श्रुतिशैली – 'सराष्ट्रं नाभवत् स राष्ट्रमभवत् स इदं भविष्यती' त्यादि । श्रुतवेदान्तस्य तु शब्दशक्तिनिष्कर्षे सत्यपर्यवसानात् विशिष्टैक्यादिविवक्षया च तयोरुपपत्तिः । एवमनभ्युपगमे चेतनवदचेतने प्यैक्यव्यपदेशबाहुल्यात् अचेतनतादात्म्यमपीश्वरस्य दुर्वारम् , विरुद्धधर्माध्यासादेरनादरमात्रेण वाङ्मात्रेण वा परिहर्तु मशक्यत्वात् । चेतनस्यापरमार्थत्वाद्बाधार्थं तत्र सामानाधिकरण्यमिति चेन्न;- जीवेपि प्रसङ्गात् । उपास्तिप्राप्तिदशयोरप्यैक्यव्यपदेशाज्जीवैक्यं परमार्थभूतमिति चेन्न; - आरोपेणाप्युपासनस्य सगुणब्रह्मोपासनादिषु भवद्भिरेव स्वीकारात् ।

---

एकमेवाद्वितीयमित्यैक्यनिर्देशः । तथाचे ति । उपचारवृत्तेरस्वरसत्वेपि श्रुतिशैल्यनुसारित्वादियमेव स्वरसेति भावः । श्रुते ति । अपर्यवसानात् सामानाधिकरण्य समस्तचिदचिद्विशिष्टब्रह्मैक्यविवक्षया ऐक्यनिर्देश इत्यर्थः । अनादरस्सत्यत्वानङ्गीकारः, वाङ्मात्रम् – विरोध एव धर्माणां नास्तीति प्रत्यक्षादिविरुद्धोक्तिः । उपास्ती ति । उपास्यत्वेन प्राप्यत्वेन चैक्यव्यपदेशादित्यर्थः । किञ्चाहङ्ग्रहोपासनेन जीवेश्वरैक्यपारमार्थिकत्वं न कस्यापि मते वक्तु शक्यम् , त्वत्पक्षेन्तःकरणैक्यस्य ब्रह्मणि प्रसङ्गात् , मीमांसकमते केवलाहमर्थस्यैव तदुपासनाविषयत्वादीश्वरप्रसङ्गाभावात् , साङ्ख्यवैशेषिकादिपक्षे दृष्टिविधित्वात् , अस्मत्पक्षे ऽहमर्थभूतचेतनशरीरकपरमात्मोपासने परमात्मशरीरत्वविशेषिताहमर्थचेतनोपासनेपि विशेषणविशेष्यभावेन भेदस्यैव सिद्धेरित्याहु

नचाहङ्ग्रहोपासनमात्राज्जीवेश्वरैक्यसिद्धिः, भवत्पक्षेऽहमर्थभूतान्तःकरणेन ब्रह्मण ऐक्यप्रसङ्गात् । केवलाहमर्थोपासनदशायान्तदीश्वरत्वप्रसङ्गस्याभावात् । ईश्वरदृष्टिविधौ तु जीवेश्वरभेदस्यैव पारमार्थिकत्वम् । यथात्मनि गरुडदृष्टौ गरुडात्मनोर्भेदस्य । अन्यथा दृष्टिविधेः सत्योपासनविधेश्च वैषम्यासिद्धिप्रसङ्गात् । वामदेवेन्द्रादिवदहमर्थविशिष्टतदन्तर्यामिनिर्देशेपि विशेषणविशेष्यभावादिना भेदसिद्धेः । एवमेव परमात्मशरीरत्वविशेषितप्रत्यगात्मोपासनेपि । तदेवमचेतनेपि चेतनभ्रमवदनीश्वरेष्वपि जीवेष्वीश्वरभ्रमं परित्यज्य तद्वशीकरणहेतुभिस्तत्पारतन्त्र्यानुसन्धानादिभिरात्मानं बन्धान्मोचय, न पुनस्समस्तनिग्रहानुग्रहक्षमसत्यसङ्कल्पेश्वरतादात्म्यमोहमहापराधेन सर्वनिग्रहपात्रमात्मानमन्धे तमसि पातय । भ्रमावैक्यव्यपदेशोपि भवत्पक्षे प्रपञ्चैक्यव्यपदेशवद्वाधेनापि किन्नोपपद्यते । आत्मबाधे कथं मोक्षस्य पुरुषार्थत्वमिति चेत्? धिङ्मूर्ख,अहमर्थबाधे मोक्षस्य पुरुषार्थतां वदन् किमीदृशोक्तौ जिह्रेषि । तत्वावेदकवाक्यप्रतिपन्नं जीवैक्यमिति चेत्? अचिदैक्यमपि हि

---

नचाहङ्ग्रह इत्यादिना । अहमर्थबाध इति । पुरुषार्थप्रतिसम्बन्धिभूताहमर्थबाधेपि पुरुषार्थता वदतः तव तदप्रतिसम्बन्धिभूतात्मबाधे पुरुषार्थतोक्तौ कुतो लज्जेत्यर्थः । अय भाव — इष्यमाणप्रतिसम्बन्धितया निरुपाधीच्छाविषयत्व पुरुषार्थप्रतिसम्बन्धित्वम्, पुनस्य इष्यमाणतेजस्वित्वादिप्रतिसम्बन्धिशरीरेच्छाविषयत्वेपि न तन्निरुपाधि, स्वसम्बन्धस्योपाधित्वादिति नासौ पुरुषार्थप्रतिसम्बन्धि, किन्तु स्वयमेव, तच्च पुरुषार्थप्रतिसम्बन्धित्वमहमर्थस्यैव, मम सुखं भूयात् मम पशुर्भूयादित्यादिरूपेणैव निरुपाधीच्छादर्शनात् । ननु चैतन्यमेव पालि, यथाचाहमर्थस्थूलत्वादिना गौरोऽहं सुखीभूयासमिति सुखप्रतिसम्बन्धितया शरीरस्येच्छाविषयत्वमहमर्थाभेदाध्यासात् तथा पलिचैतन्याभेदाध्यासादहमर्थस्यापीति; न, अयं देवदत्तस्साक्षीति ज्ञानानन्तरमयं सुखीभूयादिति निरुपाधीच्छाप्रसङ्गात् । इत्यन्तरेण पारमार्थ्यं शङ्कते तत्वावेदके ति ।

तेनैव प्रतीयते। अन्यथा तत्र बाधार्थसामानाधिकरण्यस्वीकारेपि दुर्वारः, आरोपितैक्यमात्रेण समन्वयोपपत्तेरौपचारिकोक्तेरपर्यनुयोज्यत्वात्। नदीसमुद्रघटाकाशमहाकाशादिदृष्टान्तेन मुक्तौ भेदनिवृत्तिवचनं च साम्यसहश्रुत्याद्यनुरोधेन कर्मोपाधिकनामरूपादिवैधर्म्यरूपभेदतन्निवृत्तिभ्यामपि चरितार्थम्। जीवेश्वरैक्यश्रुतीनां च निर्वाहक्रम 'अवस्थितेरिति काशकृत्स्नः' इत्यसूत्रयत्। आह च मोक्षधर्मे— "अन्यश्च राजन् स परस्तथान्यः पञ्चविंशकः। तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः॥" इति। इममेवार्थमभिप्रेत्य 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यहङ्ग्रहोपासनमपि सूत्रितम्। नच भेदविषयस्फुटानेकश्रुतिबाधो न्याय्यः। एकवाक्यप्रतिपाद्ये च क्वचिच्चिदचितोरीश्वरतादात्म्ये वैरूप्यकल्पनप्रयासश्च ते निरर्थकः। भिन्नवाक्यप्रतिपन्नेपि सम्भवदेकरूप्यमपरित्याज्यम्। अस्मत्पक्षे तु भेदश्रुतिघटकश्रुतिसत्यत्वाद्यविरुद्धं सर्वत्र विभूतितद्वद्भावेनैकरूपमेव चिदचितोरीश्वरसामानाधिकरण्यम्।

ननु भवतोपि क्वचिद्वैरूप्यमङ्गीकार्यम्, 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिना मुक्तस्य ब्रह्मसामानाधिकरण्ये विभूतितद्वद्भाव

---

समन्वयोपपत्ते रिति। वाक्यार्थबोधोपपत्तेरित्यर्थः। ननु 'यथा नद्यः स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥' 'घटध्वंसे घटाकाशो न भिन्नो नभसो यथा।' इत्यादिदृष्टान्तानुरोधेन मुक्त्यनन्तरं जीवैक्यपारमार्थ्यसिद्धिरिति शङ्कायामाह नदीसमुद्रे ति। किञ्च 'ऐतदात्म्यमिदं सर्वं' 'सर्वं खल्विदं' 'इदं सर्वं यदयमात्मा' 'यत्रत्वस्य सर्वमात्मैवाभू' दित्यादिवाक्येषु जीवांशे अभेदार्थतया चिदंशे बाधार्थतया सामानाधिकरण्यस्य त्वया वाच्यत्वाद्वैरूप्यापत्तिरित्याह एकवाक्ये ति। चिदंशे मुख्यार्थविशेष्यस्वरूपतादा-

विवक्षानुपपत्तेः। प्राप्याकारोहि तत्र निर्दिश्यते। नच विभूतिभावः प्राप्यः, तस्य नित्यसिद्धत्वाभ्युपगमात्। तदाविर्भावविवक्षायां तस्य तत्राशाब्दत्वात्। यदि चेश्वरविभूतित्वं मुक्तस्याङ्गीक्रियते, तदा मुक्तस्य तत्पारतन्त्र्यशेषत्वे अपि स्याताम्। नचायमिष्टप्रसङ्ग इति वाच्यम्, स्वरूपाविर्भावलक्षणस्य मोक्षस्यापि संसारवद्दुःखात्मकत्वप्रसङ्गात्; चेतननिष्ठयोश्शेषत्वपारतन्त्र्ययोः दुःखानुपङ्गव्याप्तेः। तथाच स्मरन्ति– 'सर्वं परवशं दुःखं सर्वमात्मवशं सुख' मिति। निषेधन्ति च पारतन्त्र्यम्, 'सेवा श्ववृत्तिर्व्याख्याता तस्मात्तां परिवर्जये' दिति। श्रुतिश्च मुक्तस्य स्वातन्त्र्यमेव दर्शयति - 'सस्वराड्भवती' ति। सूत्रं च मुक्तविषयम् - 'अत एव चानन्याधिपति' रिति। 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ते' 'सत्यकामस्सत्यसङ्कल्पः' 'सर्वेषु लोकेषु कामचारो भवति' 'कामान्नी कामरूप्यनुसञ्चर' न्नित्येवमादयश्च मुक्तस्य पारतन्त्र्यगन्धं प्रतिरुन्धते। 'सङ्कल्पादेव तच्छ्रुते' रिति च मुक्तस्य विचित्रसृष्टौ हेत्वन्तरनैरपेक्ष्यमसूत्रयत्। नच 'जगद्व्यापारवर्जं' मिति जगद्व्यापारनिषेधात्पारतन्त्र्यमपि सूत्रकारसम्मतमिति वाच्यम्, प्रतिसर्गदशायामीश्वरस्येव स्वतन्त्रस्याप्यनिच्छतो जगद्व्यापारनिवृत्त्युपपत्तेः। अस्तु वा जगद्व्यापारो-

---

त्यभिचिदद्वै निरोधिस्वरूपतादात्म्यमिति तादात्म्यनैरूप्यम्। निषेधन्ती ति। ततश्च हेयत्वात्र पारतन्त्र्यं मुक्तप्राप्यमिति भावः। स्वातन्त्र्यमेवे ति। 'स्वराट् स्वतन्त्रो विज्ञेय' इति दर्शनादिति भावः। सत्यकाम इत्यादि। पारतन्त्र्ये परप्रयुक्तेच्छाविघातसम्भवात् सत्यकामत्वादिकं न स्यादिति भावः। सङ्कल्पादेवे ति। बद्धेषु सर्वव्यापारनिमित्तस्यापीश्वरस्य यच्चिन्मुक्तव्यापारे प्रकर्तृत्व तस्य मुक्ततामयुक्तमेव वाच्यमिति तत्पारतन्त्र्यासिद्धिरिति भावः। नचे ति। ईश्वरपारतन्त्र्यात्तदननुमतिप्रयुक्त जगद्व्यापारवर्जनमिति भावः।

चितस्वातन्त्र्यविरहः, तथापि स्वप्रवृत्त्यादिषु न पराधीनत्वसिद्धिः। अल्पशक्तिरधिकशक्त्यपेक्षया परतन्त्र एवेति चेन्न;- भिन्नविषयत्वे तत्प्रसङ्गाभावात्। एकविषयत्वे प्यविरोधे परस्परसहकारित्व मात्रेण परस्परं पारतन्त्र्यस्य परस्परं स्वातन्त्र्यस्य वा प्रसङ्गात्। स्वव्यापारांशे नैरपेक्ष्यस्य च द्वयोरपि वक्तुं शक्यत्वात्। नच मुक्तकर्तृकप्रवृत्तिनिष्पत्तावीश्वरः मुक्तनिरपेक्ष इति युक्तम्, स्ववचनविरोधात्। नच मुक्तसङ्कल्पाधीनभोगनिर्माणे मुक्तेश्वरयोः प्रयोज्यप्रयोजकभावः, प्रमाणाभावात्, पूर्वोक्त श्रुत्यादिविरोधाच्च। कारयितृत्वश्रुतेरप्युन्निनीषाधोनिनीषागर्भत्वेन कर्मवश्यमधिकृत्यैव प्रवृत्तेः। आनन्दयितृत्वश्रुतेश्च मोक्षप्रदाना-

---

स्वातन्त्र्यविरहः – शक्तिविरहः। भिन्ने ति। एव च ईश्वरशक्तेर्जगत्सृष्ट्यादौ व्यापारान्मुक्तशक्तेः पित्रादिसृष्टौ व्यापारात् विषयभेदान्न पारतन्त्र्यमिति भावः। मुक्तकर्तृकपित्रादिसृष्टावीश्वरस्य कर्तृत्वमभ्युपेत्याप्याह एके ति। मुक्तस्य पारतन्त्र्यवादिनामीश्वराभिप्रेताविरुद्धकारित्वमवश्य वाच्यम्, एवञ्च परस्परसहकारित्वमात्रं भवति, तावता च यथाच ईश्वरसहकारित्वेन मुक्तस्य ईश्वरं प्रति स्वातन्त्र्य न भवति तथा पारतन्त्र्यमपि न प्रसज्यते, अन्यथा तत एवेश्वरस्यापि मुक्तपारतन्त्र्यप्रसङ्गादित्यर्थः। स्वातन्त्र्यस्यवे ति। वा शब्द-इवार्थः। समुद्रो वा महासत्त्व इति वत्। अप्रसङ्गादिति च्छेदः। परस्पर सहकारित्वेपीश्वरः स्वव्यापारांशे मुक्तनिरपेक्षत्वान्न परतन्त्र इत्यत्राह स्वव्यापारे ति। नन्वीश्वरो मुक्तव्यापारेपि तन्निरपेक्षो न स्वव्यापार एवेत्याशङ्क्य निराकरोति नचे ति। ननु न केवल मुक्तस्येश्वरसहकारित्वम्, किन्तु तत्प्रयोज्यत्वमपि, अतः पारतन्त्र्यमित्याशङ्क्य निराकरोति नचे ति। पूर्वे ति। सत्यकामत्वश्रुत्यादिविरोधादित्यर्थः। ननु 'एषह्येवानन्दयाती' ति श्रुतिरानन्दहेतुपित्रादिसृष्ट्यादिद्वारानन्दहेतुपरेति मुक्तस्य पित्रादिसृष्टावीश्वरप्रयोज्यत्वे प्रमाणमित्यत्राह आनन्दयितृत्वे ति। आदिशब्दो भोग्यत्वादिपरः।

दिना चारितार्थत्वात् । नच निवारणसमर्थेश्वरस्यानिवारणमुपजीव्य मुक्तः प्रवर्तत इति वाच्यम्, विपरिवर्तेऽपि निवर्तकाभावात् । नच प्रागशक्त्या परापेक्षया च पश्चादपि तयोः नियमः, प्राङ्मुक्तत्वाभावेनापवर्गस्यात्यन्तोच्छेदप्रसङ्गात् । प्रागशक्त्यादेश्च कर्मोपाधिकत्वात् । संसारदशायामीश्वरपारतन्त्र्यमपि सांसारिकसुखदुःखैकभोगहेतुतया राजादिपारतन्त्र्यवत् कर्मानुरूपमेव । अतः कर्मनिवृत्तौ तदपि निवर्त्स्यत एवेति स्वतन्त्रो मुक्तः । अतः स्वराड्भवतीत्यत्राकर्मवश्य इति व्याख्यानेऽपि कर्मवश्यत्वाविनाभूतमीश्वरपारतन्त्र्यमपि फलतो निवर्तितं भवति । नच मुक्तस्वातन्त्र्यविषयाणां श्रुतीनां 'पतिंविश्वस्ये' त्यादिश्रुतिबलादनीश्वरविषयतया सङ्कोचः, पतित्वश्रुतीनामेवामुक्तविषयतया सङ्कोचोपपत्तेः । नच द्वयोरपि पृथग्विषयलाभे नियामकाभावात्कस्य सङ्कोच इति नित्यसन्देह इति वाच्यम्, 'स्वराड्भवती' त्येवंरूपस्य व्यपदेशस्य स्वेतरसमस्तवश्यत्व

---

नन्वीश्वरप्रयोज्यत्वाभावेऽप्यधिकशक्तिकस्यानिवारणसमर्थस्यानिवारणमुपजीव्याल्पशक्तिर्मुक्तः प्रवर्तते, अत ईश्वरपारतन्त्र्यं स्यादित्याशङ्क्याह नचेति । विपरिवर्त इति । परमसाम्यश्रुत्या द्वयोस्तुल्यशक्तिकत्वादिति भावः । कर्मेति । कर्मैव प्रयोजकं न जीवत्वमिति भावः । नन्वीश्वरपारतन्त्र्यस्य कर्मोपाधिकत्वेऽपि संसारदशायामीश्वरपारतन्त्र्यं स्वाभाविकमिति न तस्य मुक्तौ निवृत्तिरित्यत आह संसारेति । ईश्वरपारतन्त्र्यं कर्मोपाधिकम्, सुखदुःखहेतुपारतन्त्र्यत्वात्, राजादिपारतन्त्र्यवदिति प्रयोगः । पक्षे च जीवगतत्व विशेषणम्, तेनाचेतनगते नाशतो बाधः । तत्रानैकान्त्यवारणार्थं सुखदुःखहेत्विति । एवंरूपस्येति । स्वराट् — स्वतन्त्रः । स्व — तन्त्रम् — प्रयोजकं यस्य स स्वतन्त्रः । ननु स्वः स्वस्य प्रयोजको भवतीत्येतदभूतव्यपदेशाद-

निवृत्तावेव तात्पर्योपलम्भात् । यदि तु न कस्य चिद्वश्यो मुक्त इत्येवमादिव्यपदेशस्स्यात्तदा स्यादेव सन्देहः । नच तथास्ति । अतएव सूत्रकारोपि अनन्याधिपतिरिति शब्दं प्रायुङ्क्त, न त्वधिपतिरहित इति । अत्र 'ब्रह्मवेद ब्रह्मैव भवती' त्येवमादयश्च मुख्यार्थत्यागमसहमाना भवत्पक्षेण परमसाम्यश्रुतयोवा निस्संकोचत्वमभिलपन्त्यः सहकारिण्यो भवेयुः । आदिभरत मृगत्वप्राप्तिवत् कृशोदरनीडनिहितस्य कीटस्य कृशोदरीत्ववच्च ब्रह्मोपासकस्य ब्रह्मतापत्तिश्च युक्ता । नचास्य मुख्यब्रह्मत्वे 'यतो वा इमानी' त्यादिलक्षणस्याव्याप्तिः, तस्य जगद्व्यापारजागरूकजिज्ञास्यव्यक्तिविशेषविषयतया विरोधाभावात् । कारणब्रह्मविषयैका द्वितीयादिशब्दोपि विभक्तनामरूपकार्यबहुत्वाभावाधिष्ठात्रन्तरनैरपेक्ष्यादिकमेव दर्शयतीति भवद्भिरेव व्याख्यातम् । अन्यथा नित्यसूरिपरिग्रहाद्ययोगात् । नच समनिषेधश्रुतिबलात् परमसाम्य श्रुतेस्संकोचः, पारम्यविशेषणविरोधप्रसङ्गात् । नच भोगमात्र

---

सङ्कोचेन स्वेतरसमस्तवश्यत्वनिवृत्तिरवगम्यत इत्यर्थः । यदि त्विति । कस्य चिदिति । सामान्यशब्दस्यानीश्वरे विशेषे सङ्कोचसम्भवादिति भावः । अत एवे ति । अनधिपतिरिति वक्तव्ये ऽनन्याधिपतिरिति प्रयोगः अन्यत्वप्रयुक्तता मधिपतित्वाभावस्य द्योतयितुमिति भावः । ननु मुक्तस्य ब्रह्मत्वे 'ब्रह्म वा इदमेक एवाग्र आसी' दित्यादिश्रुतब्रह्मैकत्वविरोध इत्यनाह कारणे ति । नित्ये ति । नित्यमुक्तानां ब्रह्मधर्मभूतानन्दस्य तद्विग्रहादेश्चायोगादित्यर्थः । पारम्ये ति । परमसाम्यश्रुतेः कतिपयाकारसाम्यविषयतया सङ्कोचे पारम्यविशेषणस्य बाध एव । 'न तत्समश्चे' त्यत्र समशब्दस्य संसारिविषयतया सङ्कोचमात्रम् । किञ्च समो न दृश्यत इति समदर्शननिषेधात् दर्शनयोग्येषु संसारिषु समाभाव सिस्यतीति भावः । ननु 'परमं साम्य' मित्यत्र साम्यशब्दस्य भोगसाम्य विषयतया सङ्कोचः, पारम्यञ्च तस्य विशेषणम्, तच्चाङ्गीकृतमेवेति न कस्यापि बाध इत्याशङ्क्य निराकरोति नचे ति । ननु स्वातन्त्र्याङ्गीकारेपि

साम्यपारम्याचरितार्थता, स्वतन्त्रपरतन्त्रयोर्भोगसाम्यासम्भवेन स्वातन्त्र्यसाम्यस्यापि नान्तरीयकत्वात् । अनिच्छया जगद्व्यापारविरहरूपवैषम्यन्तु न भोगवैषम्यहेतुः, इच्छाविघातादिप्रसङ्गाभावात्। अतस्सिद्धमुक्तानामीश्वराद्भेदे सत्यपि तदपेक्षया पारतन्त्र्यासम्भवादैक्ये साम्ये वा पारम्यविशेषिते विभूतितद्वद्भावेन मुक्तेश्वरयोस्सामानाधिकरण्यमनुपपन्नमिति ।

अत्रोच्यते- न वय सर्वत्रैकरूप्यमन्विच्छामः, यावद्बाधं तदभ्युपगमात् । अचेतनेश्वरयोः क्षेत्रज्ञेश्वरयोश्च सामानाधिकरण्ये विभूतितद्वद्भावेनैकरूप्यस्य बाधकाभावात्तदभ्युपगच्छामः । ब्रह्मैव भवतीत्यत्र तु फलनिर्देशरूपतया पूर्वसिद्धस्य प्राप्यत्वाभावाच्च विभूतित्वातिरिक्तः कश्चिदर्थस्सामानाधिकरण्यहेतुरित्यास्थेयम्, स च 'परमं साम्यमुपैती' ति श्रुत्यन्तरानुसारेण परमसाम्यापत्तिरूप इति निश्चीयते । अतो गौणोयं प्रयोगः, "वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयती" ति वत् । नहि तत्र पश्वालम्भनमात्राद्विष्णुतादात्म्यमुपपद्यते । एवम्- 'विष्णुक्रमान् क्रमते विष्णुरेव भूत्वेमान् लोकानभिजयती'

---

जगद्व्यापारविरहात् भोगवैषम्य स्यादित्यत्राह अनिच्छये ति । ऐकरूप्यासम्भवमुपसंहरति अत इति । विभूतितद्वद्भावेन सामानाधिकरण्य न भेदमात्रात् सम्भवति, किन्तु पारतन्त्र्यात्, तच्चात्र नास्तीति तथा सामानाधिकरण्यनिर्वाहानुपपत्तेरैक्यमङ्गीकृत्य वा भेदाङ्गीकारे पि परमसाम्येन ब्रह्मत्वप्राप्त्या वा 'सयोहवैतत्पर ब्रह्म वेद ब्रह्मैव भवती' ति सामानाधिकरण्य निर्वाह्यम्, अतस्सर्वत्र विभूतितद्भावेन जीवेश्वरयोरैकरूप्येणैव सामानाधिकरण्यमित्यनुपपन्नमिति सिद्धमित्यर्थः । विशेषित इति । सामानाधिकरण्यनिबन्धने वाच्य इति शेषः । नवयमित्यादि । बाधकाभावेपि त्वया सामानाधिकरण्ये ऐकरूप्य त्यज्यते, अस्माभिस्तु बाधकसद्भावएव त्यज्यत इति वैषम्यमिति भावः ।

त्यादि भाष्यम्। एवकारश्चोपमाद्योतक इत्यपि कैश्चित्पूर्वैर्व्याख्यातम्। 'इवचद्वैत्वमेवे' ति नैरुण्डुकाश्च पठन्ति। अतो गौणतया मुख्यतया वा ब्रह्मसाम्यमेवात्र प्रयोगे विवक्षितम्। अस्तु वा ब्रह्मविभूतित्वमेवात्रापि सामानाधिकरण्यहेतुः, तथापि तदाविर्भावविवक्षया प्राप्यत्वोपपत्तिः। यत्त्रोक्तं - शाब्दत्वाभावादिति; तत्स्वपक्षमपरामृश्योच्यते, भवत्पक्षेपि हि नित्यं ब्रह्मभूतस्य को नामापूर्वब्रह्मभावः। आरोपिताकारनिवृत्तिर्वा ब्रह्मस्वरूपत्वप्रकाशो वेति चेत्? न तर्हि तत्रैवशाब्दत्वम्, साक्षाद्ब्रह्मभावस्य नित्यसिद्धत्वेन साध्यत्वायोगात्। अशाब्दोपि साध्यः कश्चिदर्थो विवक्षित इति कल्प्यत इति चेत्? हन्त तर्ह्यस्मदुक्ते कः प्रद्वेषः। नूनं प्रमाणोपपत्तिशतविरोधमप्यनादृत्य नित्यनिर्दोषस्य ब्रह्मण एवाज्ञत्वसंसारित्वादिकमङ्गीक्रियत इत्ययमेव भवतो लाभः। अस्मदुक्तार्थे तु 'पतिं विश्वस्य' 'करणाधिपाधिपः' 'यस्यात्मा शरीरं' 'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मन' इति श्रुतिस्मृत्यादिकमप्यनुग्राहकं भवति।

यदुक्तं पारतन्त्र्यशेषत्वयोरपुरुषार्थान्वितत्वमिति; तत्र किन्ताभ्यां तदपि साध्यते, उत तदभ्युपगमे तत्प्रसङ्गमुखेन तद्विपर्ययेण तद्विपर्यय इति? तत्र न तावत्तत्साधनम्, कालात्ययापदिष्टत्वात्। तथाहि—मुक्तोपि कदाचिद्दुःखी, चेतनत्वे सति परतन्त्रत्वात्, शेषत्वाद्वा, सम्प्रतिपन्नवत्; मुक्तगतं पारतन्त्र्यं शेषत्वं वा स्वाश्रयस्य कदाचिद्दुःखावहम्, चेतनगतपारतन्त्र्यादिरूपत्वात्, सम्प्रतिपन्नवत्; ईश्वरो मुक्तानामपि इच्छाविघातानिष्टापादनादिभिः कदाचिद्दुःखहेतुः, तदपेक्षया

तथापी ति। भवतिशब्दे आविर्भावो विवक्षितः। ब्रह्मविभूतिस्सद्याविर्भवती-

तदानीमपि स्वातन्त्र्यादियोगित्वात्, यो यच्चेतनापेक्षया उक्तसाधनः स तद्दुःखहेतुः, यथा सम्मतिपन्नः, इत्यादिर्हि तत्र प्रयोगस्स्यात्। तत्र तावत् सर्वत्र मुक्तस्य दुःखरहितनिरतिशयानन्दविधायकैः 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' 'रसँ ह्येवायं लब्ध्वानन्दी भवती' त्यादिभिः श्रुतिशतैर्बाधस्सुगमः। उपाधिश्च—कर्मवश्यत्वं दुष्कर्ममूलत्वं दुष्कर्मजनिताप्रीत्यादिदुःखकारणयोगित्वमित्यादिरूह्यः।

किञ्च मुक्तः कदाचिद्दुःखीत्यत्र प्राच्यदुःखित्वेन सिद्धसाधनम्, मुक्तिदशायां दुःखवानिति साध्ये दृष्टान्तस्य साध्यविकलता, एवं पारतन्त्र्यपक्षीकारेण प्रयोगेपि तस्य यावदात्मभाविन एकत्वात् प्राचीनदुःखहेतुत्वेन सिद्धसाधनता, मुक्तिदशायां दुःखावहमिति साध्ये पूर्ववत्साध्यवैकल्यम्, एवमीश्वरो मुक्तानां दुःखहेतुरिति साध्येपि प्राचीनदुःखहेतुत्वेन सिद्धसाधनत्वम्, मुक्तिदशायां दुःखहेतुरिति साध्ये साध्यवैकल्यञ्च सिद्धम्।

---

त्यनेन विभूतित्वाविभार्थसिद्धिरिति भावः। उपाधिरि ति। शेषत्वपारतन्त्र्यपक्षके दुष्कर्ममूलत्व पारतन्त्र्यत्वशेषत्वत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकमुपाधिः, ईश्वरपक्षके दुष्कर्मजनिताप्रीत्यादिकमुपाधिः, दुःखप्रयोजककर्तृत्व दुःखहेतुत्व मिह विवक्षितम्, अतो न कालादौ साध्यव्यापकत्वम्। मुक्तपक्षके दुःख कारणयोगित्व तदसाधारणकारणयोगित्वम्, तच्च दुष्कर्मेति न साधनव्यापकता। आदिशब्देनास्वाभाविकत्वादि गृह्यते। ननु मुक्तिदशागतपारतन्त्र्य पक्षीकरणान्न सिद्धसाधनमित्यत आह तस्ये ति। ननु पारतन्त्र्य मुक्तिकाले दुःखावहम्, तत्कालीनपारतन्त्र्यत्वात्, यत्कालीनपारतन्त्र्य यत् तत् तत्कालीन दुःखहेतुरिति सामान्यव्याप्तिबलात् पक्षधर्मतासहकृतान्मुक्तिकाले दुःखहेतुत्व

ननु यत्काले पारतन्त्र्य तत्काले दु सहेतुत्व व्याप्तमिति मुक्तिकालवर्तिनोपि पारतन्त्र्यस्य सामान्यव्याप्तिबलादेव पक्षधर्मतासहकृतात्तत्कालवर्तिदु सहेतुत्व सिध्यति, अतो न वैकल्य सिद्धसाधनत्वचेति ; तदपि मन्दम् , किं यत्काले पारतन्त्र्य तत्काले सर्वत्र दु सहेतुत्व व्याप्तिसिद्धम् , उतात्यन्तायोगव्यवच्छेदमात्रम् , उत दु खसम्भावनामात्रमिति ? न प्रथम , व्यभिचारात् ; नहि पतिप्रभृतीना परतन्त्रा भार्यापुत्रदासादय सर्वे सर्वदा ततो दु खिनो दृश्यन्ते, प्रत्युत पारतन्त्र्यमेव परम भूषणमभिमन्यमाना केचित्सद्भृत्यपुत्रादय स्वातन्त्र्यनिर्देशेपि रोषलोहितचक्षुष परिवादाभिमानिनो निमन्यन्ते । अतस्तेषु स्वातन्त्र्यमेवानिष्टतमम् , पारतन्त्र्य त्विष्टतममेव दृश्यते । यदापि च तस्य किञ्चिद्दु सहेतुत्वम् , तदापि तदनुबन्धित्वादेव तद्दु ख सहन्ते । भ्रान्तिमूलन्तदिष्टत्वमिति चेत् ? हन्त स्वातन्त्र्यस्य वान्यस्य वा कस्य चिच्छब्दादेरिष्टत्वमपि भ्रान्तिमूलमेव । सासारिक हि सर्वं भोगजातमन्ततो भ्रान्तिमेव कूटस्थयति । स्वय

---

सिध्यतीति शङ्कते ननु यत्काल इति । यत्काल इति स्थूलोपाधि , सर्वत्रेति तदन्तर्गतलक्षणकाल , अत्यन्तायोगे ति स्थूलोपाध्यवच्छिन्नकालान्तर्गतसूक्ष्मकाले कदाचिद्भाव , सम्भावनामात्र मिति स्वरूपयोग्यता च, विवक्षिता । दु खविरोधिसुखोपलम्भात् तत्काले न दु खमित्याह प्रत्युते ति । स्वातन्त्र्ये ति । इद पारतन्त्र्यस्य सुखहेतुत्वसाधनार्थम् । सुखहेतुपारतन्त्र्यविरोधितया स्वातन्त्र्यस्यानिष्टत्वात् तन्निर्देशोप्यनिष्ट इति भाव । यदपिचे ति । इदमपि सुखहेतुत्वसाधनार्थम् । अतिशयितसुखहेतुत्वात्तदनुबन्धिदु खहेतुत्वमपि सहन्त इति भाव । किं सुखहेतुत्वभ्रमो विवक्षित , उत देहात्मभ्रम ? नाद्य , अबाधादित्यभिप्रेत्य द्वितीय आह हन्ते ति । उपपादयति सासारिकहीति । स्वयमि ति । पतिपारतन्त्र्यादिरदृष्टद्वारा पारतन्त्र्यनिवृत्त्यन तरमाविस्वर्गादीष्टा

दुःखरूपत्वेपि इष्टान्तरप्रतिलम्भकत्वात् पतिपारतन्त्र्यादेरिष्टतमत्वम्, यथा-कृमिचिकित्सादेरिति चेत्? तर्हि स्वातन्त्र्यस्यापि स्वयं सुखत्वाभावेपीष्टान्तरप्रतिलम्भकत्वादेवेष्टतमत्वमपि स्यात्। नियमनमात्रमपि केष्यश्चित्स्वदत एवेति स्वातन्त्र्यस्य स्वतस्सुखत्वमिति चेन्न; तृणाद्युत्क्षेपणादिस्वातन्त्र्यस्य तथाविधसुखत्वादर्शनात्। यत्र तु स्वातन्त्र्यं स्वरूपेण सुखवद्दृश्यते, तत्रापि ख्यात्यादिकमन्तर्भाव्यैव तत्तथा। तच्च क्वचित्पारतन्त्र्येपि समानमिति तस्यापि स्वतस्सुखत्वसिद्धिस्स्यात्। अतो यत्रेष्टसाधनत्वबुद्धिर्गुणत्वाभिमानो वा, तत्स्वातन्त्र्यं पारतन्त्र्यं चेष्टतमम्, यत्रत्वनिष्टसाधनत्वबुद्धिर्दोषत्वाभिमानो वा, तत्र तु तद्वा तदन्यद्वानिष्टतममविशेषाद्दृश्यते। अतः पारतन्त्र्यस्य स्वसत्ताकाले सर्वत्र दुःखहेतुत्वव्याप्तिर्न सिद्ध्यति। नापि द्वितीयः, निर्दोषभृत्यस्य गुणवत्पारतन्त्र्यादिभिर्व्यभिचारात्। तत्र पारतन्त्र्यस्य स्वाभाविकं दुःखहेतुत्वं गुणवत्प्रतिसम्बन्धित्वादिवशादपोद्यत इति चेत्? तर्हि पारतन्त्र्यस्य दुःखहेतुत्वमपि

---

न्तरप्रतिलम्भक इति न पारतन्त्र्यजन्यसुखकाले व्यभिचारः। तर्हीति। ततश्च स्वातन्त्र्यस्यापि दुःखहेतुत्वान्मोक्षदशायां स्वातन्त्र्यसत्त्वे दुःखं स्यादिति भावः। नियमनेति। अतस्सुखहेतुत्वं स्वातन्त्र्यस्य स्वाभाविकम्, पारतन्त्र्यस्य दुःखहेतुत्वं स्वाभाविकमिति भावः। यत्रत्वित्यादि। एवञ्च स्वत इष्टत्वाभावाच्च स्वातन्त्र्यस्य स्वभावतः सुखसाधनत्वम्, स्वतोऽनिष्टत्वाभावाच्च पारतन्त्र्यस्य स्वभावतो दुःखसाधनत्वमिति भावः। अत इति। इष्टपदेन सुखसाधनं ख्यात्यादि विवक्षितम्। यत्रत्विति। अनिष्टसाधनत्वे त्वनानिष्टपदेन दुःखसाधनं भर्त्सनताडनादि गृह्यते। तत्पारतन्त्र्यस्येति। एवं चोक्तोपपादकाभावेन विशेषणाच्च व्यभिचार इति भावः। यद्यपीश्वरपारतन्त्र्यस्य गुणवत्प्रतिसम्बन्धिकत्वाद्धेत्वसिद्धिः, तथापि स्पष्टत्वात्तामुपेक्ष्य दूषणान्तरमाह तर्हीति। गुणवत्पारतन्त्र्ये व्यभिचारदर्शनेन तत्परिहाराय

दुष्टप्रतिसम्बन्धिकत्वादिनैवेति किन्न स्यात् । गुणवत्प्रतिसम्बन्धिकत्वेपि तस्य क्वचिद्दुःखहेतुत्वदर्शनादिति चेत्? तर्हि तस्यापवादकत्वमपि न स्यात् । निर्दोषभूतस्य तदपवादकमेवेति चेन्न; तथापि पारतन्त्र्यस्य सुखहेतुत्वं दुष्टप्रतिसम्बन्धिकत्वादिनापोद्यत इति विपर्यवर्तस्य दुष्परिहरत्वात् । एतदुक्तं भवति, स्वातन्त्र्यं पारतन्त्र्यमिति न कश्चिद्विशेषः सुखदुःखसम्भवे, अपितु भोगादृष्टादिकमेव नियामकमिति । किन्च तत्तद्देहात्माभिमानानुगुण्येन देवतिर्यङ्मनुष्यस्त्रीपुंसादिषु पुरुषार्थव्यवस्थादर्शनादत्रापि स्वतन्त्रात्माभिमानिनां पारतन्त्र्यं दुःखाय, परतन्त्रयथावस्थितात्मदर्शिनां पारतन्त्र्यमेव सुखकारणमिति यथालोकमनुसन्धेयम् । अतः पारतन्त्र्यस्य दुःखात्यन्तायोगव्यवच्छेद उपाधिमूलत्वादुपाधिनिवृत्तौ निवर्तेतैवेति न मुक्ते तत्साधनम् । नच तृतीयः, स्वरूपयोग्यत्वमात्रसाधने सिद्धसाधनात्; सहकारियोग्यत्वस्य संशयस्य वा साधने कालात्ययापदेशात् । नापि प्रसङ्गतद्विपर्ययाभ्यां मुक्तस्य पारतन्त्र्याभावसाधनम्, तत्रापि

---

दुष्टप्रतिसम्बन्धिकत्व कारणतावच्छेदक कल्पयितुमुचितम्, नत्वपवादकल्पनम्, एवञ्चाप्रयोजकत्व परोक्तहेतोरिति भावः । तथापी ति । आदिशब्देन दुष्टगतत्वं गृह्यते । प्रतिबन्दिमात्रेणासिद्धेस्तात्पर्यमाह एतदुक्तमि ति । तथाच मुक्तौ कर्माभावान्न दुःखमिति निर्णय इति भावः । एव कर्मण एव हेतुत्वात् स्वातन्त्र्यपारतन्त्र्ययोस्सुखदुःखहेतुत्व नास्तीत्युक्तम् । इदानीम्पारतन्त्र्यस्य सुखं प्रति हेतुत्वमपि सम्भाव्यत इत्याह किञ्चे ति । तत्तदात्माभिमानविशेषानुगुण्येन भोगसाधनव्यवस्थादर्शनात् स्वातन्त्र्यभ्रमदशाया परानुवर्तनस्य सुखहेतुत्वाभावेपि भ्रमनिवृत्त्यनन्तर परतन्त्रतयात्माभिमानदशाया तदनुरूपस्य परानुवर्तनस्य सुखहेतुत्व सम्भवतीति भावः । अत इति । भ्रान्तमुक्तेस्तत्साधनमिति भावः । कालात्ययापदेशादि ति । कर्मनिवृत्तिश्रुत्या

व्याप्तेरवश्यम्भावात् तस्याश्च दूषितत्वादिति । अतः 'सर्वं परवशं दुःख' मित्यादिकमपि संसारिविषयम् । 'सेवा श्ववृत्ति-र्व्याख्याते' त्येतदप्यसेव्यसेवाविषयम् ।

स्वातन्त्र्यमपि दुःखाय स्वाङ्गुळिच्छेदनादिषु ।
पारतन्त्र्यं सुखायैव पत्नीनान्तु स्वभर्तृषु ॥
स्वातन्त्र्यं सुखहेतुः स्यादिति चेद्भवतोच्यते ।
न कथं सुखशाली स्यात्कीलोत्पाटी स वानरः ॥
अयोग्यपारतन्त्र्यं हि दुःखायेति निषिध्यते ।
भगवद्दास्यमेवाहुर्लास्यहेतुं मनीषिण ॥
ईश्वरोहमहं भोगी सिद्धोहं बलवान् सुखी ।
इत्यादिकानुसन्धानमासुरम्भावमाह हि ॥
हिरण्यासुरसिद्धान्तसिद्धामीश्वरभावनाम् ।
भावयन्तोवलम्बन्ते हरिदास्यविडम्बनम् ॥
हरिदासस्य राजर्षेरिति तन्मुनिभाषितम् ।
दासोहं कोसलेन्द्रस्येत्यादिसंवादमृच्छति ॥
परतन्त्रान्वयाभावे स्वातन्त्र्यं ब्रह्मणः कथम् ।
अस्वातन्त्र्ये कथं सौख्यमात्मनो निर्गुणस्य ते ॥
स्वातन्त्र्यपारतन्त्र्याभ्यां सुखंवा दुःखमेव वा ।
न व्याप्तं हि यतस्तत्तत्प्रमाणानुगुणं द्वयम् ॥

'स स्वराड्भवति' 'अत एव चानन्याधिपति' रिति श्रुति सूत्रे अपि दुःखहेतुकर्माधीनपारतन्त्र्यप्रतिक्षेपपरे एव, आत्मत्वस्य शरीरत्वविधायकश्रुतिबलात्स्वतोदासत्वस्मृतेश्च तत्सङ्कोचोपपत्तेः प्रपञ्चयिष्यमाणत्वात् । 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ते'

---

' अशरीरं वाव सन्त ' मित्यादिश्रुत्या च बाधादित्यर्थः ।

इत्यनावधारणेनापि तत्तत्कार्यहेतुतया तथा प्रसिद्धकारकव्यापारादिनैर पेक्ष्यमेवोच्यते, न पुनरीश्वरव्यापारनैरपेक्ष्यम्, तथा सति चाम्येव सङ्कल्पादिति निर्देशेन भवितव्यम् । व्युत्क्रमेणान्वये स एव दोष । नचेश्वरसङ्कल्पसापेक्षतामात्रेण सत्यसङ्कल्पत्वश्रुतिविरोध? ईश्वरस्य तत्तसङ्कल्पानुगुणसङ्कल्पयोगित्वात् । एतेन कामचार श्रुति सङ्कल्पादेवेति सूत्र च निर्व्यूढम् ।

यत्तु स्वतन्त्रस्याप्यनिच्छतो जगद्व्यापारनिवृत्त्युपपत्तिरिति ; तदसत्, मुक्तस्य सर्वगोचरशक्तिसद्भावे प्रमाणाभावात् । नच मातापितृप्रभृतिसृष्टिवचनात्सर्वविषयशक्तिक्लृप्ति, तन्मात्रसृष्टिशक्तेरेव सिद्धे । नच 'य काम कामयते सोस्य सङ्कल्पादेव समुत्तिष्ठती' ति सामान्यवचनात्सर्वशक्तित्वसिद्धि, 'य काम कामयत' इत्यस्यानुवादकत्वात्, तस्यच काम्यमानमात्रविषयत्वात्, मुक्तस्य कामनाया सर्वविषयत्वे प्रमाणाभावात् । विश्वामित्रादिसङ्कल्पवत्सङ्कुचितविषयत्वेनापि तत्सिद्धे । ईश्वरस्य तु 'सोऽकामयत बहुस्या' मित्यादिभिस्तत्सिद्धे । मुक्तस्य तु कामनाया सत्या जगद्व्यापारविरहायोगात् । शक्तस्य चिकीर्षा हि व्यापाराविनाभूता । अशक्तस्य कामना' दु ख हेतुरेव । नच 'सएकधा भवती' त्यारभ्य, 'अपरिमितध भवती' ति श्रुतेर्मुक्तस्य जगद्व्यापारोपि सम्भवतीति वाच्यम तस्या श्रुते परमात्मभोगशेषभूतस्वभोगार्थानन्तशरीरपरिग्रहमात्र विषयत्वात् ।

यत्तु मुक्तकर्तृकभोगनिर्माणे मुक्तेश्वरयो प्रयोज्यप्रयोजकभावे प्रमाणाभाव, पूर्वोक्तश्रुत्यादिविरोधश्चेति, तत्र विरोध परिहृत

प्रायः । प्रमाणमपि समर्थयिष्यमाणनियन्तृत्वादिश्रुत्यसङ्कोचः । अत एवेश्वरानिवारणान्मुक्तप्रवृत्तौ विपरिवर्तप्रसङ्गोपि प्रत्युक्तः ।

यत्तु कर्मनिवृत्तौ पारतन्त्र्यमपि निवर्तेत इति ; तत्र किं कर्माधीनस्य पारतन्त्र्यस्य निवृत्तिर्विवक्षिता, उत पारतन्त्र्यमात्रस्य? पूर्वत्रेष्टापादनम् । तदतिरिक्तं पारतन्त्र्यं जीवेषु न दृष्टमिति चेन्न ;- समर्थयिष्यमाणत्वात् । संसारिणामीश्वरपारतन्त्र्यं कर्महेतुकम्, कर्मफलभोगहेतुत्वात्, राजादिपारतन्त्र्यवदिति चेन्न ;- नित्यैरेव तद्धेतुभूतैर्जीवपरस्वरूपादिभिरनैकान्त्यात् । नच तेषान्तादर्थ्यनियमाभावान्नानैकान्त्यमिति वाच्यम्, ईश्वरपारतन्त्र्यस्यापि तादर्थ्यनियमानिश्चयेनासिद्धिप्रसङ्गात् । कार्यत्वे सतीति विशेषणे विशेषणासिद्धेः । कार्यपारतन्त्र्यपक्षीकरणे सिद्धसाधनात् । उत्तरत्राचेतनेप्यनैकान्त्यम् । चेतनगतं पारतन्त्र्यं कर्मव्याप्तमिति तन्निवृत्त्या तन्निवृत्तिरिति चेन ;— तथाप्यप्रयोजकत्वात् । मुक्तो न परतन्त्रः, चेतनत्वे सत्यकर्मवश्यत्वादीश्वरवदिति हि तदा प्रयोगः, तत्रेश्वरत्वमेवोपाधिः । नचेदं पक्षेतरत्वम्, अचेतनानां संसारिचेतनानां च पक्षव्यतिरिक्तानां व्यवच्छेद्यानां सिद्धेः । नच पक्षेतरत्वमित्येतावता परित्यागः,

---

प्रमाणमपी ति । असङ्कुचितनियन्तृत्वश्रुतिः प्रमाणमित्यर्थः । अतएवे ति । असङ्कुचितश्रुते रेवेत्यर्थः । ननु कर्मफलभोगैकहेतुत्वं हि हेतुः, तच कर्मफलभोगहेतुत्वे सति तदनुपयोग्यहेतुत्वम्, जीवादीना मुक्तिः प्रत्यपि हेतुत्वान्नानैकान्त्यमित्याशङ्क्य निराकरोति नचे ति । ईश्वरे ति । मुक्तौ पारतन्त्र्यसद्भावे तस्य तदातनेश्वरानुवर्तनादिहेतुत्वात्तादर्थ्यनियमानिश्चयात् सन्दिग्धासिद्धिप्रसङ्गादित्यर्थः । उत्तरत्रे ति । यत् पारतन्त्र्यं तत् कर्मनिवर्त्यमिति व्याप्तेरचेतनेप्यनैकान्त्यमित्यर्थः । चेतनगतत्वेन हेतुविशेषणाच्चानैकान्त्यमिति शङ्कते चेतने ति । तथापी ति । उक्तरीत्या अचेतनगते व्यभिचारवारणेपि अप्रयोजकत्वादेतन्नि-

बाधे सति तस्याप्युपाधित्वस्य क्वचित्स्वीकारात् । अग्नेरनुष्णत्वसाधने पदार्थत्वेनमित्वमेवोपाधिमाहु. । मुक्त ईश्वरपरतन्त्रः, अनीश्वरत्वात्, सम्प्रतिपन्नवदिति प्रत्यनुमानञ्च । नचात्र मुक्तेतरत्वमुपाधिः, ईश्वरे तस्य व्यभिचारात् । नापि मुक्तेश्वरव्यतिरिक्तत्वमुपाधि', मुक्ते पारतन्त्र्यस्य बाधकाभावेन तद्व्यतिरेकस्याप्युपाधिकुक्षिनिक्षेपायोगात् । अन्यथा पक्षविपक्षव्यतिरिक्तत्वमुपाधिरिति सर्वानुमानभङ्गप्रसङ्गात् । निर्विशेषणत्वाच्च । प्रत्यनुमानबलीयस्त्व वा । अतः कर्मनिवृत्तावपि मुक्तस्य पारतन्त्र्यनिवृत्त्ययोगात् 'सम्राड्भवती' त्यत्राकर्मवश्यत्वविवक्षाया न स्वरूपप्रयुक्तपारतन्त्र्यनिवृत्ति फलति ।

यत्तु 'सम्राड्भवती' त्येवम्भूतव्यपदेशसामर्थ्यात् 'पतिं विश्वस्ये' त्यादिश्रुतीनां सङ्कोच इति; किमस्य सामर्थ्यम्? स्वाधीनत्वप्रतिपादनं वा, पराधीनत्वनिवृत्तिपर्यवसितत्वं वा? नाद्य, स्वाधीनत्वमात्रस्येश्वराधीनत्वेन सह विरोधाभावात् । एकस्यैवानेकाधीनत्व हि लोकवेदयोर्दृष्टम् । जीवेश्वराधीन हि क्षेत्रज्ञशरीरम् । स्वाधीनत्व चात्र स्वसङ्कल्पाधीनप्रवृत्त्यादियोगित्वम्,

यमाधीनस्य चेतनत्वे सत्यकर्मवश्यत्वापारतन्त्र्यनियमस्याप्रयोजकत्वमित्यर्थ । अप्रयोजकत्वमुपपादयति मुक्त इति । ईश्वर इति । साध्यसमव्याप्तत्वाभावो विवक्षितः । मुक्त इति । ईश्वरव्यतिरिक्तत्वमेव लाघवात् परतन्त्रत्वप्रयोजकमिति भावः । निर्विशेषणत्वादिति । लाघवादनीश्वरत्वमेव परतन्त्रत्वव्याप्यम्, ननु चेतनत्वे सत्यकर्मवश्यत्वमपारतन्त्र्यव्याप्तम्, गुरुत्वादित्यर्थ । भिन्नहेतुविषयत्वेपि व्याप्तयोर्विरोधाल्लाघवगौरवावकाश इति भावः । चकारेण परतन्त्रत्वेनानीश्वरत्व प्रयोजकम्, चेतनाचेतनसाधारणत्वेन लघुत्वात्, ननु कर्मवश्यचेतनत्वम्, अचेतनाननुगमात्, गुरुत्वाच्च; नाप्यचेतनत्वमपि प्रयोजकम्, गौरवात्, अतश्चेतनत्वे सत्यकर्मवश्यत्वमपारतन्त्र्ये न प्रयोज

तच्चेश्वरानुमत्या सिद्ध्यत्येव । न द्वितीय॰, कर्माधीनत्वनिवृत्तिमात्रादपि तदुपपत्ते॰ । स्वेतरसमस्ताधीनत्वनिवृत्तिस्तात्पर्यतो लभ्यत इति चेन्न ; - स्वेतरसमस्तापेक्षया ईश्वरत्वस्य परमात्मन्यपि 'सर्वस्येशान' इत्यादिभिश्शब्दत एव सिद्धे । एवमपि सन्देहे मुक्तस्य पारतन्त्र्यन्न सिद्ध्यतीति चेन्न ; — शाब्दत्वेनाविळम्बितप्रतीतसर्वेश्वरत्ववशादेवार्थत्वेन विळम्बितप्रतीतानन्येश्वरत्वस्यैव सङ्कोचोपपत्ते । भूयसान्यायाच्च । भूयांसि वाक्यानि परमात्मनस्सर्वेश्वरत्व विदधति । 'स स्वराड्भवती' त्येकमेव मुक्तस्यानन्येश्वरत्व विवक्षतीति ततोऽप्यस्यैव सङ्कोचो युक्त ।

श्रुतिस्मृतीतिहासेषु पुराणेषु च सर्वत ।
सर्वोत्तरागमेष्वेव विष्णोस्स्वातन्त्र्यमुच्यते ॥

'सङ्कल्पादेवे' त्यादिकन्तु नान्याधीनत्व प्रतिक्षेप्तुमलमिति प्रागेवोक्तम् । 'यस्यात्माशरीर' मित्यात्मतत्वस्य शरीरत्वविधानात शरीरत्वस्य चाधेयत्वविधेयत्वशेषत्वस्वभावरूपत्वादपि तत्सङ्कोचो न्याय्य । उपबृंहणानुसाराच्च । 'आत्मदास्य हरेस्स्वाम्य

---

कमित्यनीश्वरत्वमेव धीयत इति विवक्षितम् । आर्थत्वेने ति । स्वप्रयोज्यत्वमेव शाब्दम्, तदनुपपत्तिमूलाल्लक्षणया स्वार्थद्वारा लभ्या स्वेतरसमस्ताधीनत्वनिवृत्ति विंलम्बिता, अतो विलम्बप्रतीतसर्वेश्वरत्ववशात् सङ्कोच इति भाव । भूयांसी ति । 'एषसर्वेश्वर' 'सर्वमिदप्रशास्ती' त्यादीनि । विदधती विवक्षितीत्येताभ्या पूर्वोक्ते शाब्दत्वार्थत्वे विवक्षिते । आत्मतत्वस्य — सर्वावस्थात्मस्वरूपस्य । तेन ससारिविषयता श्रुतेर्निवर्त्यते । तत्रोपपत्ति स्वभावरूपत्वादित्यनेन विवक्षिता । नियाम्यत्वैकस्वभावत्व शेषत्वैकस्वभावत्व च शरीरत्वम्, तच्च कादाचित्कत्वे न स्यात्, अतो विधेयपर्यालोचनया सर्वावस्थाविषयत्वमवगम्यत इत्यर्थ । यच्छब्दयोगेऽपि मानान्तराप्राप्तत्वात् विधित्वमभिप्रेतम् ।

स्वभावं च सदा स्मर ।' 'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः' इत्यादिभिः स्वाभाविकं भगवद्दास्यमभिधीयते, 'स्वभावं' 'स्वत' इति च कण्ठोक्तितः, 'दासभूता' इति च्विप्रत्ययमन्तरेण प्रयोगाच्च । तत्रैवादरातिशयाद्धि स्वत इत्यप्यनूद्यते, दासभूता इति निरुपाधिकनिर्देशेनैव स्वतस्त्वसिद्धेः। सर्वशब्दश्चात्र न मुक्तबहिष्कारं क्षमते, प्रतिनिर्देशसामर्थ्याच्च । 'अन्यराजानस्ते क्षय्यलोका भवन्ती' त्यविदुषां क्षय्यलोकत्वकारणमन्यराजत्वमुच्यते, तच्च निष्कर्षे कर्माधीनत्वमेव, तन्निवृत्तिश्च विदुषः 'सस्वराड्भवती' ति विवक्षिता । अतोपि कर्मवश्यत्वमात्रमेवात्र निषिध्यत इति न स्वाभाविकभगवद्दास्यनिषेधः । अन्यथा 'पतिंविश्वस्ये' त्यादिप्रमाणेन विरोधः । एतेनानन्याधिपतिरिति सूत्रमपि निर्व्यूढम् । एवं बद्धमुक्ताविशेषेण शेषशेषिभावादिभेदे जीवेश्वरयोस्स्वाभाविके स्थिते तदविरोधेन 'ब्रह्मैव भवती' त्यादीनां 'अविभागेन दृष्टत्वात्' इति मुक्तविषयसूत्रस्य च

---

स्वभाव मिति । 'आत्मदास्य हरेस्स्वाम्य च स्वभाव सदा स्मरे' त्यन्वयो ऽभिप्रेतः । च्विप्रत्यय मिति । दासत्वस्यौपाधिकत्वे अभूततद्भाववाची च्विप्रत्ययः प्रयुज्येत, अतोऽभूततद्भावो नास्तीत्यवगमात् स्वाभाविकत्वसिद्धिः । दासभूता इत्यनेन स्वाभाविकत्वसिद्धौ किं स्वत इत्यनेन, अत आह तत्रैवे ति । आर्थिकत्वाच्च न पौनरुक्त्यादनन्वयशङ्का । सर्वशब्द इति । आत्मान इत्यनेन सर्वात्मपरिग्रहसिद्धौ सर्वपद सर्वावस्थपरिग्रहार्थमिति भावः । प्रतिनिर्देशे ति । 'नान्यथा लक्षणन्तेषा बन्धे मोक्षे तथैव चे' ति दास्याभावप्रतिषेधलक्षणः प्रतिनिर्देशः। अन्यराजान इति । 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमाया' दिति कर्मणः क्षयिष्णुफलहेतुत्वमन्यत्र श्रुतम्, अतस्तदैकार्थ्यादनाविदुषां क्षय्यलोकत्वे कारणत्वेनोच्यमानमन्यराजत्व कर्मवश्यत्वमेवेति सस्वराडित्यत्र विदुषा कर्मवश्यत्वनिवृत्तिरे-

विभूतित्वाविर्भावादिमुखेन निर्वहणं प्रागुक्तन्यायेन भाव्यम्; ऐक्यापत्तिब्रह्मद्वित्वयोर्भेदश्रुत्या समाधिकराहित्यश्रुत्या च प्रतिक्षेपात्। समनिषेधो हि केन चिदाकारेण सर्वातिशायित्व प्रथयति। तथाच लक्षणवाक्यस्वारस्यम्, स्वेतरसमस्तवस्तुव्यावर्तकत्वाल्लक्षणस्य। नच परमसाम्यश्रुत्यसङ्कोचाय मुक्तस्यापीश्वरत्वमङ्गीकार्यमिति द्वयोस्सर्वप्रकाराविशेषादैक्यमभिलपितु शक्यम्, 'भोगमात्रसाम्यलिङ्गाच्चे' ति भगवता सूत्रकारेणैव तत्परिहारात्। आहच वृत्तिकार — "जगद्व्यापारवर्जं समानो ज्योतिषे" ति। द्रमिडभाष्यकारश्च - "देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थसिद्धिस्स्या" दिति। ज्ञानानन्दयोरत्यन्तसाम्यादपि हि परमसाम्यशब्दश्चरितार्थ। सर्वज्ञत्वनिरतिशयानन्दत्वे हि तत्र तत्र मुक्तस्यापि वाक्यान्तरे प्रतिपाद्येते इति सर्वगुणसाधारणरूपपरमसाम्यशब्दस्तत्रैव पर्यवसितुमर्हति। पारम्यविशेषण च तत्रत्याल्प साद्दश्यव्यवच्छेदेन सप्रयोजनम्। यथा दशवर्णषोडशवर्णस्वर्णनिष्कयो काञ्चनकलधौतनिष्कयोर्वा परमसाम्योक्तौ परिमाण-

---

वोच्यत इति भाव। प्रागुक्तन्यायेने ति। स्वपक्षमपरामृश्योच्यत इति प्रागुक्तप्रतिबन्दिन्यायेनेत्यर्थ। समनिषेधोही ति। शक्तौ सत्यामनिच्छया मुक्ताना जगद्व्यापारविरहो नापकर्षप्रयोजक इति भाव। तथाचे ति। ब्रह्मद्वित्वाभाव एवेत्यर्थ। स्वेतरे ति। स्वशब्दो लक्ष्यपर। लक्ष्येतरसमस्तवस्तुव्यावर्त्तकं हि लक्षणम्, जगद्व्यापारनायकं ब्रह्म च त्वया लक्ष्यत्वाभिमतम्, एवञ्च लक्षणवाक्यस्थब्रह्मपदस्यासङ्कोचे ब्रह्मान्तरव्यावृत्त्यप्रतीतिस्तद्व्यवर्त्तनार्थं ब्रह्मपदस्य सङ्कोच कार्यं, तथाचास्वारस्यमित्यर्थ। भोगमात्रे ति। ऐक्ये साम्यपद नोपपन्नमिति भाव। परमसाम्यश्रुत्या ब्रह्मद्वित्वशङ्काप्यनेनैव वाक्येन परिहृता। सर्वज्ञत्वे ति। वाक्यान्तरेण यो गुणो मुक्तस्य प्रसिद्ध, तस्मिन् गुणे परमसाम्य विवक्षितमिति भाव। काञ्चने ति।

वैषम्यमात्रं निषिध्यते, नतु वर्णवैषम्यम् ।

यत्तु स्वतन्त्रपरतन्त्रयोर्भोगसाम्यासम्भवेन मुक्तस्यापि स्वतन्त्रत्वमिति ; तदसत् , स्वातन्त्र्यपारतन्त्र्ययोर्भोगाप्रयोजकत्वस्य प्रागेव स्थापनात् । यथावस्थितात्मानुसन्धानानुगुण्येन स्वतन्त्रस्य स्वातन्त्र्यं परतन्त्रस्य च पारतन्त्र्यमनुकूलं भवतीति द्वयोरपि यथावस्थितात्मानुसन्धानानुबन्धिभोगस्याविशेषात् । पुत्रस्य पितृपारतन्त्र्यमेव स्वस्वातन्त्र्यादपि प्रीतिं जनयति । विभूतिमत्त्वजगद्व्यापारादिभिरीश्वरानन्दो मुक्तानन्दातिशयितस्स्यादिति चेन्न ; स्वाभाविकदास्यानुसन्धायिनः सद्भृत्यस्य स्वाम्यैश्वर्येणैव मुक्तस्यापि परमात्मविभूतिभिरेव निरतिशयानन्दोदयात् । एतदुक्तं भवति– यत्प्रामाणिकम् तत्तत्सर्वं मुक्तेश्वरयोर्यथावस्थिताकारेणानुकूल्येन भातीति भोगमात्रसमानता, यथा- राजराजान्तरङ्गयोस्सर्वमपि राजैश्वर्यमानुकूल्येन साधारणमेवेति । तदेव चेतनाचेतनयोरिव जीवेश्वरयोरपि यावदात्मभाविनि भेदे सिद्धे तद्भेदस्य मिथ्यात्वं औपाधिकत्व स्वाभाविकत्वेपि अभेदसहत्व वा वदतां कलिब्रह्ममीमांसकानां वेदान्तेषु न कश्चिदवकाशो दृश्यत इति स्थिते तार्किकरञ्जनार्थं ब्रूमः– ब्रह्म सत्येनात्मना सद्वितीयम्, पदार्थत्वात्, घटवदित्यादिभिर्मायावादिनो मुखपिधानम् । जीवः ईश्वरादनौपाधिकभेदवान्, सार्वज्ञ्यरहितत्वात्, घटवदित्यादिभिर्भास्करतिरस्कारः। ईश्वराहम्भावोपि विच्छेदरहितनित्याहम्भावान्तर सद्वितीयः, अहम्भावत्वात्, सम्प्रतिपन्नजीवाहम्भाववदिति यादव-

---

काञ्चनकलधौतनिष्कयोः परमसाम्योक्तौ मानान्तरसिद्ध यत् परिमाणसाम्य तत्रैव परमसाम्यशब्दः पर्यवस्यति, न वर्णेपीति भावः । ब्रह्म सत्येने ति । जीवस्य प्रतिबिम्बत्व प्रतिबिम्बस्य च मिथ्यात्व ये वदन्ति तन्मतानुरोधेन सिद्ध साधनवारणाय सत्येने ति । विच्छेदे ति । नित्यत्वमिहानादित्वम् ,

प्रकाशपिशाचविलासनम् । ईश्वराहम्भावस्य नित्यत्वाभावात् दृष्टान्तस्य साध्यविकलतेति चेन्न, — तथासतीश्वरस्य कदाचित् अचित्क रूपत्वादिप्रसङ्गात् । नचायमिष्टप्रसङ्ग इति वाच्यम्, सर्वज्ञत्वादि श्रुतीनां कालावच्छेदाभावात् । नच सर्वज्ञ इत्यादिशब्दाश्शक्ति विषया, अनुशासनस्य 'शक्ता हस्ती' त्यादिना नियतविषय त्वात् । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे' ति ज्ञानशक्त्यो पृथक्स्वाभाविकत्ववचनाच । नच प्रळया दिषु निद्रानिर्देशात् कदाचिदज्ञता, तस्य निर्व्यापारदशामात्र विषयत्वात्, 'व्यपगतनिद्राभयक्रोधतन्द्रि'' रित्यादिश्रुत्यनुसा रात् । नचावतारेष्वज्ञानादि दृष्टमिति वाच्यम्, तस्याभिनयरूप त्वात् । उक्तं हि महाभारते "कालस्यहिच मृत्योश्च जङ्गम स्थावरस्यच । ईशते भगवानेकस्सत्यमेतद्ब्रवीमि ते ॥ ईशन्नपि महायोगी सर्वस्य जगत प्रभु । कर्माण्यारभते कर्तुं कीनाश इव दुर्बल ॥ तेन वञ्चयते लोकान्मायायोगेन केशव । ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवा ॥" इति । नच सदेवे त्यादिवशात्प्रळयदशायां गुणादेरपि विलय, चिदचिदीश्वरशक्ति त्रयस्यापि विलयप्रसङ्गेन पुनस्सृष्ट्यायभावप्रसङ्गात् । सद्विद्या निरूपणेनैव सदेवेत्यादेर्निर्विशेषपरत्वप्रतिक्षेपात् । अत स्वानान मेव कुमतीनामविद्योपाध्यवस्थाविशेषाद्युक्तमीश्वराज्ञानकल्पनम् । तदेवमभेदगन्धासहवैधर्म्यशतप्रतिष्ठितो यावदात्मभावीजीवेश्वरभेद ।

---

कालापरिच्छेद इ । उपाध्युपाधि भाव ।

स्वदुःखं यदि जानाति नारभेत परः पुमान् ।
यदि नैव विजानाति नारभेत पुनः पुमान् ॥

तदेतत्सर्वं 'निर्भिद्‌जनके ज्ञाने' इति श्लोकमुपशिष्य भाष्ये प्रपञ्चितम् ।

इति शतदूषण्यां जीवेश्वरैक्यभङ्गः
सप्तत्रिंशो वादः ।

---

स्वदुःखमिति । स्वदुःखज्ञाने तन्नोत्पादयेत् इत्यर्थः । स्वदुःखत्वेनाज्ञाने सार्वज्ञ्य हीयेतेति भावः ।

इति वाधूलकुलतिलकश्रीनिवासाचार्यसदयेक्षासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
जीवेश्वरैक्यभङ्गः
सप्तत्रिंशः स्कन्धः ।

श्रीरस्तु ।

अथाष्टत्रिंशो वादः ।

ज्ञानानन्दगुणोपेतं ज्ञानानन्दमयं महः ।
पायादपायाद्भवतो भवबन्धविधायकात् ॥
सत्यज्ञानादिभिर्वाक्यैरखण्डं बोध्यमिच्छताम् ।
अहङ्करोमि मूर्खाणामहङ्करणखण्डनम् ॥

यत्तु जल्पन्ति - विगीतं वाक्यमखण्डार्थपरम्, समानाधिकरणवाक्यत्वात्, सोयं देवदत्त इत्यादिवाक्यवदिति । अत्र किमिद-

---

अविच्छिन्नस्रोतांस्यपि नृहरिरागांस्यगणयन्
यदीया इत्यस्मात् सपदि समभूद्रक्षितुमनाः ।
अमुष्मिन्नायत्ता परमनवधिश्रीनिधिगुरौ
मम श्रेयस्सिद्धिस्सकलविधबन्धावनुपधौ ॥
अखण्डार्थं चक्रे श्रुतिगणमखण्डे शुभगुणै-
रखण्डं यस्तत्त्वं परमुरसिजानीति कथयन् ।
असामास्म स्मश्च प्रतिपदममुष्याङ्घ्रियुगळं
स्मरन्तोऽखण्डार्थाः कथककण्ठीरवगुरोः ॥

सत्यज्ञानादिवाक्यानामखण्डार्थत्वात् ब्रह्म निर्गुणमेवेति जल्पद्भिः प्रतारितांस्तत एवानवरतसंसरणभागिनो जनानवलोक्य परमकारुणिकतया तेषां तदपायनिवृत्तिं भगवत आशास्ते ज्ञानानन्दे ति । अनेन वादार्थोऽपि सङ्गृहीतः । यथा 'यस्सर्वज्ञ' इत्यादिवाक्यैर्ज्ञानादिवैशिष्ट्यं प्रतिपाद्यते तथा सत्यादिवाक्यैस्सत्यत्वादिवैशिष्ट्यं प्रतिपाद्यत इति नाखण्डार्थत्वमिति । एवं भगवता कर्तव्यमर्थमाशास्य स्वकर्तव्यं प्रतिजानीते सत्यज्ञानादी ति । विगीतमि ति । सत्यज्ञानादिवाक्यमित्यर्थः । विगीतपदस्य पक्षतावच्छेदकोपलक्षणार्थत्वात् सत्यज्ञानादिवाक्यत्वसामानाधिकरण्येनाखण्डार्थत्वस्य सिषाधयिषितत्वात् पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरनुमानफलतया तस्यैव

मखण्डार्थपरत्वं? निरवयवार्थपरत्वं वा? अच्छेद्यार्थपरत्वं वा? निर्विशेषणपरत्वं वा? विशेष्यमात्रपरत्वं वा? निर्भेदार्थपरत्वं वा? भावरूपविशेषणरहितपरत्वं वा? एकविशेष्यपरत्वं वा? अन्यद्वा किंचित्? इति। न प्रथमद्वितीयौ, सिद्धसाधनात्; दृष्टान्तस्य साध्यविकलत्वाच्च। न हि देवदत्तपिण्डस्य निरवयत्वमच्छेद्यत्वं वा भवताऽभ्युपेतम्। नापि सोयं देवदत्त इति वाक्यादपि तथा प्रतीतिः। दृष्टान्तान्तरोपादानेपीह दुस्तरो व्यभिचारः। न तृतीयः, तत्र निर्विशेषणत्वमपि किं शब्दबोध्यत्वेनाभिमतम्? उत वस्तुगत्या? आद्ये निर्विशेषणत्वमपि लक्षणविशेषणविशिष्टार्थबोधनादविशिष्टार्थबोधकत्वाभिमानभङ्गः। निर्विशेषणत्वं न विशेषणं अपि तु स्वरूपमेवेति चेत्; न,

---

पक्षतावच्छेदकत्वात्। निरवयवे ति। खण्डशब्दस्यावयवपरत्वेनेदम्। अच्छेद्ये ति। खण्डशब्दस्य खण्डनपरत्वाभिप्रायेणेदम्। निर्विशेषणपरत्वं वा विशेष्यमात्रपरत्वं वे ति। निर्विशेषणपरत्वमित्यस्य विशेषणाभावविशिष्टविषयत्ववस्तुतोविशेषणाभावाश्रयत्वान्यतरपरत्वात्, विशेष्यमात्रपरत्वमित्यस्य विशेष्यविषयत्वेसति विशेषणाविषयत्वपरत्वादनयोर्विकल्पयोर्भेदः। शब्दार्थपरत्वसम्भावनामात्रेण तृतीयविकल्पान्तर्गतयोरपि विकल्पयोश्चतुर्थविकल्पे सकिमित्यादिना कीर्तनमिति ध्येयम्। वस्तुतस्तादृशार्थबोधकत्व विवक्षितम्? उत तथा बोधकत्वम्? नाद्य इत्याह सिद्धसाधनादि त्यादि। द्वितीय दूषयति नापी ति। जातिगुणादिविषयसोऽयमित्यादिवाक्यमेव दृष्टान्त इत्यत आह दृष्टान्तान्तरे ति। किन्निर्विशेषणत्व विशेषणम् उतोपलक्षणमित्यभिप्रायेण विकल्पयति तत्र निर्विशेषणत्वमपी ति। अविशिष्टार्थे ति। स्वरूपातिरिक्ताबोधकत्वाभिमानभङ्ग इत्यर्थः। निर्विशेषणत्वमि ति। न स्वरूपातिरिक्तप्रकार इत्यर्थः।

स्वरूपस्य सम्प्रतिपन्नत्वेनासाध्यत्वात्। तदाद्यर्थपरमित्येतावदेवोक्तं स्यात्, तथा च सिद्धसाधनता। तत्परिहारार्थमखण्डविशेषणमिति चेत्; किं पर्यायपदोपादाने सिद्धसाधनतापैति? अखण्डपरमित्येतावत्प्रयुञ्जानो न चोद्येतेति चेत्; तदपि दत्तोत्तरम्, यत्किंचिदर्थपरमिति विवक्षिते सिद्धसाधनात्; विशेषणाभावविशिष्टपरमिति पूर्वोक्तविरोधात्। द्वितीये तु सगुणब्रह्मप्रतिपादकस्य वाक्यस्य न कश्चिद्विशेषः। तदपि हि वस्तुगत्या निर्विशेषणमेव वक्ति भवतः। विशेषणप्रतिपादनाप्रतिपादनाभ्यां(१) वैषम्यमिति चेत्; न, प्रातीतिकप्रतिपादनस्य परमार्थतोऽप्रतिपादनस्यचोभयत्रापि समानत्वात्; अस्मन्मते वस्तुतस्सविशेषणेपि देवदत्तश्श्यामोयुवेत्यादिवाक्यानां प्रवृत्तिदर्शनात्, दृष्टा-

स्वरूपस्ये ति। स्वरूपस्य शब्दविषयतया सम्प्रतिपन्नत्वेन तथा साध्यत्वाभावादित्यर्थः। ननु विशेषणाभावात्मकत्वस्याऽसम्प्रतिपन्नत्वान्न दोष इति चेत्, एवमपि विशेषणाविषयत्वस्यासिद्ध्या सगुणवाक्यविशेष इति भावः। सिद्धसाधनभयादखण्डविशेषणं ददतः तत्रापि स्वरूपपरत्वसाधने सिद्धसाधनता सम्मतैवेति यस्तु साध्यैकदेशभूतार्थपरत्वे पर्यवसानमाह तदाद्ये ति। ननु यत एव साध्यनिर्देशैकदेशभूतार्थपरत्वमाने सिद्धसाधनता, अत एवाखण्डविशेषणं धृतमित्यापाततश्शङ्कते तत्परिहारार्थमि ति। एवमखण्डशब्दस्य किं स्वरूपमात्रमर्थः? उत यत्किञ्चिदित्यर्थः? अथवा विशेषणाभावविशिष्टमिति विकल्पमभिप्रेत्य क्रमेण दूषयति किं पर्यायपदेत्या दिना। न कश्चिद्विशेष इति। सत्यज्ञानादिवाक्यमखण्डार्थम्, 'यस्सर्वज्ञ' इत्यादिवाक्यं सखण्डार्थमिति विशेषो न स्यादित्यर्थः। वस्तुगत्या निर्विशेषणविषयत्वे सति विशेषणाप्रतिपादकत्वमखण्डार्थत्वमिति शङ्कते विशेषणे ति। प्रातीतिके ति। विशेषणप्रतिपादकत्वभ्रमः वस्तुतस्तदप्रतिपादनं च उभयत्रापि समानमित्यर्थः। सगुणवाक्यानां विशिष्टप्रतिपादकत्वं व्यावहारिकम्, सत्यादिवाक्यानां तु तद्विशिष्ट-

(१) विशेषणविशेष्यप्रतिपादनाभ्याम्-- पा.

न्तस्य साध्यविकलत्वाच्च । त्वन्मतेन तु व्यधिकरणवाक्यानामपि परमार्थतो विशेषणशून्यार्थविषयत्वेन हेतुविशेषणवैयर्थ्यम् । न चतुर्थः, विशेष्यस्वरूपस्यैव मात्रशब्देनोपादाने सिद्धसाधनत्वात्; अतिरिक्तोपादाने विवक्षितासिद्धेः । पदप्रतिपन्नविशेषणत्यागन्तेन विवक्षित इति चेत्; स किं वाच्यत्वेन विवक्षितः? उत तत्राविद्यमानतामात्रेण? उत विशेषणानां बोधनव्यापारागोचरत्वेन? आद्ये बोध्यवैशिष्ट्यप्रसङ्गः, सत्यपदस्यासत्ये तात्पर्यमिति व्याहतवर्णनप्रसङ्गश्च । साध्यवैकल्यञ्च, तदिदंशब्दयोस्तत्तेदन्ताऽभावप्रतिपादकत्वाभावात् । द्वितीयेपि पूर्ववत् सगुणब्रह्मवाक्यसमानतया तेषामप्यखण्डपरत्वप्रसङ्गः; साध्यवैकल्यं च, देवदत्तस्य कालद्वयसम्बन्धाभावे क्षणिकत्वप्रसङ्गात् । तृतीयेपि किं

---

तिपादनं प्रातीतिकमिति वैधर्म्यमसिद्धम्, त्वदुक्ततर्कप्रतिसन्धानशून्यानां निर्गुणवाक्यानामपि सगुणवाक्यानामिव गुणविशिष्टार्थबोधकत्वस्य दर्शनात्, तस्य ब्रह्मज्ञानेतराबाध्यत्वाच्च । वस्तुतो निर्विशेषणविषयत्वे सतीति विशेषणवैयर्थ्यं चानानुसन्धेयम् । विशेष्यस्वरूपस्यैवे ति । स्वार्थिकेषु स्वरूपमात्रपरत्वस्य दर्शनादत्रापि तत्सम्भावनया विकल्पः । अतिरिक्तोपादान इति । अतिरिक्तार्थेषु विभक्त्यादिषु विशेषणपरतन्त्र्य दर्शनादत्रापि विशेषणपरत्वे अखण्डार्थत्वासिद्धिरित्यर्थः । पदप्रतिपन्ने ति प्रसक्तस्यैव त्याग इति परा ङ्गसम्पादनार्थम्, न तु पदाप्रतिपन्नविशेषणस्यात्याज्यताभिप्रायेण । तेने ति । मात्र शब्देनेत्यर्थः । स किमित्यादि । विकल्प वाक्येविशेष्यमात्रपदस्य विशेषणाभावव द्विशेष्यपरत्वं विशेषणाभावस्य विशेषणत्वं च विवक्षित्वा प्रथमविकल्पः, तस्योपलक्षणत्वं विवक्षित्वा द्वितीयविकल्पः । विशेषणत्याग इत्यत्र त्यागशब्द स्याभावपरत्वाभिप्रायेणैतद्विकल्पद्वयम्, विशेष्यमात्रशब्दस्य विशेषणत्यागशब्दस्य च स्वारसिकार्थाभिप्रायेण तृतीयविकल्पः । बोध्यवैशिष्ट्यप्रसङ्ग इति– बोध्यस्य विशिष्टात्मकत्वप्रसङ्गः, विशिष्टबोधनप्रसङ्ग इति यावत्, तथा च पूर्वोक्ता-

सर्वेषां तथाविधबोधनव्यापारागोचरत्वमभिमतम्? उत निरूपकाणां? नाद्यः, - भवदभिमततर्कानभिज्ञानां तदभिज्ञत्वेपि तदविश्वासिनां च तद्विशेषणविशिष्टप्रतीतेः । न द्वितीयः, असिद्धेः; अनुपपत्त्यभावस्य वक्ष्यमाणत्वात् । नापि पंचमः, व्यावृत्तिपरत्ववर्णनस्यापि निर्मूलत्वप्रसंगात् । अनृतजडपरिच्छिन्नव्यावृत्तिपरतया हि पदत्रयव्यावृत्तिरभिमता । सजातीयभेदराहित्यं विवक्षितमिति चेत्; न, तस्यैतच्छब्दप्रतिपाद्यत्वाभावात् विशेषणविशिष्टत्वेपि तत्सिद्ध्यविरोधाच्च पूर्ववच्च साध्यवैकल्यं स्यात् । जडादिभेदस्य मिथ्यात्वाभ्युपगमे अन्यत्रोत्तरमुक्तम् । न च षष्ठः, भावरूपविशेषणदूषकाणां तर्काणां अभावरूपविशेषणैस्सह का पैतृष्वस्रीयता? तैरपि सम्बन्धाभावात् । तथा च—

भावो यथा तथाऽभावो निर्विशेषत्वबाधकः ।
अबाधकत्वे भावेपि बाधकत्वकथा मुधा ॥
वाक्यार्थस्य सखण्डत्वं भावेन यदि जायते ।
अभावेनापि जायेत सखण्डत्वमखण्डितम् ॥
भावान्तरमभावो वा यद्वा भावान्तराधिकः ।
न खण्ड्यते सखण्डत्वं द्वयोरपि च पक्षयोः ॥

---

विशिष्टार्थबोधकत्वाभिमानभङ्ग इति भावः । सर्वेषामि ति । पुरुषाणामित्यर्थः । निरूपकाणामि ति । परीक्षकाणामित्यर्थः । अविश्वासिनामि ति । असमीचीनत्वज्ञानवतामित्यर्थः । पदत्रयव्यावृत्तिः— सत्यादिपदानां परस्परं भिन्नार्थत्वम्, अपर्यायत्वमिति यावत् । तस्ये ति । एतच्छब्दः— अखण्डशब्दः । तत्सिद्धिः— सजातीयभेदराहित्यसिद्धिः । पूर्ववदि ति । अयं च साधारणो दोषः । तैरपी ति । अद्वैतश्रुतिबलात् ब्रह्मणो भावरूपविशेष-

देवदत्तःश्यामोयुवेत्यादिभिरनैकान्त्याच्च । प्रत्यक्षबलात्तत्र वैशिष्ट्यम्, अत्र तु शब्दैकसमधिगम्यत्वाद्यथाशब्दं व्यवस्थेति चेत्; तर्हि शब्दैकसमधिगम्यार्थविषयत्वे सति समानाधिकरणवाक्यत्वादिति हेतुस्स्यात्। तथा सति दृष्टान्तस्य साधनविकलत्वप्रसङ्गस्स्यात्। नहि सोयन्देवदत्त इत्येतद्वाक्यमतीन्द्रियार्थविषयम्। पूर्ववत्साध्यवैकल्यं च। सप्तमस्त्वस्मत्पक्ष एवेति सिद्धसाधनमेव। अष्टममपि विकल्पं विकल्पयामः, तत्किं निर्विवादयत्किंचिद्बोधनमात्रादधिकम्? उतानधिकम्? आद्ये विशिष्टपरत्वमकामेनापि स्वीकार्यम्। द्वितीये तु सिद्धसाधनत्वमेव।

विगीतं वाक्यमिति किन्तत्वमसिसत्यज्ञानादिमात्रं विवक्षितम्? उत सोयं देवदत्त इति वाक्यव्यतिरिक्तं सर्वमपि समानाधिकरणवाक्यम्? नाद्यः, देवदत्तःश्यामोयुवालोहिताक्ष इत्यादिभिरनैकान्त्यात्। न द्वितीयः, तैरेव कालात्ययापदेशात्। नहि सोयन्देवदत्तइत्यादिवाक्यस्येव देवदत्तःश्यामइत्यादिवाक्यस्य विरोधाभासोप्यस्ति। आहुश्च - 'सर्वस्यापि च पक्षत्वे बाध एव प्रसज्यते।

---

येनेन्वाभावरूपविशेषणेनापि सम्बन्धाभावादित्यर्थः। प्रत्यक्षे ति। प्रत्यक्षेण तत्र भावरूपविशेषणस्य प्रतीतत्वात् समानाधिकरणवाक्यत्वेपि न तत्र तद्रहितपरत्वम्, ब्रह्मणस्तु मानान्तरागोचरत्वात् ततो विशेषणवैशिष्ट्याप्रतीतेः श्रुतेस्तद्रहितपरत्वमुपपद्यत एवेत्यर्थः। तत्किमि ति। यत्किञ्चिद्रूपमखण्डार्थत्व सम्प्रतिपन्नयत्किञ्चिद्बोधनादधिकबोधने पर्यवसितम् उत नेत्यर्थः। विशेषणाबोधनपर्यवसानमिति पक्षस्तु विशेषणबोधकत्वप्रतिपादनेनैव निरसिष्यते। विरोधाभास इति। तत्कालावच्छिन्नस्य एतत्कालवैशिष्ट्ये एतत्कालावच्छिन्नस्य तत्कालवैशिष्ट्ये च युगपत्कालद्वयसत्त्वप्रसङ्गः, अवच्छेदकस्य अवच्छेद्यसमानकालत्वात्, तच्च विरुद्धम्; देवदत्तःश्यामोयुवेत्यादौ तन्नास्तीत्यर्थः। सर्वस्ये ति।

अनैकान्तिकता तु स्यात् पक्षीकारे च कस्यचित् ॥ वाक्यत्वादिति हेतुश्च स्वरूपासिद्धता व्रजेत्। आकाङ्क्षादित्रयाभावे तद्भावे त्वविशिष्टधीः ॥ यश्चास्मिन्नेव साध्ये लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदिति प्रयोगः, सोऽप्येतैरेव दूषणै निरस्तप्रायः। प्रतिज्ञाहेत्वोर्विरोधश्च, लक्षणस्यासाधारणधर्मत्वात्। किञ्च प्रकृष्टप्रकाशश्चन्द्र इत्यत्र प्रकृष्टप्रकाशत्वं किं चन्द्रशब्द प्रवृत्तिनिमित्ततया विवक्षितम्? उत तदुपलक्षणतया? आद्ये

---

सोऽयमिति वाक्यव्यतिरिक्तस्य सर्वस्येत्यर्थः। कस्यचिदि ति। तत्वमसिसत्यज्ञानादिवाक्यमात्रस्य पक्षत्वे देवदत्तस्थामोधुर्वेत्यादावनैकान्त्यमित्यर्थः। वाक्यत्वादिती ति। आकाङ्क्षादित्रयाभावे स्वरूपासिद्धता व्रजेदित्यन्वयः। अयोग्यार्थस्य वाक्यत्वमेव नास्तीति मतानुसारेण त्रयाभाव इत्युक्तम्। यद्वा अखण्डार्थप्रमापकत्वं साध्यम्, प्रमाणवाक्यत्वादिति हेतुरित्यभिप्रायः। वस्तुतस्तु न साध्ये प्रमाप्रवेशः अप्रमाणवाक्ये अखण्डार्थत्वस्यैवाभावात्, समानाधिकरणवाक्ये प्रमाणभूत एकस्यैव पदार्थद्वयाभेदरूपत्वात् तस्मिन् पर्यवसानं युक्तम्, अप्रमाणवाक्ये तु कस्यापि तथात्वाभावात् विनिगमकाभावान्नैकस्मिन् पर्यवसानम्, विनिगमकाभावादेव स्वस्वाभेदरूपे उभयत्र पर्यवसानेपि एकप्रातिपदिकार्थनिष्ठत्वमखण्डार्थत्वमसिद्ध्यति, किञ्च— एकैकपदार्थस्य स्वस्वाभेदरूपत्वे इतरपदार्थाभेदरूपत्वाभावात् तत्र इतरपदार्थाभेदसंशयादिनिवृत्तिरितरपदार्थतादात्म्यबोधनादिनैव वाच्येति संसर्गप्रमापकत्वमपि तत्रावश्यकम्, तथा च वाक्यत्वमात्रस्य तत्राखण्डार्थत्वव्यभिचारित्वात् प्रमाणत्वमपि तत्रान्तर्भाव्यम्, तच्चाकाङ्क्षादित्रयाभावे न भवतीत्यर्थः। तद्भाव इति। आकाङ्क्षाया अजनितान्वयबोधरूपत्वाद्योग्यताया अन्वयाबाधरूपत्वात् सन्निधानस्यान्वयप्रतियोग्युपस्थितिरूपत्वाच्चेत्यर्थः। निरस्तप्राय इति। साक्षात् तत्प्रयोगोपादानेन दूषणाकथनात् प्राय इत्युक्तम्। तदुपलक्षणतया— प्रवृत्तिनिमित्तोपलक्षणतया। आद्य इति। चन्द्रशब्दस्य चन्द्र

चन्द्रशब्दस्य स्ववाच्यतापरत्वात् प्रवृत्तिनिमित्तभेदेन वैशिष्ट्य स्यात्, अन्यथा चन्द्रशब्दस्य तत्रापि निष्प्रयोजनत्वप्रसङ्गात् सामानाधिकरण्यस्यासिद्धिप्रसङ्गाच्च । न हि पर्यायेणापि सामानाधिकरण्यम्, 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्य' मिति हि तल्लक्षणम् । द्वितीये त्युपलक्षणीयोपलक्षणाकारद्वयप्रतिपादनाद्वैशिष्ट्य सुस्थितमेव । प्रतिपन्नाकारोप्यधिक इति प्रागेवोक्तम्। प्रकृष्टप्रकाशश्चन्द्रइतिवदित्यत्र प्रकाशमात्रविवक्षाया सर्वप्रकाशानामपि चन्द्रत्वप्रसङ्ग, तस्य तन्मात्रलक्षणत्वात् । प्रकाशविशेषविवक्षाया प्रकृष्टप्रकाशश्चन्द्र इत्यस्य विशिष्टार्थविषयत्वात् दृष्टान्तस्य साध्यविकलत्व स्यात्, अन्यथा प्रकृष्टपदवैयर्थ्यं च । तथा गन्धवतीपृथिवीत्यादिषु लक्षणवाक्येष्वनैकान्त्यम् ।

अथ मन्यसे सर्वलक्षणवाक्येषु लक्ष्यपदेन स्वरूपनिर्दिष्टम्, लक्षणाशेन तु स्वेतरसमस्तव्यावृत्तिविवक्षिता, तेनाकारेण

---

शब्दवाच्यतापरत्वात् प्रकृष्टप्रकाशचन्द्रपदयो प्रवृत्तिनिमित्तभेदात् तदुभयवैशिष्ट्य वाक्यार्थस्स्यादित्यर्थ । अन्यथे ति । चन्द्रशब्दस्य चन्द्रपदवाच्यत्वपरत्वाभावे प्रकृष्टप्रकाशपदानतिरिक्तार्थकत्वाद्वैयर्थ्यं स्यादित्यर्थ । सर्वप्रकाशानामि ति । प्रकृष्टश्चासौ प्रकाशश्चेति कर्मधारयोऽत्र विवक्षित इति भाव । तस्ये ति । चन्द्रस्य प्रकाशत्वमात्रलक्षणकतया इदानीमभिधानादित्यर्थ । प्रकृष्टप्रकाशश्चन्द्र इति बहुव्रीहिपक्षे तु प्रकाशवैशिष्ट्यबोधन स्पष्टम् । स्वरूपनिर्दिष्टमि ति । स्वरूपमात्रमित्यर्थ । व्यावृत्तिर्विवक्षिते ति । तथा च लक्षणवैशिष्ट्यस्याविवक्षितत्वान्नाखण्डार्थत्वहानिरित्यभिमान । ननु तथापि व्यावृत्तिवैशिष्ट्यबोधनात् सखण्डार्थत्वमित्यरुचेराह तेनाकारेणे ति । व्यावृत्तित्वाकारेणेत्यर्थ । व्यावृत्तित्व च स्वरूपवदेव तात्पर्यविषयतावच्छेदकतया विवक्षितम्, न तु बोध्यतया, ततश्च व्यावृत्तित्ववैशिष्ट्यबोधनेन सखण्डार्थता, एवञ्च स्वरूपात्मकव्यावृत्तिपरमिति पर्यवसितार्थ, तथा च लक्षण

स्वरूपमेववा, अस्मिन् ज्योतिर्मण्डले कश्चन्द्रः, एषु द्रव्येषु का पृथिवीत्यादि वदतां तत्तत्स्वरूपविषयो हि प्रश्नः, तत्र यदि प्रतिवचनं प्रकारविषयं स्यात्तदान्यप्रश्ने तदन्योक्तिरित्यसङ्गतिः स्यात् । तस्मात्स्वरूपमेव वाक्यार्थः, तत्र लक्षण स्वरूपविशेषणवैशिष्ट्यमविवक्षितम् । एवं विशेषणलक्षणत्यागात् विशेष्यापरित्यागाच्च जहदजहल्लक्षणया ब्रह्मैवात्र प्रतिपाद्यम् । यद्वा कल्पितसत्तादिसामान्यस्यैव वाचकाः । जहल्लक्षणयैवैते प्रागुक्तब्रह्मबोधकाः ॥ इति । — तन्न, अविवक्षितमिति किं अबोध्यत्वं विवक्षितं ? उतान्यार्थबोध्यत्वं ? नाद्यः, लक्षणवैशिष्ट्याप्रतिपत्तौ व्यावृत्तेरप्यसिद्धेः । न हि गन्धवत्त्वमन्तरेण पृथिव्यां व्यावृत्तिप्रतीतिरस्ति । न द्वितीयः, तदानीमपि तद्विशिष्टत्वस्यानपायात् । अतस्सर्वत्र लक्षणवाक्येषु लक्षणान्वय-

---

वाक्यजन्यस्वरूपात्मकव्यावृत्तिधीरेव इतराभेदसंशयादिनिवृत्तिहेतुरिति भावः । लक्षणांशेन लक्षणस्य प्रतीयमानत्वात् कथ तत्र तात्पर्याभाव इत्याशङ्क्य स्वरूपस्यैव प्रश्नविषयत्वादुत्तरमपि तत्परमेव युक्तम्, व्यावृत्तिश्च स्वरूपमेवेति न तत्परत्वेपि स्वरूपपरत्वहानिरित्यभिप्रायेणाह अस्मिन् ज्योतिर्मण्डल इति। ननु लक्ष्यपदेनापि विशेषणस्य प्रतीतेः कथ वाक्यस्य स्वरूपमात्रपरता, स्वरूपस्य वाच्यत्वात् कथ तल्लक्षणेत्यत्राह एवं विशेषणे ति । लक्ष्यलक्षणपदाभ्या विशेषणलक्षणयोस्त्यागादित्यर्थः । अन्यार्थे ति । व्यावृत्तिप्रतीत्यर्थमित्यर्थः । लक्षणवैशिष्ट्ये ति । स्वरूपस्य व्यावृत्तित्वेपि अभेदसंशयनिवृत्तिहेतुः तज्ज्ञान लक्षणवाक्येनैवेति नियमो लक्षणवाक्येन लक्षणवैशिष्ट्यप्रतिपादनप्रयुक्त एवेति भावः । तद्विशिष्टत्वस्य— तद्विशिष्टबोधकत्वस्य । अत स्सर्वत्रे ति । यद्यपि स्वमते व्यावृत्तिः प्रयोजनमेव, न तु शब्दार्थः, तथापि तेन व्यावृत्तेश्शब्दार्थतयाभिधानाल्लक्षणवैशिष्ट्य विना व्यावृत्त्यसिद्धेस्तदर्थत्वस्याप्यावश्यकत्वात् तदुभयवैशिष्ट्य विशिष्टविषयेभ्यो वाक्यान्तरेभ्योऽधिकमेव,

स्तद्विरोधिव्यावृत्तिश्चाभिमतेऽइति तदुभयवैशिष्ट्यं वाक्यान्तरेभ्योऽधिकमेव । अतस्सर्वेष्वपि वाक्येषु वैशिष्ट्यं दुस्त्यजमेव । प्रतिप्रयोगश्च — विगीतं वाक्यं विशिष्टपरं वाक्यत्वात्, व्यधिकरणवाक्यवदिति । इदं चानुमानं सर्वलोकप्रतीत्यनुगुणत्वाद्विशेषणक्लेशरहितत्वाच्चाधिकबलमेवेति अनेन पूर्वयोर्बाधः प्रतिरोधो वा । न च जरद्गवादिवाक्यैरनैकान्त्यम्, आकाङ्क्षादित्रयवत एव वाक्यत्वेन विवक्षितत्वात् । यद्वा- प्रमाणत्वे सतीति विशेषणमिह प्रथममेव

---

तेषां व्यावृत्तिपरत्वाभावादिति भावः । यद्यपि व्यावृत्तिस्स्वरूपमेवेति तेनोक्तम्, तथापि स्वरूपपरत्वस्य सर्ववाक्यसाधारण्यात् स्वरूपात्मकव्यावृत्तिपरत्वाविशेषेण लक्षणवाक्यजन्यमेव ज्ञानमभेदसंशयादिनिवर्तकमिति विशेषस्यापि वक्तुमशक्यत्वाल्लक्षणं व्यावृत्तिपरमिति प्रसिद्धिः स्वरूपातिरिक्तव्यावृत्तिपरत्वेनैव वाच्येति व्यावृत्तिवैशिष्ट्य वाक्यान्तरेभ्योऽधिकमित्युक्तम् । इदं चे ति । लोके हि लक्षणवाक्यजन्या प्रतीतिर्विशिष्टविषयेत्येव प्रतीयते, तेन सा प्रतीतिर्भ्रान्तिरिति कल्पनीयम्, अस्मिन्मते तु तत्प्रतीतेर्भ्रान्तित्वकल्पनात् तदानुगुण्यमेतदनुमानस्य, किञ्च— वाक्यत्वस्य विशिष्टपरत्वव्याप्यत्वे लाघवम्, समानाधिकरणवाक्यत्वस्याखण्डार्थत्वव्याप्यत्वे गौरवमित्यर्थः । पूर्वयोरि ति । समानाधिकरणवाक्यत्वलक्षणवाक्यत्वयोरित्यर्थः । प्रतिरोध इति । उक्तयुक्तिप्रतिसन्धान इति भावः । नचे ति । प्रमापकत्वगर्भं साध्यम्, तच्च जरद्गवादौ नास्तीति भावः । यद्वे ति । नचैव विशेष्यवैयर्थ्यमिति वाच्यम्, चक्षुरादौ व्यभिचारात्; विशिष्टपरत्वस्य विशिष्टतात्पर्यकत्वरूपस्य तत्राभावात्, पूर्वमविशेषितस्य पश्चाद्विशेषणे हेत्वन्तरं स्यादिति प्रथममेवे त्युक्तम् । ननु तर्हि विशेषणप्रक्षेपस्य तत्रापि समानत्वात् कथं तद्राहितत्वेन पूर्वोक्ताधिकबलतेत्याशङ्क्य, परेणाप्यखण्डार्थप्रमापकत्वस्यैव साधनात्तस्य चायोग्यसमानाधिकरणवाक्यलक्षणवाक्ययोरभावाद्व्यभिचारात् तेनापीदं विशेषणं देयमेवे-

प्रक्षेप्यम् , तथाप्यनेन पूर्वयोर्बाधः प्रतिरोधो वा दुर्वारः । न च व्यधिकरणवाक्यत्वमत्रोपाधिः, लोके वेदे च विशिष्टपरसमानाधिकरणवाक्यदृष्टेस्तस्य साध्यसमव्याप्त्यभावात् । किञ्चानयोरनुमानयोर्विपक्षे बाधकाभावात् अप्रयोजकत्वं च । नन्वस्ति विपक्षे बाधकम् ; तथा हि- यदि विगीतं वाक्यं विशिष्टपरं स्यात्तदा निर्गुणवाक्यविरोधप्रसङ्ग इति चेत् ; न, निर्गुणवाक्यानां दोषनिषेधपरत्वस्थापनात । विशेषणविशेष्ययोर्विशेषणानां च मिथो-भेदादेकार्थपरताभङ्ग इति चेत् ; किं प्रधानभूतैकार्थपरता भज्येत ?

---

त्यभिप्रेत्याह **तथापी ति** । तेनाखण्डार्थबोधकत्वमाने साधिते सिद्धान्तिनापि विशिष्टबोधकत्वमेव साध्यत इति न जरद्गवादावयोग्ये व्यभिचारः । ननु तथापि घटः कर्मत्वमित्यादौ स्वरूपायोग्ये व्यभिचारात् प्रमापकत्वे सतीति विशेषण प्रक्षेप्यमेव, न च तदर्थं साकाङ्क्षत्वमेव विशेषणम्, तथापि द्वयोस्तुल्यत्वेन सिद्धान्तहेतोरुक्ताधिकबलत्वासम्भवात् ; इति चेत् ; न, एवमपि सर्वलोकप्रतीत्यानुगुण्यस्यानपायात् । किञ्च- इतरव्यावृत्तिबुद्धिहेतुज्ञानविषय-प्रतिपादकत्वापेक्षया भिन्नप्रवृत्तिनिमित्तत्वे सति साधारणे विशेष्यप्रतिपादक-त्वापेक्षया च प्रमापकत्वस्यैव लघुत्वात् । किञ्चैव अनुभावकत्वमेव विशे-षणमस्तु, प्रमापकत्वापेक्षया लघुत्वात् । अथवैतदपि मास्तु, शाब्दज्ञान-जनकत्वमेव विशेषणमस्तु, शाब्दत्वस्य जातित्वेनानुभवत्वापेक्षया लघुत्वात् । वस्तुतस्तु प्रागुक्तरीत्या सोऽयमित्यप्रमाणवाक्यस्याखण्डार्थबोधकत्वासम्भवात् प्रमाणत्वे सतीति विशेषण तवाप्यावश्यकम् ; समानाधिकरणत्वं लक्षणप्रति-पादकत्व चाधिकमिति तद्विशेषणराहित्यमेवाधिकबलत्वम् ; तदेतत्सर्वमभि-प्रेत्योक्त **तथाप्यनेन पूर्वयोर्बाध इति** । **समव्याप्त्यभावादि ति** । साध्य-व्यापकत्वाभावादिति भावः । **निर्गुणे ति** । विशेषणस्य तत्त्वावेदकवेद्यत्वे सत्यत्वावश्यम्भावादिति भावः । **विशेषणविशेष्ययो रिति** । विगीतं वाक्य विशिष्टपर स्यात् तदेत्यनुषङ्गः । **प्रधानभूते ति** । एकविशेष्यकत्वं भज्येते-

उत विशेषणविशेष्यतादात्म्यलक्षणे कार्यपरता? उत निर्विशेषे कार्यपरता? न प्रथम, प्रसञ्जकप्रसञ्जनीययोर्व्याप्त्यभावात्। न द्वितीयतृतीयौ, इष्टप्रसङ्गत्वेन दुष्टत्वात्। विशेषणविशेष्य तादात्म्यनिर्विशेषत्वयोरसिद्धत्वेन विपर्यये पर्यवसानासिद्धेश्च। द्वितीयस्य विपर्यये पर्यवसानं तु क्षपणकगन्धिवेदान्तिमतमुत्थापयत् भवतोपसिद्धान्ततामावहेत्।

ननु विशेषणभेदेन विशिष्टताभेदात् विशेष्यभेद इति प्रसङ्गार्थ इति चेत्? कोऽयं विशिष्टताभेदो नाम? किं विशेषणभेद एव? उत तत्सम्बन्धभेद? उत व्यावृत्तिभेद? यद्वा तदधीनबुद्धिभेद? अथवा विशेष्यभेद एव? नाद्य, व्याप्त्यभावस्योक्तत्वात्, विशेषणभेदेन विशिष्टताभेदादित्यनयोरैकार्थ्यप्रसङ्गेन हेतुफलभावासिद्धेश्च। न द्वितीय, अव्याप्तेरेव, एकस्य विशेष्यस्यानेक विशेषणसम्बन्धभेदादनेकत्वमिति स्ववचनविरोधाच्च। प्रसञ्जनीय

---

त्यर्थ। विशेषणे ति। विशेषणविशेष्यभेदस्य विशेषणविशेष्यतादात्म्य प्रत्येव भञ्जकत्वादेतत्कोट्युत्थितिरिति। निर्विशेष ति। विशेषणविशेष्यभेदस्य विशेषणाना मिथो भेदस्य च तत्वावेदकवेद्यत्वे सत्यत्वापातेनाद्वितीयत्वभञ्जकत्वा देतत्कोट्युत्थितिरिति। व्याप्त्यभावादि ति। देवदत्तश्श्यामो युवेत्यादौ व्यभिचारादप्रयोजकत्वाच्चेति भाव। द्वितीयतृतीययोर्यथाक्रमभङ्गा तदवैकल्यमप्याह विशेषणविशेष्ये त्यादिना। प्रथमपक्षमवोपोद्बलयन् पुन शङ्कते ननु विशेषणभेदेने ति। तदधीने ति। विशेषणभेदाधीनेत्यर्थ। व्याप्त्यभावस्योक्तत्वादि ति। विशेषणभेदे विशेष्यभेद इतिर्व्याप्तिर्न स्यादित्युक्तत्वादित्यर्थ। अव्याप्तेरेव ति। विशेषणसम्बन्धभेदे विशेष्यभेद इति व्याप्तिर्नास्तीत्यर्थ। स्ववचने ति। एकत्वावच्छिन्नधर्मिणमनूद्य अनेकत्वप्रतिपादने स्ववचनविरोध इत्यर्थ। प्रसञ्जनीये ति। न ह्येकस्मिन्ननेकत्व साध

विपर्ययेण प्रसञ्जकविपर्यये तात्पर्यात् अविरोध इति चेत्; एकश्चायम्, अतोऽनेकविशेषणसम्बन्धोऽस्य नास्तीति स स्यात्; तत्र च श्यामत्वाद्यनेकविशेषणविशिष्टतयोपलभ्यमाने देवदत्तादौ व्यभिचार एव। एकत्वमनेकविशेषणसम्बन्धाभावश्चेत्युभयमेकत्रोपसंहृियमाणमेकस्यानेकसम्बन्धो नोपपद्यत इति वदतः स्ववचनविरोधमावहति। न तृतीयः, तत्तद्विशेषणसबन्धभेदैर्यथास्वं विरोधिव्यावृत्तिभेदे विवक्षितेऽनेकव्यावृत्तीनामेकत्र सम्भवात्, अविरोधिव्यावृत्तिभेदस्य त्वसिद्धत्वात्। न हि नैल्यमुत्पलादपि व्यावर्तयेत्, तथा सति घटः पट इत्यादिवन्नीलमुत्पलमित्यादिसमानाधिकरणवाक्यानामनन्वयप्रसंगाच्च। भेदकं विशेषणं भेद्यं विशेष्यमिति स्थिते सङ्कोचकप्रत्यक्षाद्यसम्भवे स्वेतरसमस्तविशेषणाश्रयाद्भेदस्सिद्ध्येदिति चेत्;

---

यामः, किन्त्वापादयामः, तथा च एकत्वानुवादस्य प्रसञ्जनीयानेकत्वविपर्ययेणैकत्वेन प्रसञ्जकस्यानेकविशेषणसम्बन्धस्य विपर्ययसाधने तात्पर्यान्न स्ववचनविरोध इत्यर्थः। प्रकारान्तरेण स्ववचनविरोधमप्याह एकत्व मिति। प्रसज्यप्रसञ्जकविपर्ययात्मकैकत्वानेकविशेषणसम्बन्धाभावरूपविशेषणद्वयेन एकस्यैव योगात् इद वचन स्वेनैव व्याहतमित्यर्थः। तत्तद्विशेषणैस्तत्तद्विशेषणानाश्रयप्रतियोगिकव्यावृत्तिभेदमात्र अपाद्यते? उत तत्तद्विशेषणाविरोधिधर्माश्रयप्रतियोगिकव्यावृत्तिभेदोपीति विकल्पमभिप्रेत्याद्ये दोषमाह तत्तद्विशेषणे ति। द्वितीये दोषमाह अविरोधी ति। तत्तद्विशेषणाविरोध्याश्रयव्यावृत्तेस्तद्विशेषणेनासाध्यतया तादृशव्यावृत्तिभेदासिद्धेरित्यर्थः। न हि नैल्य मिति। हिशब्देन लोकप्रसिद्धमेतदिति सूच्यते। अविरोधिव्यावृत्तिभेदस्यासिद्धौ हेत्वन्तरमाह तथासती ति। अविरोधिव्यावृत्तिभेदसिद्धावित्यर्थः। विशेषणाना भेदकत्वस्यौत्सर्गिकत्वात् सत्यादिवाक्ये च प्रत्यक्षादिसङ्कोचकाभावात् सत्यत्वादिभिर्ज्ञानादिव्यावृत्तिरपि सिद्ध्येदित्याह भेदकमि ति। स्वेतरे ति। एकविशेषणविशिष्टतया प्रतीतौ

तर्हि तत एव विशेषणान्तरप्रयोग इव तदप्रयोगेपि स्वाश्रयभेदः किन्न सिद्ध्येत्? विरोधादिति चेत्; किमत्र मानम्? उपलम्भ इति चेत्; किं प्रत्यक्षादिजन्योयमुपलम्भः? उतैतद्वाक्यस्थसत्यादिपदजन्यः? न प्रथमः, शास्त्रैकसमधिगम्ये तदसम्भवात्। न द्वितीयः, अविशेषाद्विरोधिविशेषणान्तराश्रयादपि व्यावृत्त्यभावेन तत्तद्वाक्योदिताविरोधिसर्वविशेषणान्वयसिद्धेः। यदि चैकमेव विशेषणं स्वेतरसमस्ताश्रयाद्व्यावर्तयेत्, तदा विशेषणान्तरप्रयोगस्सर्वत्र

---

तदितरसमस्तविशेषणाश्रयात् भेदस्सिद्ध्येदित्यर्थः । ततएवे ति । भेदक विशेषणमित्यस्य एकोक्ते प्रमाणाभावादित्यर्थः । विशेषणान्तरे ति । यथा विशेषणान्तरप्रयोगे तदाश्रये एतद्विशेषणाश्रयात् भेदस्सिध्यति, तथा एतद्विशेषणप्रयोगेपि एतद्विशेषणेन एतद्विशेषणाश्रयात् भेदः किन्न सिद्ध्येदित्यर्थः । विरोधादि ति । सत्यत्वाद्याश्रये तद्भेदस्य वृत्त्यसम्भवादित्यर्थः । उपलम्भ इति । सत्यत्वादेरेव स्वाश्रयभेदाभावरूपतया सत्यत्वानुपलम्भ एव सत्यत्वाश्रये तद्भेदासम्भवे मानमित्यर्थः । एतद्वाक्यस्थे ति । अत्र वाक्यार्थोपलम्भ एव विवक्षितः, पदार्थस्मरणस्याप्रमाणत्वात् । अविशेषादि ति । यथा तद्विशेषणस्यावगमात्तदाश्रये तदाश्रयभेदो न सम्भवति तथा तेनैव विशेषणान्तरस्याप्यवगमात्तदाश्रयभेदश्च न सम्भवति, अन्यथा ब्रह्म सत्यज्ञानानन्दाद्यात्मकं न स्यात्, तथा च विशेषणस्य विरोधिविशेषणान्तराश्रयव्यावर्त्तकता, नत्वविरोधिविशेषणान्तराश्रयव्यावर्तकतापीत्येकस्मिन्नेव तत्तद्वाक्योदितानेकविशेषणान्वयस्सम्भवतीत्यर्थः । विशेषणान्तरप्रयोग इति । ज्ञानादिपदव्यावर्त्यजडादेरपि सत्यपदेन व्यावृत्तेरिति भावः । न च विरोधिव्यावर्त्तकत्वपक्षेपि सत्यपदेन यद्व्यावृत्तं तदेव ज्ञानपदेनापि व्यावर्त्यत इति ज्ञानपदवैयर्थ्यमिति वाच्यम्, सत्यपदेन जडव्यावृत्तिसिद्धावपि तेन रूपेण तद्व्यावृत्तेरसिद्धतया जडत्वाजडत्वसन्देहानिवृत्त्या तथा व्यावर्तकतया ज्ञानपदस्य सार्थकत्वात् । स्वेतरसमस्ताविशेषणाश्रयव्यावर्तकत्वपक्षे तु तद्विशेषणानाश्रयत्वात्तेनैवरूपेण यथा

निरर्थकं । तस्यापि चैकस्य निरसनीयत्वेन तत्प्रयोगोपि प्रतिकूलं "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनंवर" मिति न्यायात् । परस्परप्रवृत्तिनिमित्तप्रतिक्षेपोनेकपद प्रयोजनमिति चेत्, न, अनृतजडपरिच्छिन्नभिन्नतया गूढसौगत कूटस्थैर्व्याख्यातत्वात्, पदद्वयप्रयोगेणापि चरितार्थत्वाच्च तेनैव निश्शेषप्रतिपक्षेपसिद्धेः । यद्वा - विशेष्यपदमात्रमेव प्रयोक्तव्यम्,

---

व्यावर्तयति तथा विशेषणान्तराश्रयादपि तेनैव रूपेण व्यावर्तयेत् त्वदुक्तात्सङ्कोचकाभावादेव । किञ्च न वैयर्थ्यमात्रम्, प्रत्युत एतद्विशेषणस्यापि वैयर्थ्यापादकत्वात्प्रतिकूलश्चेत्याह तस्यापी ति । एतद्विशेषणस्यापि विशेषणान्तरेण निरसनाद्विशेषणान्तरप्रयोग प्रक्षालनादिति न्यायेन वैयर्थ्यापादक इत्यर्थ । ननु विशेषणान्तरनिरसनीयस्य प्रथमविशेषणस्य उपादान यदि सप्रयोजन न स्यात् तदा प्रक्षालनादिति न्यायमावहति, अत्र तु प्रथमविशेषण विशेषणान्तरप्रतिक्षेपार्थमेवेति तस्यापि न वैयर्थ्यमेवेति शङ्कते परस्परे ति । परस्परस्य प्रवृत्तिनिमित्तप्रतिक्षेप इत्यर्थ । परस्परव्यावृत्तप्रवृत्तिनिमित्तेति पाठे तु परस्पर व्यावृत्ते ये प्रवृत्तिनिमित्ते इत्यर्थ । प्रतिक्षेप्यत्वसिद्धये परस्परव्यावृत्तेति विशेषणद्वयस्यापि स्वेतराश्रयव्यावर्तकत्वे परस्परप्रवृत्तिनिमित्तप्रतिक्षेप सिद्धिरिति भाव । अनृते ति । अनृतजडपरिच्छिन्नभिन्नपरतया सत्यादिवाक्य व्याख्यातम्, न तु *सत्यज्ञानानन्तव्यावृत्तिपरतया, तथा व्याख्याने ब्रह्मणोप्यस* त्यत्वादिप्रसङ्गेन गूढसौगतत्वहानिप्रसङ्गादित्यर्थ । पदद्वये ति । ततश्च सत्य ज्ञानमनन्तमिति पदत्रये एक पद व्यर्थमिति भाव । विशेष्यपदमात्र मिति । ननु विशेष्यपदमिति ब्रह्मस्वरूपमात्रबोधक विवक्षितम्? उत उद्देश्यसमर्पक ब्रह्मपद वा? नाद्य, तथाविधपदाभावात्, सर्वस्यापि पदस्य सप्रवृत्तिनिमित्तत्वात्, न द्वितीय, ब्रह्मपदप्रतिपन्नब्रह्मत्वनिरासार्थतयैव विशेषणान्तरसार्थक्यादिति चेत्, न, परमते ब्रह्मपदस्य लक्षणया विशेष्यमात्रबोधक त्वात् । अतीन्द्रिय शब्दादन्येन विशेषणानामप्रसक्तेः । केनचिच्छब्देन वि-

प्रक्षालनादितिन्यायात् ; एकं पदमबोधकमिति चेत् ; न, उपलम्भविरोधात् । स्मृतिमात्रं स्मृत्यविशिष्टबोधमात्रं वा तेन जन्येतेति चेत् ? किमतः? तावतैव विशेष्यस्वरूपप्रकाशसिद्धेः तदतिरिक्तस्य च पदान्तरप्रयोगेपि भवता प्रक्षेपात् । विशेष्यपदमात्रप्रतिपन्नं स्वरूपं विशेषणविधिनिषेधसाधारणं प्रतीयेत, ततश्च संशयस्स्यादिति स्वयं विशेषणाभावनिर्णयाय विशेषणपदप्रयोग इति चेत्; हन्ताभावनिर्णयाय भावप्रतिपादनमिति महदिदमुपपादनमाहात्म्यमिति विपरीतनिर्णय एव ततस्स्यात् । विषं भुङ्क्ष्वेत्यादिवत्तात्पर्यपरीक्षया तदभावनिर्णय इति चेत् ; एवं विशेष्यपदमात्रप्रयोगेपि तात्पर्यपरीक्षया सर्वविशेषणशून्यत्वमुन्नीयताम् ।

---

तद्विशेषण प्रसज्य पदान्तरेण तद्व्यावृत्त्यर्थं विशेषणान्तरबोधने प्रक्षाळनादिति न्यायात् किमपि विशेषण नोपादेयमित्यर्थः । यद्वा– मात्रशब्देन विशेषणपदद्वयप्रयोगपक्षो व्यावर्तते, विशेष्यपदमिति च लक्ष्यसमर्पक ब्रह्मपदं विवक्षितम्, एकविशेषणपदसहितविशेष्यपदमेव सर्वं व्यावर्तयिष्यति, किमितरविशेषणैरित्यर्थः । स्मृत्यविशिष्टबोधे ति । पदादप्यनुभवमभ्युपगम्योक्तम् । यद्वा– विभक्तिसमभिव्याहारादनुभानत्वसम्भवादुक्तम् । एकत्वन्त्वविवक्षितमिति भावः । तावतैवे ति । न च स्मृतेरज्ञानानिवर्तकत्वादपरोक्षज्ञानार्थं पदान्तरमिति वाच्यम्, विषयस्वभावकृतापरोक्ष्यवादे स्मृतेरप्यापरोक्ष्यादिति भावः । ननु विशेषणप्रकाशार्थं पदान्तरमित्यत्राह तदतिरिक्तस्ये ति । तदभावनिर्णयायैव तद्विशेषणप्रयोग इति शङ्कते विशेष्यपदमाने ति । किं भावप्रतिपादनमुखेनाभावनिर्णयो विवक्षितः ? उत साक्षादेव ? आद्ये दोषमाह हन्ते ति । तदभावनिर्णयाय तत्प्रतिपादनमित्यसङ्गतम्, विरोधात् विशिष्टपरत्वापाताच्चेति भावः । किञ्चाभावप्रतिपादनासम्भवात् तद्विपरीतसत्यत्वादिनिर्णय एव स्यादित्याह इति विपरीते ति । द्वितीयमाशङ्कते विषमि ति । लक्षणया तदभावनिर्णय इति भावः । सर्वविशेषणशून्यत्वम् –

तात्पर्यनिश्चायकं तत्र नास्तीति चेत्? अहो विशेषणपदप्रयोगे विशेषणाभावतात्पर्यं निश्चीयते, तदप्रयोगे तु नेति सम्यक्परीक्षकत्वम्। देवदत्तोयमित्यादौ विशेषणपदाप्रयोगेपि तद्विशिष्टत्वं प्रतीयत इति सन्देहानपाय इति चेत्; श्यामोयुवेत्यादिविशेषणपदप्रयोगेपि तद्विशिष्टत्वं प्रतीयत इति सन्देहानपाय एव। प्रतीतमपि युक्त्या निरस्यत इति चेत्; अप्रतीतं किन्निरसितुं युक्त्या न शक्यते? नूनमुपकारकमेवापकारकं मन्यसे। प्रतियोगिस्मृत्यभावे तत्प्रतिक्षेपो न शक्यत इति चेत्; न, साधारणधर्ममात्रप्रतीत्यैव धर्मिणां बुद्ध्यधिरोहात्। अन्यथा संशयस्याप्यनुत्थाने सिद्धमेकपदेनैव निर्विशेषम्, किमनेकैरजागळस्तनायमानैस्सत्यादिपदैः। नापि चतुर्थः, स हि बुद्धिस्वरूपभेदमात्रं वा? ग्राहकविशेषाधीनप्रत्यक्षादिभेदो वा? ग्राह्याकारभेदो वा? आद्ये धारावाहिकबुद्धौ वस्तुनः क्षणिकत्व-

---

लक्षणया सर्वविशेषणशून्यत्वप्रतिपादकत्वमित्यर्थः। तत्रे ति। विशेषणपदाप्रयोगो न तदभावतात्पर्यनिश्चायकः, अतः प्रकृते विशेष्यपदमात्रप्रयोगे विशेषणतदभावसन्देह एवेति शङ्कते देवदत्त इत्यादिना। तद्विशिष्टत्वमि ति। अतो न तदभावतात्पर्यमिति भावः। विपरीतनिर्णय एव स्यादिति यत् पूर्वमुक्तं तत्र शङ्कते प्रतीतमपी ति। नूनमि ति। विहितस्य निषेधायोगादप्रतीतत्वमुपकारकमिति भावः। शङ्कते प्रतियोगी ति। तथा च प्रतियोगिस्मृत्यर्थमेव तन्निर्णयोपेक्षित इति भावः। साधारणे ति। अभावाश्रयविशेषितधर्ममात्रप्रतिपत्त्यैत्यर्थः। बुध्यधिरोहादि ति। स्मृत्यधिरोहादित्यर्थः। तथा च स्मृत्यर्थं न तन्निष्ठतयाऽनुभवापेक्षेति भावः। अन्यथे ति। तन्निष्ठतयानुभवस्यैव स्मृतिहेतुत्वे कस्यापि विशेषणपदस्याभावे तन्निष्ठतयानुभवाभावेन कोटिस्मृतेरभावात् संशयानुत्थाने सन्देहनिराकरणार्थं विशेषणपदस्यानपेक्षितत्वात् विशेष्यपदेनैव निर्विशेषसिद्धिरित्यर्थः। ग्राहके ति। करणविशेषाधीनेत्यर्थः। आद्य इति। यद्यपि बुद्धिभेदा-

प्रसङ्गः । अभिज्ञाप्रत्यभिज्ञयोर्भिन्नविषयत्वेन क्षणिकत्ववादिसम्मतसर्वप्रत्यभिज्ञाप्रामाण्यभङ्गप्रसङ्गश्च । अतिरिक्तस्त्वयं विशेषः, स्मृत्यनुभवयोर्भिन्नविषयत्वप्रसङ्गश्च । एवं वादिप्रतिवादिशिष्याचार्यबुद्धीनामेकविषयत्वाभावात्परस्परव्यवहारानभिज्ञतया कथाप्रवृत्त्यादिभङ्गप्रसङ्गश्च । एतेनात्मख्यातिवादस्तदनुविधायिविषयान्तःकरणवृत्त्यध्यासवादश्च निर्मूलः । अत एव न द्वितीयः । स्वराद्यनुमितपुत्रादेः पूर्वानुभूतान्यत्वप्रसङ्गश्च । तथा च श्रवणमनननिदिध्यासनादीनां भिन्नविषयता स्यात् । तृतीयेपि ग्राह्याकारमात्रं विवक्षितम्? विरुद्धग्राह्याकारभेदो वा? पूर्वत्र उक्तनयेन विशेष्यभेदासिद्धिः, एकस्यैवानेकविशेषणविशिष्टताग्रहणात् । अन्यथा व्यावहारिकस्यापि विरुद्धाविरुद्धधर्मव्यवस्थापनस्यासिद्धिप्रसङ्गात् । उत्तरोपि प्रागुक्तनयेनासिद्ध एव । तथा सति-

---

द्विशेष्यभेदमात्रमायाति – तस्य क्षणिकत्वसम्भवात्; तथापि स्थायित्वे अनेकघटानामेकत्र एकदा सत्त्वे उपलब्धेः प्रतिघातादेश्च प्रसङ्गात् तत्तज्ज्ञानसमयमात्रस्थायित्वं वाच्यम्, ततश्च क्षणिकत्वमित्याशयः । **सम्मते** ति भङ्गस्य विशेषणम् । सौगताद्विशेषमाह **अतिरिक्त** इति । अयं वक्ष्यमाणः । **अतएवे** ति । अभिज्ञाप्रत्यभिज्ञास्मृत्यनुभवादिविषयाणां भेदप्रसङ्गादेवेत्यर्थः । ननु तदधीनबुद्धिभेद इति चतुर्थकोटौ तदधीनेत्यस्य विशेषणभेदाधीनेति तात्पर्यः, ततश्च वृत्तिभेदस्य प्रत्यक्षादिभेदस्य च विशेषणभेदाधीनत्वाभावात् कथमनयोः कल्पयोरुत्थानम्? कथं च धारावाहिकज्ञानाभिज्ञादिषु दोषोद्भावनम्? तत्र विशेषणभेदाभावात्; इति चेत्, इत्थम्, बुद्धिभेदमात्रं तत्र विशेष्यभेदप्रयोजकतया विवक्षितम्, विशेषणभेदाधीनत्वं तु प्रकृताभिप्रायेण तदुपपादकतया विवक्षितम्, अतो न दोषः । **ग्राह्याकारमात्र** मिति । ग्राह्याकारभेदमात्रमित्यर्थः । **उक्तनयेने** ति । अनेकव्यावृत्तीनामेकत्र सम्भवादिति व्यावृत्तिभेदकोद्भूतनयेनेत्यर्थः । **प्रागुक्ते** ति । प्रागुक्ताविरोधि–

त्यत्र तत्त्वमाकारयोरविरोधस्तु सामानाधिकरण्यवादे द्रष्टव्य । नापि पञ्चम, विशिष्टताभेदाद्विशेष्यभेद इति हेतुसाध्यभावा सिद्धिप्रसङ्गात् । पर्यायद्वारा पर्वक्रमेण बुध्यारोहणमात्रार्थमिदमिति चेत्, तर्हि विशेषणभेदाद्विशेष्यभेद इत्येतावदेवोक्त भवति, तच व्याप्त्यभावादिना प्रथममेव दत्तोत्तरम् । अस्तु तर्हि परस्पर-समवायप्रसङ्गो विपक्षे दण्ड । तथाहि - सर्वे ह्रि वाक्य उद्देश्यो पादेयविभागवत्, ततश्च क्रमावश्यम्भाव, यौगपद्येन विशेषणा नामन्वये सत्युद्देश्योपादेयविभागासिद्धे, 'यद्वृत्तयोग प्राथम्यमि त्याद्युद्देश्यलक्षण' मित्याहु, ततश्च यदि विशेषणविशिष्टमुद्दिश्य विशेषणान्तर विधीयते तदोद्देश्यानुप्रविष्टविशेषणाशस्यापि विशे ष्याशस्येव विशेषणान्तरेण विशेष्यत्वप्रसङ्ग । एव विशेषणान्तर विशिष्टोद्देशेपीति, तन्न, सर्वेषा वाक्यानामुद्देश्योपादेयनियमाभावात्। सर्वस्याप्राप्तत्वे विशिष्टमेव विधेय निरणैषु 'यदाग्नेयोऽष्टाकपाल' इत्यादिषु । गत्यभावविषयो विशिष्टविधिरिति चेत्? किमत ?

---

व्यावृत्तिभेदवदित्यर्थ । पर्याये ति । विशेषणभेदाद्विशेष्यभेद इत्युक्तिर्विम तस्य बुद्धि सहसैव नाधिरोहति, अतो विशेषणभेदप्रयोज्यत्वेन सम्मर विशिष्टताभेदमापाद्य विशेष्यस्वरूपातिरिक्तविशिष्टताया अभावात् विशिष्टता भेदाद्विशेष्यभेद स्यादेवेत्यनेन तात्पर्येण विशेष्यभेदापादने बुद्धावधिरोह तीत्यर्थ । सर्वेह्री त्यादि । सर्वस्य वाक्यस्योद्देश्योपादेयविभागवत्त्वानियमा दुद्देश्यतायाश्च प्रथमाभिधानप्रयुक्तत्वात् प्रथमतरस्य च विशेषणेष्वविशेषेण तस्याप्युद्देश्यत्वावश्यम्भावादुद्देश्यान्वयिनो विधेयस्य उद्देश्ये विशेष्य इव तद्विशेषणेनाप्यन्वयप्रसङ्ग इत्यर्थ । नन्वेवमपि विधेये उद्देश्यविशेषणान्वयात् कथ परस्परसमवाय इत्यत्राह एवविशेषणान्तरे ति । 'प्राप्तस्यापि विशेष णस्ये' त्यादिवक्ष्यमाणाभिप्रायो बोद्धव्य । किमत इति । तावताप्युद्देश्यो

उद्देश्योपादेयविभागस्स्वरस इति चेत्? तथापि कृत्स्नस्याप्राप्तत्वे स एव गत्यभाव इति विशिष्टविधिर्भवति। अन्यथा न क्वचिदपि विशिष्टविधिस्स्वीकारः। अतो विशिष्टविधिस्थलेषु युगपदनेकविशेषणाविशिष्टैकप्रतीतिरनिवार्या। यत्र किंचिदुद्दिश्य किमपि विधीयते; न तत्रापि परस्परसमवायसिद्धिः, प्रथमन्तावत् परस्परमुद्देशासम्भवात्। प्राप्तोंऽश उद्देश्य एव अप्राप्तोंशो विधेय एवेति व्यवस्थापनात्। प्राप्तस्यापि विशेषणस्य विशेष्यान्वयप्रतिपत्त्यर्थमितरांशानुवादेन तदंशविधिस्स्वीकार्य इति चेन्न; - तद्विशिष्टानुवादेनैव तदन्वयप्रतीतिसिद्धेः। अत उद्देश्योपादेयभावस्य प्राप्तत्वाप्राप्तत्वनिबन्धनत्वान्नाभिधानदशायां क्रमापेक्षा। स्मृतिविमर्शयोस्तदपेक्षाया-

---

पादेयविभागनियमासिद्धेरित्यर्थः। उद्देश्ये ति। ततश्च बाधकाभावे सत्यागोऽनुपपन्न इति भावः। सत्यादिवाक्येपि कृत्स्नाप्राप्तिरूपस्योद्देश्योपादेयविभागबाधकस्य सत्त्वाद्विशिष्टविधिरेवेत्याह तथापी ति। अन्यथे ति। कृत्स्नस्याप्राप्तावपि उद्देश्योपादेयनियमाङ्गीकारे विशिष्टविधिमात्रोच्छेद इत्यर्थः। किञ्च अस्तूद्देश्योपादेयनियमः; तथापि न स्वरूपपरत्वसिद्धिः, तथा सति भेदाभावेन उद्देश्योपादेयनियमासिद्धेरित्यर्थः। प्रथमन्ताव दिति। यदुक्तं पूर्वपक्षादिना 'परस्परमुद्देश्योपादेयभावः पदार्थानां वक्तव्यः, ततश्च परस्परमभिधानक्रमो वक्तव्यः, ततश्च क्रमाविशेषात् विशेषणानामपि परस्परमुद्देश्योपादेयभावात् परस्परसमवायप्रसङ्गः' इति, तत्र प्रथमं परस्परमुद्देश्योपादेयत्वं न सम्भवतीति भावः। विहितस्यैवान्वयः; ततश्च प्राप्तस्यापि विशेषणस्य विशेष्यान्वयप्रतिपत्त्यर्थं तद्विशेषणविशिष्टानुवादेन प्राप्तस्यापि विशेषणस्य विधेः स्वीकार्यत्वात् परस्परोद्देश्योपादेयभावात् परस्परान्वयो दुर्वार इति शङ्कते प्राप्तस्यापी ति। तद्विशिष्टतानुवादेने ति। विशेष्यान्वये विहितत्वं प्रयोजकमिति भावः। अभिधानक्रमोपि नास्तीत्याह अत इति। अस्य विवरणम् उद्देश्ये ति। अभिधानदशा- वाक्यार्थज्ञानदशा, स्मृतिः— पदार्थस्मृतिः,

मपि प्रत्येकं स्मरणात् यथायोग्यं विमर्शाच्च न परस्परसमवाय प्रसङ्गावकाशः। 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षण' मिति तूच्चारणक्रमविषयम्, नाभिधानविषयम्। अत उद्देश्यांशगतविशेषणस्य तूपादेयविशेषणाधारत्वप्रसङ्ग इति च प्रत्युक्तम्। उद्देश्यपदवदुपादेयपदस्यापि विशेष्यसमवेतविशेषणबोधनव्युत्पत्तेर्यथाव्युत्पत्ति विवक्षितत्वात्प्रयोगाच्च। न हि 'दण्डी देवदत्तः कुण्डली' त्यत्र दण्डस्यापि कुण्डलित्वमनुन्मत्तोऽभिमन्येत ! ननूद्देश्यस्य व्याप्यत्वमुपादेयस्य व्यापकत्वं सर्वत्राभिमतम्, अस्त्वेवम्, तथापि यथा यो यो धूमवान् सोऽग्निमानित्यादिषु, असौ विशिष्टस्योद्देश्यत्वे

---

विमर्शस्यापि ज्ञाते उद्देश्यधर्मिणि विधेयान्वयविचाररूपत्वात् तत्रापि क्रमोऽस्तीति भावः। प्रत्येकमि ति। तथा च विशेषणान्तरविशिष्टे विशेषणान्तरान्वयप्रतीतिरस्तीति भावः। यथायोग्य मिति। विमर्शे क्रमे सत्यपि विशेषणे विशेषणान्वयस्यायोग्यत्वात् विशेष्य एव विशेषणान्तरान्वयप्रतीतिरिति भावः। उद्देश्योपादेयभावस्य व्यवस्थितत्वेन परस्परमुद्देश्यत्वाभावेप्येकस्या उद्देश्यतायाः सत्त्वात् तत्प्रयोजकस्य च क्रमस्य विशेष्य इव उद्देश्यविशेषणेप्यविशेषादुद्देश्यविशेषणे विधेयविशेषणाधारताप्रसङ्ग इति यच्चापि उद्देश्योपादेययोः क्रमाभावादेव निरस्तेत्याह अत इति। ननु उद्देश्यविधेययोः क्रमाभावेपि विशिष्टस्यैव उद्देश्यत्वात् तदन्तर्गते विशेषणे विशेष्य इव विधेयान्वयोऽवर्जनीय इत्यत्राह उद्देश्यपदव दिति। यथा उद्देश्यपद विधेयविशेषणे न स्वविशेषणान्वय बोधयति; किन्तु तद्विशेष्ये, तथाव्युत्पत्तेः; तथा विधेयपदमपि उद्देश्यपदवत् विशेष्यसमवेतमेव विशेषण बोधयति; न तु तद्विशेषणे, तथैव व्युत्पत्तेरित्यर्थः। विशेषणस्य विशेषणान्वयो वक्तृतात्पर्यनिरुद्धश्चेत्याह यथाव्युत्पत्ती ति। तात्पर्याभावमेव विवृणोति नही ति।

तस्याशस्याशेषस्याप्युपादेयांशेन व्याप्तिर्वक्तव्येति चेत्; अस्त्वेवम्, तथापि न समवायेन व्याप्तिर्वक्तव्या, यथाप्रमाण सम्बन्धनियमस्यैव व्याप्तिरूपत्वात्, न हि धूमोऽग्निव्याप्त इति धूमसमवेतोऽग्निः, ततोऽत्र विशेष्यस्याधारतया तत्सम्बन्धनियम, विशेषणस्य तु न स्वरूपेणैव विशेषणान्तरेणैकार्थसमवायतत्सम्बन्धनियम इति यथाप्रमाणमास्थीयताम्। एवन्तर्ह्युद्देश्यांशगतविशेषणस्य शारासारसादिवदुपलक्षणत्वमात्र स्यादिति चेत्, किं तेन? न हि तथात्वेपि निर्विशेषत्व सिद्ध्यति। लक्षणस्य बहिर्विषयत्वात्तत्सिद्धिरिति चेत्, न, तस्य बहिष्ठस्याप्युपादेयस्य तन्निष्ठतया निर्विशेषत्वासिद्धेः; नचोपलक्षण सर्वं बहिष्ठमिति नियमः, गोत्वपृथिवीत्वाद्युपलक्षणसास्नादिमत्त्व गन्धवत्त्वादेर्बहिष्ठत्वाभावात्। न च सारसादिकमपि बहिष्ठम्,

---

तस्याशस्ये ति। तस्य विशिष्टात्मन उद्देश्यस्य, योऽशः विशेषणविशेष्यात्मकः, तस्याशेषस्येत्यर्थः। उपादेयांशेन– विधेयविशेषणेनेत्यर्थः। उद्देश्यस्योपादेय स्यान्यस्यापि नोद्देश्योपादेयनियमः, नचैतावता व्याप्यत्वाभाव नियममात्रस्यैव व्याप्तित्वात्, अन्यथा धूमेपि वह्निव्याप्ति न स्यात्, तस्माद्यथा प्रमाणमुद्देश्यविशेष्यस्याधारतया विधेयविशेषणान्वयनियमः उद्देश्यविशेषणस्य विधेयविशेषणेन सामानाधिकरण्येनान्वयनियम इत्यास्थेयमित्याह अस्त्वेवमि ति। नस्वरूपेणैवे ति। तत्सम्बन्धनियम इत्यनुषङ्गः। विशेषणान्तरेणेत्यर्थः। प्राक् विन्न्यति शेषः। एवन्तर्ही ति। उद्देश्यविशेषणस्य विधेयविशेषणाना श्रयत्वे च द्रव्यभेदात्त्वाद्यनाश्रययोः शारासारसयोरिव उपलक्षणत्वमेव स्यात्, न तु घट पटयत्वादाविव घटत्वादेर्विधेयान्वयितया विशेषणत्वमित्यर्थः। उपलक्षणत्वमात्र स्यादिति। तथा च निर्विशेषत्व सिद्धमित्यभिमानः। शङ्कते लक्षणस्ये ति। बहिर्विषयत्वादि ति। विषयात् बहि बहिर्विषय इत्यव्ययी भाव, विशेष्यगतत्वाभावादित्यर्थं। तस्य उद्देश्यविशेषणस्येत्यर्थः। उद्देश्य विशेषणेनापि सविशेषत्वमाह नचे ति। एव क्वचिदुपलक्षणस्य बहिष्ठत्वमङ्गीकृत्योक्तम्, इदानीं काप्युपलक्षणस्य बहिष्ठत्वमेत्याह नचसारसादिकमि ति।

संयोगादिमत्त्वात्; अन्यथा सम्बन्धाभावेन देवदत्तक्षेत्राद्युपलक्षणत्वासम्भवात्; असम्बन्धमुपलक्षयन्न कस्यचिदेवोपलक्षणं स्यात्; अपि त्वसम्बन्धाविशेषात् सर्वस्यापि स्याद्वा न वा। कस्यचिदुपलक्षणस्य सम्बन्धाभावे वाक्यस्यानन्वयप्रसङ्गश्च। एतेन चन्द्राद्युपलक्षणशाखादिकमपि निर्व्यूढम्। न हि साध्यसम्बन्धिनि तमुपलक्षयति; तस्यास्सर्वोपलक्षकत्वप्रसङ्गात् निर्णयासिद्धेः। सर्वस्य तदुपलक्षणत्वं तदानीमेव स्यादित्यतिप्रसङ्गेन सत्त्वासम्भवात्। कस्तर्हि तत्सम्बन्धः यस्तन्निर्देशविवक्षितः? स एव किमिति सौहृदेन पृच्छाम इति चेत्, शाखाग्रे चन्द्र इति वदन्तो द्विविधाः, प्रतीतिमात्रतन्त्राः निरूपकाश्च। तत्र पूर्वे व्याप्तिसिद्धं संयोगादिकमुपजीव्य प्रयुञ्जते, इतरे तु तदार्जवदेशलक्षणविवक्षयेति। अतः पारंपर्येण सम्बन्धश्शाखायामपि सिद्धः। तादृशार्जवादिसम्बन्धस्साक्षात्सम्बन्धभ्रमेपि भ्रमकारणतयाऽपेक्षितत्वात् नापैतीति भ्राम्यत्प्रयोगेपि सम्बन्धमात्रसत्यत्वसिद्धिः। अस्तु तर्हि विशेष्यं न विशेषणान्तराधिकरणम्, उद्देश्यपदप्रतिपन्नत्वात् तत्पदोपात्तविशे-

---

वाक्यस्ये ति। स देवदत्तकेदारो यत्र सारस इत्यादेरित्यर्थः। कुतः सर्वोपलक्षणत्वप्रसङ्ग इत्याकाङ्क्षां व्युदस्यन् नहीत्यादिनोक्तमेवार्थं विवृणोति निर्णये त्यादिना। असम्बन्धाविशेषेण लक्ष्यविशेषनिर्णयासम्भवात् युगपदेव सर्वस्य तदुपलक्षकत्वं स्यादित्येवरूपेणातिप्रसङ्गेन असम्बन्धिन्याश्शाखायाश्चन्द्रोपलक्षणत्वासम्भवादित्यर्थः। यस्तदि ति। लोकसिद्धत्वादनिरुक्तोपि दुरपह्नव इत्यर्थः। अस्तुतर्ही ति। तद्वाक्यस्थोद्देश्यपदोपात्तविशेष्यं तद्वाक्यस्थविधेयपदेन न स्वविशेषणान्वयितयानुभाव्यम्, तद्वाक्यस्थोद्देश्यपदोपात्तत्वात्; तत्पदोपात्तविशेषणवत्; भूतले घट इत्यादिव्यधिकरणवाक्यस्थविधेयदविशेष्ये पटादौ अज्ञातो बाध इत्यत उक्तं तद्वाक्यस्थेत्यादि। यथाश्रुते परमते समानाधिकरणवाक्यस्थत्वेनाभिमतविशेष्यस्वरूपमात्रस्यापि वस्तुतो विशेषणान्तरयोगात्

पणत्वादिति चेत्; न, प्रागुक्तोपलम्भविरोधादिदूषणानामनिवार्यत्वात् तथाविधवाक्यानां सर्वेषां प्रामाण्यप्रसङ्गात्। त्वदुक्तेनैव हेतुना त्वदुक्तदृष्टान्तवदेव विशेष्यं न पदान्तरबोद्ध्यमित्यतिप्रसङ्गाच्च। एतेन युगपद्बोधने विशेष्यवत् प्रातिपदिकार्थैक्यपरसमानविभक्तिसामर्थ्यादेव विशेषणानां मिथो विशेषणान्तरैर्विशेष्येण च तादात्म्यप्रसङ्गोऽपि प्रत्युक्तः। न हि पदद्वयप्रतिपन्नविशेष्यैक्यमात्रात्तत्सिद्धिः, भवत्पक्षे सगुणब्रह्मवाक्यपर्यालोचनेन व्याप्तिविरोधात्। न च सगुणसमानाधिकरणवाक्यस्य प्रातिपदिकार्थैक्ये

---

याप इत्यनुभाव्यत्वपर्यन्तम्। व्यधिकरणवाक्यस्थोद्देश्यपदविशेष्ये तद्विशेषणान्वयितयाऽनुभाव्ये व्यभिचार इति विधेयपदम्। व्यधिकरणवाक्यस्थपदेन विशेषणवत्त्या बोध्ये विशेष्ये व्यभिचारवारणाय हेतौ तद्वाक्यस्थेति। प्रागुक्ते ति। स्वोक्तविशिष्टपरत्वानुमानस्य सर्वलोकप्रतीत्यनुगुणत्वेनाधिकबलत्वं प्रागुक्तम्, तत्रैव परकीयानुमानस्योपलम्भविरोध इत्युक्तं भवति। तथा च स एवात्राप्युपलम्भविरोध इत्यर्थः। आदिशब्देन पदान्तरवैयर्थ्यादि गृह्यते। तथाविधे ति। विशिष्टार्थपराणां देवदत्त श्याम इत्यादिवाक्यानामित्यर्थः। तथा च तद्वाक्यविशेषे व्यभिचार इति भावः। आभाससमानयोगक्षेमत्वमाह त्वदुक्ते ति। विशेषणान्तरै रिति। एतद्वाक्यप्रतिपन्नस्य विशेषणस्य समानाधिकरणवाक्यान्तरेऽपि प्रतिपादने तद्वाक्यप्रतिपन्नविशेषणान्तरैरपि एतद्वाक्यप्रतिपाद्यविशेषणानामैक्यं स्यादित्यर्थः। किमत्र समानविभक्तिकपदबोध्यत्वमात्रेण विशेष्यवद्विशेषणानामैक्यं स्यादिति विवक्षितम्? किं वा समानविभक्तेः प्रातिपदिकार्थैक्ये तात्पर्यात् विशेषणानामपि प्रातिपदिकार्थतयाऽविशेषाद्विशेष्यवद्विशेषणानामप्यैक्यं स्यादिति विवक्षितम्? आद्ये दोषमाह नही ति। न विशेष्यैक्यदृष्टान्तमात्रेण विशेषणैक्यसिद्धिः, समानाधिकरणसगुणब्रह्मवाक्यप्रतिपन्नविशेषणानामैक्यस्य त्वयाऽप्यनङ्गीकारेण व्यभिचारादित्यर्थः। द्वितीये दोषमाह न च सगुणे ति। न सगुणब्रह्मपरसमानाधिकरणवाक्यस्य यावत्प्रातिपदिकार्थैक्ये तात्पर्यमिति

तात्पर्यमिति स्यात्, तद्वदेव निर्गुणवाक्येष्वपि विशेष्यमात्रस्य परत्वनिर्णयात् । तथा च

सगुणे निर्गुणे वापि सामानाधिकरण्यधी ।
विशेषणाना भेदेपि विशेष्यैक्ये नियम्यते ॥

अन्यथा व्युत्पत्तिप्रतिपत्त्योर्विरोधात् । अत एव भिन्नप्रवृत्तिनिमित्ताना शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति तल्लक्षणविद ।

ननु भिन्नप्रवृत्तिनिमित्तत्व हि भिन्नार्थत्वम्, प्रवृत्तिनिमित्तस्य शब्दवाच्यत्वात्, अतो भिन्नार्थाना शब्दानामेकार्थपरत्वमिति व्याघात इति चेत्, किमिद लक्षणवाक्यस्य दूषणाभिप्रायेणोक्तम्? *उतान्यपरत्वाभिमानेन? नाद्य, अनभ्युपगमात्, न द्वितीय,* भिन्नप्रवृत्तिनिमित्ताना शब्दाना प्रवृत्तिनिमित्तपरित्यागेनैकार्थपरत्व

---

सम्भवति, देवदत्त श्यामो युवा लोहिताक्ष इत्यत्रैव विशेष्यैक्यमात्रपरत्व निर्णयात्, ततश्च समानविभक्तिके विशेष्यैक्ये तात्पर्यमित्यर्थ । यद्वा तद्वदेवेत्यत प्राक्तनग्रन्थएव द्वितीयविकल्पदूषणार्थ, तदा एव सगुण वाक्यस्य यावत्प्रातिपादिकार्थैक्यपरत्वाभावेन विशेष्यैक्यमात्रपरत्वादन्यत्रापि तत्परत्वमेव युक्तमित्याह तद्वदि ति । सगुण इति । गुणविशिष्टतया बोध्ये । निर्गुणे- गुण विना बोध्ये स्वरूपेणेत्यर्थ । व्युत्पत्ति - समानाधिकरण वाक्याना भिन्नविशेषणद्वारेण एकविशेष्यपरत्वावधारणम् । प्रतिपत्ति - तदनु रूपोऽनुभव । अतएवे ति । समानाधिकरणवाक्याना विशिष्टार्थपरत्वादेवेत्यर्थ. । नन्वि ति । प्रवृत्ति वृत्ति प्रवृत्तिरभिधानम्, निमित्तशब्दो विषयपर, तथा च भिन्नाभिधेयानामेकस्मिन्नर्थे वृत्तिरिति कैश्चिदर्थाभिधानात्तदनुसारेणेय शङ्का । अत एव विषयव्यवस्थया विरोध परिहरिष्यते । लक्षणवाक्यस्ये ति । भिन्नप्रवृत्तिनिमित्तानामित्यादिसामानाधिकरण्यलक्षणवाक्यस्यर्थ । अन्यपरत्वेति । यथाश्रुते विरोधात् भिन्नप्रवृत्तिनिमित्तानामि त्यादिवाक्यमन्यपरमित्यभिप्रायेणे त्यर्थ । अनभ्युपगमादि ति । अन्य लक्षणवाक्यस्य लोपाप्रसक्तीकारादित्यर्थ ।

मिति शेषपूरणेन व्याख्येयमिति चेत्; कुत एतत्? एकैकस्मिन्नर्थे प्रवृत्तिरिति शेषपूरणेन विपरीतं वा किन्न स्यात्? एकार्थत्वस्य तात्पर्यसिद्धत्वात् भिन्नार्थत्वस्य तद्विरुद्धत्वाच्चेति चेत्; तर्हि व्यधिकरणवाक्येष्वपि नानाकारकादिवैशिष्ट्यन्न स्यात्; तत्राप्येकार्थत्वस्य तात्पर्यसिद्धत्वात्। 'अर्थैकत्वादेकं वाक्यं साकांक्षञ्चेद्विभागे स्या' दिति हि वाक्यविदः। न च बौद्धगन्धिवैयाकरणादिवत्तत्रापि वैशिष्ट्यं माभूदिति वाच्यम्; अपसिद्धान्तात्। वस्तुतस्तत्रापि वैशिष्ट्यन्न सिद्धान्त इति चेत्; तर्हि तद्वदेव समानाधिकरणवाक्यस्यापि विशिष्टपरत्वमभ्युपगम्य तैस्सह बाध उपपाद्यताम्। एवं च समानाधिकरणवाक्यत्वादिति हेतुविशेषणोपादानवैयर्थ्यं च प्रागेवोक्तम्।

---

एकैकस्मिन्नि ति। भिन्नप्रवृत्तिनिमित्तानामिति वाक्यस्य त्वदुक्तव्याघातपरिहाराय भिन्नप्रवृत्तिनिमित्तपरित्यागेनेति पूरयित्वा प्रवृत्तिनिमित्तेन भिन्नार्थत्वमिव एकैकस्मिन्निति पूरयित्वा भिन्नविशेष्यकत्वस्वीकारेण एकार्थत्वमेव किं न त्यज्यत इत्यर्थः। एकैकस्मिन् प्रवृत्तिनिमित्तलक्षणेऽर्थे वृत्तिरिति किन्नस्यादिति वार्थः। नचबौद्धगन्धी ति। एक वाक्यमेको वाक्यार्थइति वाक्यस्य तदर्थस्यचैक्यानुभवात् शब्दाना च भिन्नत्वात् वाक्यार्थाना च घटतदानयनादीनामनेकत्वात् प्रतिभैव वाक्यवाक्यार्थभावेन दृश्यत इति बौद्धशाब्दिकाभासाः प्राहु:, तद्वदित्यर्थः। वस्तुत इति। वास्तव वैशिष्ट्य न सिद्धान्त इत्यर्थः। तद्वदेवे ति। व्यधिकरणवाक्यस्येव समानाधिकरणवाक्यस्यापि वैशिष्ट्ये तात्पर्यमभ्युपगम्य व्यधिकरणवाक्यार्थस्य समानाधिकरणवाक्यार्थस्य च वैशिष्ट्यस्या पारमार्थिकत्वमभ्युपगम्यतामित्यर्थः। एवमपि व्यधिकरणवाक्यानामुक्तस्वरूपैकार्थत्व न सिध्यतीति भावः। एवञ्चे ति। तात्त्विकवैशिष्ट्यपरत्वाभावस्यैव साधनीयत्वात्तस्य च व्यधिकरणवाक्येपि सत्त्वेन निर्विशेषणपरत्व वेति विकल्पदूषणावसरे त्वन्मते न तु व्यधिकरणवाक्यानामपि परमार्थतो विशेषणशून्यार्थविषयत्वेन हेतुविशेषणवैयर्थ्यमिति यद्दूषणमुक्त तदत्रापि प्रसज्यत इत्यर्थः।

अनेककारकविशिष्टैकार्थपरत्वं व्यधिकरणवाक्येषु व्युत्पत्तिसिद्धमिति चेत्; तर्हि अनेकविशेषणविशिष्टैकविशेष्यपरत्वं समानाधिकरणवाक्येषु व्युत्पत्तिसिद्धमिति समस्समाधिः । एवं च विषयव्यवस्थया विरोधे शमयितव्ये बाधाध्याहारलक्षणादिपरिग्रहो देवानांप्रियेभ्य एव रोचते । प्रवृत्तिनिमित्तशब्दवाच्यविशेषणनिष्ठो हि भेदस्तदाश्रयभूतविशेष्यगतञ्चैकत्वमिति कोऽत्र विरोधमनुसन्दधीत? अतस्सामानाधिकरण्यलक्षणानुपपत्तिर्न ते विपक्षे बाधिका, अपि तु स्वपक्ष एवेति तूष्णीमास्व । पदद्वयप्रतिपन्नविशिष्टद्वयैक्ये विशेष्यैक्यवद्विशेषणैक्यमपि दुस्त्यजम्, तद्वदेव वा विशेष्यभेदोपि किन्न स्यादिति चेत्; किमिदम्? अथवा ख्यापितोपि केशान मुञ्चसि! विशिष्टद्वयैक्यशब्देन विशेषणाद्यैक्यविवक्षायामात्माश्रयासिद्ध्यादिदोषः, विशेष्यैक्यविवक्षायान्तस्य विशेषणैक्य प्रत्यनाधकत्वस्योदीरितत्वात्; यथा जात्यादिरूपविशेषणैक्येपि विशेष्यभेद प्रत्यक्षादि-

---

व्यधिकरणवाक्यानां प्रधानभूतार्थैक्यादेकार्थत्वमिति शङ्कते अनेके ति । एवञ्चे ति । भेदो विशेषणरूपाभिधेयगत, अभेदस्तु विशेष्यरूपाभिधेयगत इति व्यवस्थेत्यर्थः । बाधः - भिन्नार्थानामेकार्थत्वमिति यथाश्रुतार्थत्यागः । अध्याहारः प्रवृत्तिनिमित्तत्यागेनेति शेषपूरणम् । लक्षणा शेषपूरणार्थानुगुणा लक्षणवाक्यस्थपदैस्स्वरूपमात्रलक्षणा । आदि शब्देन लोकविरुद्धव्युत्पत्तिग्रहः । एवं प्रवृत्तिनिमित्तशब्दस्याभिधेयपरत्वानुसारेण व्यवस्थोक्ता; इदानीं तस्य विशेषणवाचित्वपक्षमनुसृत्य विरोधशङ्कैव नेत्याह प्रवृत्तिनिमित्तशब्दे ति । तद्वदेवेत्यत्र पूर्वमन्वयेति शेषः । किं विशेषणस्य विशेषणेन विशेष्यस्य विशेष्येण सम्बन्धस्य च सम्बन्धेनैक्यमित्येतत् त्रय समुदित विशिष्टैक्य विवक्षितम्? उत विशेष्यैक्यमिति विकल्पाद्ये दोषमाह विशिष्टद्वये ति । विशेषणैक्यस्य विशेषणैक्यापादकत्वे आत्माश्रय, आपादकासिद्धिश्च, विशेषणैक्यमात्रस्य आपाद्यत्वेन विशेषणादैक्यसमुदायस्याव्याप्यत्वाद्व्याप्यत्वासिद्धिरादिशब्दार्थः । उदीरितत्वादि ति । न हि पदद्वयप्रतिपन्नविशेषणैक्यमात्रात् सिद्धिरित्यर्थः ।

सिद्धत्वाद्दुरपह्नवः ; तथा विशेष्यैक्येऽपि विशेषणभेदस्तत एव दुरपह्नवः । अन्यथानेकगुणविशिष्टैकवस्तुप्रतिपादकतयाभिमतानां सगुणवाक्यानामनुत्थानप्रसङ्गात् । यथा वानेकप्रतियोगिभेदेऽपि तत्तद्व्यावृत्तवस्त्वैक्यम् ; तथानेकविशेषणभेदेऽपि तत्तदन्वितवस्त्वैक्यं न व्याहतमेव । एवं च विशेषणैक्यप्रसङ्गे प्रतियोग्यैक्यप्रतिबन्देरपि दुस्तरत्वं स्यात् ।

किञ्च- यथा क्रमेण युगपद्वा प्रत्यक्षादिभिरनेकविशेषणविशिष्टैकवस्तुप्रतिपत्तौ विशेष्यभेदो वा विशेषणानां मिथस्तादात्म्यसमवायो वा न प्रसज्येते; तथा शब्देनापि, प्रत्यक्षाद्यनुसारिव्युत्पत्तिवशंवदत्वात् तत्सामर्थ्यस्यापि प्रायशः तत्समानत्वात् । एवमन्यदपि द्रष्टव्यम् ।

प्रतिकूलतर्काश्च भवन्ति । तथाहि- यद्येकपदप्रतिपन्नादन्यूनानधिकमेव पदान्तरेणापि बोध्येत ; तदा पर्यायत्वप्रसङ्गः, पदान्तरवैयर्थ्यञ्च; निमित्तभेदादपर्यायत्वमितिचेत् ; तर्हि वैशिष्ट्यप्रसङ्गः, तथा च स्वेष्टभङ्गः, निमित्तभेदे सत्यपि तदन्वयाभावाद्वैशिष्ट्याभाव इति चेत्; किमत्र घटः पट इतिवत्प्रमाणविरोधादनन्वयः ? उत तद-

---

नन्तु तत्वमसीत्यादावभेदस्य बुभुत्सितत्वात्तस्यैव साक्षात्प्रतिपादने लाघवम्, भेदसिध्यर्थं धर्मान्तरोपलक्षिते धर्मान्तरप्रतिपादने तु गौरवमित्यादि कुतर्कानाशङ्क्याह एवमन्यदपी ति । अय भावः, न हि सामान्यतोऽभेदस्वरूपमेव बुभुत्सितम्, किन्तु तत्कालीनस्यैतत्कालीनाभेदः ; स च तत्कालैतत्कालप्रतिपादनपुरस्सर साक्षादेव वाक्येन प्रतिपाद्यते, अन्यथा जिज्ञासाया भेदभ्रमस्यचानिवृत्तेः ; न हि विशेषणविशेष्योपरक्तभेदजिज्ञासा तदनुपरक्तस्वरूपमात्रविषयज्ञानात् निवर्त्तते, तादृशज्ञानजनकोत्तरस्य प्रश्नाननुरूपत्वादिति । विशिष्टतात्पर्यकल्पने गौरवमित्यादिकुतर्काणां च दूषण वक्ष्यते । वैशिष्ट्यप्रसङ्ग इति । अखण्डार्थत्वप्रसङ्गस्त्यर्थः । तदन्वयाभावा दिति । प्रवृत्तिनिमित्ताप्रति

विरोधेपि श्रद्धासंगृहीततर्कावस्करबलात् ? नाद्यः, असिद्धेः ; न द्वितीयः, प्रागेव निरस्तत्वात् ; यदि च सन्तमपि निमित्तभेदमनादृत्य सर्वैः पदैस्स्वरूपमात्रमेव बोध्येत ; तर्ह्येकेतरपदप्रयोगे नैरर्थक्यं स्यात् , प्रतिपन्नेपि स्वरूपे तत्तत्प्रतियोगिव्यावृत्तिसिद्ध्यर्थं पदान्तरप्रयोग इति चेत् ; किन्तत्प्रवृत्तिनिमित्तान्वयसामर्थ्यात्तत्प्रतियोगिव्यावृत्तिसिद्धिः ? उत तत्तत्पदजन्यस्वरूपमात्रबोधादेव ? नाद्य:, वैशिष्ट्यस्य दुर्वारत्वात् ; न द्वितीयः, अविशेषात् ; प्रथमपदेनैव स्वरूपप्रतिपत्तौ सर्वव्यावृत्तिसिद्धिप्रसङ्गात् , तेन तदसिद्धौ पदशतेनापि तदसिद्धिप्रसङ्गात् ; यथा पर्यायाणां शतमपि पठ्यमानं न व्यावृत्तिभेदमापादयति, तथात्रापि । अत एकेतरपदानां नैरर्थक्यमेव । सामानाधिकरण्येन निर्विशेषपरत्वसिद्ध्यर्थमनेकपदप्रयोग इति चेत् ; न, तथापि पदद्वयमात्रेणापि तत्सिद्धेः बहुपदप्रयोगे नैरर्थक्यप्रसङ्गात् ; तथा च न विशेषण

---

पादनादित्यर्थः । तर्कावस्कर इति । एकार्थपरत्वभङ्गादिः । अवस्करः-मलम् । 'वर्चस्कोऽवस्कर' इति निपातनात् । एकेतरपदप्रयोगे नैरर्थक्यंस्यादिति । पदान्तरस्येति शेष. । क्वचित् एकतरपदप्रयोगनैरर्थक्यमिति पाठः । प्रवृत्तिनिमित्तान्वयसामर्थ्या दिति । अन्वयबोधसामर्थ्यादित्यर्थ· । अविशेषादि ति । पदान्तरजन्यप्रतीतेः प्रथमपदजन्यप्रतीतेश्चाविशेषादित्यर्थः । प्रतीतेर्विशेषत एव शब्दो व्यावर्त्तकः, प्रवृत्तिनिमित्तभेदमात्राद्व्यावर्त्तकत्वे अव्युत्पन्नस्यापि शब्दस्य व्यावर्त्तकत्वप्रसङ्ग इति भावः । नचाव्युत्पन्नस्य विशेषबोधकत्वाभावान्न व्यावृत्तबुद्धिप्रसङ्ग इति वाच्यम् , एकपदव्युत्पन्नस्यापि तत्सम्भवात् । तेने ति । एकपदेनेत्यर्थः । नैरर्थक्यमेवे ति । पृथगभिधेयशून्यमित्यर्थ. । सामानाधिकरण्येने ति । अन्यथा तात्पर्यग्राहकाभावात् स्वरूपलक्षणैव न स्यादिति भावः । तथापी ति । सामानाधिकरण्य भिन्नार्थतात्पर्यकमित्युक्तमेव, एकार्थतात्पर्यकत्वाङ्गीकारेपीत्यर्थः । पदद्वये ति । विशेषणपदद्वयमात्रेणेत्यर्थः । वस्तुतस्तु विशेषणपदद्वयमपि मास्त्वित्याह तथाचे ति । नैर

पदद्वयमपि प्रयोक्तव्यम्; एकविशेषणपदसहितविशेष्यपदमात्रेण सामानाधिकरण्यसिद्धेः । सामानाधिकरण्यस्य निर्विशेषपरत्वे सिद्धे तदर्थतया अनेकपदप्रयोगसाफल्यम्, तत्साफल्ये च सति सामानाधिकरण्यस्य निर्विशेषपरत्वसिद्धिरित्यन्योन्याश्रयता । ननु तत्तत्प्रवृत्तिनिमित्तविशिष्टं वस्तु शब्दबोध्यम्, प्रवृत्तिनिमित्तानि च स्वविरोधिव्यावृत्तिसहवर्तीनि, अत्र तु विशिष्टबोधनानुपपत्त्या विशेष्यमात्रं बोधयन्त्यपि पदानि नैरर्थक्यादिपरिहाराय स्वप्रवृत्तिनिमित्तसहिततत्तद्विरोधिव्यावृत्तिमपि लक्षयन्ति, ततस्तत्तद्व्यावृत्तभेकं वाक्यार्थ इति किन्नोपपद्यते ? श्रूयताम् । तत्तद्व्यावृत्ति किमत्र धर्मिस्वरूपम्? उत ततोन्या? तत्र न तावत्स्वरूपम्, स्वरूपस्यैव तत्प्रकाशत्वात्; प्रकाशाप्रकाशयोरध्यासानुपपत्त्यादेरन्यत्र प्रतिपादनात् । किञ्च — तत्तद्विरोधिव्यावृत्तिः किं परस्परभिन्ना ? उतैका ? भिन्नत्वे तदात्मकत्वात् ब्रह्मणोपि भेदप्रसङ्गात्; न च व्यावृत्तिभेदो मिथ्येति वाच्यम्; मिथ्याभूताभेदप्रतिपादनायानेकपदनैष्फल्यात्;

---

र्थक्यप्रसङ्गादेवेत्यर्थः । सामानाधिकरण्यस्य यत्र क्वचित् स्वरूपमात्रतात्पर्यकत्वव्याप्तिग्रहे तादृशसामानाधिकरण्यार्थतया पदान्तरसार्थक्यम्, पदान्तरसार्थक्य सिद्धौ च नैरर्थक्यप्रसङ्गरूपबाधकाभावात् समानाधिकरणवाक्यस्य स्वरूपमात्रपरत्वसिद्धिरित्योन्याश्रय इत्यर्थः । स्वप्रवृत्तिनिमित्तसहिते ति । प्रवृत्तिनिमित्तसहचरितव्यावृत्तमित्यर्थः । स्वरूपस्यैवे ति । ततश्च तद्बाधनार्थं वाक्य व्यर्थं स्यादिति भावः । दूषणान्तरमाह प्रकाशे ति । स्वरूपात्मकव्यावृत्तेः प्रकाशे तत्तद्विरोधिजडाद्यध्यासो न स्यात्; अप्रकाशे तु धर्मिप्रकाशाभावादध्यासो न स्यादिति भावः । किं स्वरूपभूता सत्यादिपदलक्ष्या व्यावृत्तिर्भिन्नेति पक्षे किं भेदः परमार्थः ? उतापरमार्थः ? इति विकल्पं हृदि कृत्वा प्रथमे दोषमाह भिन्नत्व इति । कि मिथ्याभूतभेदवद्यत् व्यावृत्तिस्वरूप तत् प्रतिपादनार्थमनेकपदम्? उत मिथ्याभूतभेदवत्तया प्रतिपादनार्थम्? आद्ये दोषमाह मिथ्याभूते ति । मिथ्याभूतत्वमनेकत्वविशिष्ट-

अतत्त्वावेदकप्रसङ्गाच्च । एकत्वे प्रथमपदेनैव सर्वव्यावृत्तिसिद्धौ पदान्तरप्रयोगनैष्फल्यमनतिक्रान्तम् । एकनिष्ठानेकप्रतियोगिकान्योन्याभावनिरूपणं तर्हि कथमिति चेत् ; इत्थम् । प्रतियोगिभेदादन्योन्याभावभेदाभ्युपगमे दोषाभावात् । अभेदेऽपि तत्तत्प्रतिसम्बन्धित्वलक्षणविशेषणविशिष्टैकान्योन्याभावपरत्वात् अनेकपदप्रयोजनसिद्धिः । एवं स्वरूपानतिरिक्तान्योन्याभावे समाधिरनुसन्धेयः । न चात्रापि तत्तत्प्रतिसम्बन्धित्वलक्षणविशेषणवैशिष्ट्यमात्रमभ्युपगतमिति वाच्यम् , प्रागेव तत्तद्धर्मवैशिष्ट्यस्य यथाप्रतीत्यभ्युपगन्तुमुचितत्वात् । नाप्यन्या, सा हि तत्तत्प्रवृत्तिनिमित्ताकारा वा स्यात् ? उत ततोऽन्या तदविनाभूतेति ? न प्रथमः, दूरं गत्वा घट्टकुटीप्रभातप्रसङ्गात् ; नापि द्वितीयः, तत्तत्समानयोगक्षेमतया तदभावे

---

रूपेण विवक्षितम् । द्वितीये दोषमाह **अतत्त्वे** ति । **एकनिष्ठे** ति । सिद्धान्ते एकस्मिन्नधिकरणे अनेकनिरूपित एक एवान्योन्याभावः घटत्वादिरूपो घटे स्तम्भाद्भेदः पटात् भेदः इत्यनेकपदैर्व्यवह्रियत इत्यभिप्रायः । प्रौढवादेन परिहरति **प्रतियोगी** ति । स्वमतेन परिहारमाह **अभेदेऽपी** ति । पटान्योन्याभावस्य घटपटादिभेदः स्वरूपमेव, तथापि घटान्योन्याभावः घटो न भवतीत्यादौ स्वरूपे प्रकाशमानेऽपि पदान्तरसार्थक्यादिकं दृष्टम् , तद्वत् प्रथम एव व्यावृत्तित्वेऽपि पदान्तरसाफल्यं स्यादिति चोद्यमप्युक्तरीत्या परिहृतमित्याह **एवमि** ति । स्वरूपानतिरिक्तान्योन्याभावसाम्यशङ्काप्येवमुक्तप्रकारेण परिहृतेत्येवमनुसन्धेयेत्यर्थः । **वैशिष्ट्यमात्रमि** ति । वैशिष्ट्यमात्रबोधनमित्यर्थः । **प्रागेवे** ति । व्यावृत्तिलक्षणमङ्गीकृत्य तत्र धर्मवैशिष्ट्यबोधनाद्वरं लक्षणामनङ्गीकृत्य यथाप्रतीति सत्यत्वादिविशिष्टबोधनमित्यर्थः । **दूरगत्वे** ति । व्यावृत्तिलक्षणमङ्गीकृत्यापीत्यर्थः । प्रवृत्तिनिमित्तवैशिष्ट्याङ्गीकार इति शेषः । क्त्वा-प्रत्ययसमानकर्तृकत्वम् । **समानयोगक्षेमतये** ति । तत्तद्विरोधिव्यावृत्तेरिति शेषः । तत्पदं प्रवृत्तिनिमित्तपरम् । एवं तदभाव इत्यत्रापि । तदसिद्धीत्यत्र

तत्तसिद्धिप्रसङ्गात्, न हि घटत्वाभावेऽप्यघटव्यावृत्तिसिद्धिः, तत्सिद्धौ तद्वैशिष्ट्यव्यापारित्याज्यत्वात् पुनरपि परपक्षकुक्षिप्रवेशेन भर्म्मीभाव। अभावरूपविशेषणमात्रवैशिष्ट्यमनुमन्यामहे इति त्वपक्षपातिनस्ते न युक्तम्। न च व्यावृत्तीना मिथ्यात्वेन रागाधि, तदाधिक्यप्रसङ्गस्यान्यत्रोक्तत्वात्; पूर्ववदतत्त्वानेदकत्वप्रसङ्गाच्च। भवत्पक्षे तत्तत्प्रवृत्तिनिमित्तानामपि मिथ्यात्वात्तद्वैशिष्ट्येऽप्येव न भेत्तव्यम्। अतो भवता प्रथममेव तदभ्युपगम उचित। एतेन शौक्ल्यं कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तमित्यादिप्रतिनन्दिनिस्तारसिद्धिः, तत्र प्रतिपदं प्रतिपाद्यभेदाभ्युपगमात्। यदि पुनस्तत्रापि कार्ष्ण्यव्यावृत्तिरेव पीतिमव्यावृत्तिः स्यात्, तदा पीतिम्नः कार्ष्ण्यव्यावृत्तिसद्भावे न पीतिमव्यावृत्तिप्रसङ्गः। एवं विपरिवर्तेन कार्ष्ण्यव्यावृत्तिप्रसङ्गः। अतः कार्ष्ण्यव्यावृत्त्यभावे पीतिमव्यावृत्तेः कार्ष्ण्ये दर्शनात्तयोर्मिथो भेदप्रसिद्धः, व्यावृत्त्यनुवृत्त्योरेकत्र विरोधात्।

---

तत्पदं तत्तद्विरोधिव्यावृत्तिपरम्। किञ्च — तत्तद्विरोधिव्यावृत्तिरसिद्धा चेत् तत्तद्व्यावृत्तिवैशिष्ट्येनैव सखण्डार्थत्वं दुर्वारमित्याह तत्सिद्धावि ति। अपक्षपातिन इति। अन्यथा स्वरूपमात्रपरत्वभङ्गस्य समानपक्षेऽप्यभाववैशिष्ट्यबोधनमात्राङ्गीकारे निर्निमित्तपक्षपातस्स्यादित्यर्थः। नचे ति। सत्यभूतधर्मवैशिष्ट्यस्याप्रतिपादनात् सखण्डार्थत्वमिति शङ्कितुर्भाव। एवं न भेतव्यमि ति। यथा व्यावृत्तेर्मिथ्यात्वेपि बोधनम्, तथा तत्प्रवृत्तिनिमित्ताना मिथ्यात्वेपि तद्वैशिष्ट्यबोधनेन भवितव्यमित्यर्थः। यदि सर्वे पदे स्वरूपमेव बोध्यते, तदा पर्यायपदनैरर्थक्य स्यादिति यत्पूर्वमुक्तम्, तत्र शौक्ल्यादिषु कार्ष्ण्यादिव्यावृत्तिरूपेषु अनेकपदसामर्थ्यदर्शनात् ब्रह्मण्यपि तत्तद्व्यावृत्तिरूपे न पदान्तरनिर्र्थक्यप्रसङ्ग, अन्यथा शौक्ल्यं कार्ष्ण्यव्यावृत्तमित्यादावपि नैरर्थक्य स्यादिति प्रतिनन्दिरपि एकनिष्ठानेकप्रतियोगिकान्योन्याभावनिरूपणप्रतिनन्दिनिरासेनैव निरस्तेत्याह एतेने ति। ननु भावान्तराभाववादे शौक्ल्या

व्यावृत्त्यनुवृत्तिव्यवहारे हि व्यक्तिगतभेदं सर्वेऽप्याहुः । ताभ्यामेव हि घटादिव्यक्तीनां भिन्नाभिन्नत्वविवेको भवद्भिरपि स्वीकृतः । अतः शब्दव्यावृत्तमित्यादौ प्रतिपदं प्रतिपाद्यभेदस्याभ्युपगन्तव्यत्वान्न निष्प्रयोजनत्वप्रसङ्गावकाशः । यद्यपि भावान्तरं व्यावृत्तिरिति पक्षः, तथापि तस्य व्यावृत्तित्वं तत्तत्प्रतिसम्बन्धित्वमनुचितोपाधिभेदगर्भमिति तेनाकारेण प्रतिपाद्यभेदसिद्धिः, अन्यथा शौक्ल्यस्वरूपस्यैव पीतिमव्यावृत्तिरूपत्वे कार्ष्ण्ये पीतिमव्यावृत्तिशब्दो न प्रयुज्येत । न च तावता भावान्तराभाववादपरित्यागप्रसङ्गः, अभावाभ्युपगमेऽपि अभावाभावेऽप्यविवादापि निर्वाहस्य तन्त्राचार्यैस्समर्थितत्वात् । सम्भवति च शौक्ल्यादेस्स्वेतरव्यावृत्तिरूपत्वम्, तत्प्रकाशेऽन्याध्यासस्यादृष्टेः, ब्रह्मस्वरूपे निर्विशेषे प्रकाशमान एव सर्वेतराध्यासात् सर्वेतरव्यावृत्तिरूपत्वं

---

देरेनेतरसमस्तव्यावृत्तित्वात् पूर्वोत्तरैरर्थैक्यमेवेत्यत आह यद्यपीति । तत्तत्प्रतियोगित्वप्रयोजकतत्तद्व्यासविरोधित्वादिरूपोपाधिविशेषनिरूपणनियतनिरूपणत्वात् तादृशोपाधिभेदप्रतिपादनात् प्रतिपाद्यभेद इत्यर्थः । अन्यथेति । अनुगतोपाध्यभाव इत्यर्थः । अननुगतानामभावत्वमङ्गीकृत्य तत्रानुगतोपाधिकल्पनाद्वरमतिरिक्ताभाव एवाङ्गीक्रियतामित्यत आह नचेति । अभावाभ्युपगम इति । अतिरिक्ताभावपक्षे अभावाभावः प्रतियोग्येवेत्यङ्गीकारात् घटसामान्याभावाभावत्वं यथा घटत्वेनानुगतीकृतानां घटानामेवाङ्गीक्रियते, घटघटत्वयोः क्लृप्तत्वादतिरिक्ताभावः, तद्वदिहापि भावस्य तद्गतानुगतधर्मस्य च क्लृप्तत्वात्तत एव व्यवहारोपपत्तौ नातिरिक्तकल्पनाप्रसङ्ग इति भावः । ननु यदि शौक्ल्यं पीतिमव्यावृत्तिरूपम्, तर्हि शौक्ल्ये कार्ष्ण्यव्यावृत्तिः केत्यत आह सम्भवति चेति । एवं ब्रह्मस्वरूपस्य व्यावृत्तित्वमभ्युपगम्य शौक्ल्यादिप्रतिबन्दिः निरस्ता; इदानीं ब्रह्मस्वरूपस्य व्यावृत्तित्वमेव न सम्भवतीत्याह ब्रह्मस्वरूप इति । यद्वा सम्भवति चेत्यारभ्य ब्रह्मस्वरूपस्य व्यावृत्ति-

दुरुपपादमेव। किञ्च निर्विशेषबोधने वाक्यस्य सामानाधिकरण्यासिद्धिप्रसङ्गश्चासमानाधिकरणानेकार्थबोधकतयैव ह्यन्तत शब्दाना सामानाधिकरण्यम्। अत एव हि भिन्नप्रवृत्तिनिमित्तानामित्यादि लक्षणमुक्तम्। न चैतदुदाहरणविशेषविषयमिति वक्तु युक्तम्; एकप्रवृत्तिनिमित्ताना वा परित्यक्तमुख्यामुख्यसर्वप्रवृत्तिनिमित्ताना वा सामानाधिकरण्यादर्शनात्। सत्यज्ञानादिवाक्ये दृश्यत इति चेत्, न, आशामोदकतुल्यत्वात। तर्हि पर्यायपाठेष्विति चेत्, किं पुनरुक्तोदाहरणेषु यथा घट कुम्भमानयेत्यादिषु? किं वा निखण्डुवत् पर्यायव्युत्पादनार्थपाठेषु यथा क पिक इत्युक्ते कोकिल पिक इत्यादिषु? तत्राद्येऽनन्वयादेव सामानाधिकरण्यासिद्धि, अनन्वयश्चाकाङ्क्षादि

---

लम्भकप्रतिपादनपरो ग्रन्थ। समानाधिकरणे ति। व्यधिकरणवाक्यव्यावृत्त शब्दाना सामानाधिकरण्य समानाधिकरणवाक्यमेव वाच्यम्, स्वरूपत सामानाधिकरण्यस्यातिप्रसक्ततयार्थद्वारक एव तस्मिन् समानाधिकरणवाच पर्यवसानात् इति भाव। नचैतदि ति। देवदत्त श्याम इत्यादि वाक्यविषयमित्यर्थ। प्रवृत्तिनिमित्तभेदस्यानपेक्षत्वे हेतुमाह एके ति। प्रवृत्तिनिमित्ताभेदपक्षत्वे हेतुमाह परित्यक्ते ति। एकप्रवृत्तिनिमित्तत्वनिष्प्रवृत्तिनिमित्तत्वयोस्सतोस्सामानाधिकरण्यन्न दृश्यत इत्येतदयुक्तम्, निष्प्रवृत्तिनिमित्तत्वे दर्शनादिति शङ्कते सत्यज्ञाने ति। दृश्यत इति। सामानाधिकरण्यमिति शेष। तथा च प्रवृत्तिनिमित्तशून्ये तत्र सामानाधिकरण्यदर्शनादुभयत्र सामानाधिकरण्यादर्शनमसिद्धमिति भाव। आशे ति। आशापदात् बुद्धिपरिकल्पितमोदकवदाशामात्रेणेद परिकल्पितम्, न तु प्रसिद्धम्, तत्रैव विप्रतिपत्तेरिति भाव। एवमप्येकप्रवृत्तिनिमित्तत्वनिष्प्रवृत्तिनिमित्तत्वयोस्सतो स्सामानाधिकरण्यादर्शनमसिद्धम्, एकप्रवृत्तिनिमित्तत्वे तद्दर्शनादिति शङ्कते तर्ही ति। सामानाधिकरण्य दृश्यत इति शेष। अनन्वयादेवे ति। तत श्चान्वयप्रतीत्यभावेन वाक्यत्वस्यैवासिद्धत्वात्तद्विशेषसमानाधिकरणवाक्यत्व नुत

विरहात्, आकाङ्क्षादित्रयसमाहारे सत्येव ह्यन्वयः, अन्यथा नैराकाङ्क्ष्येण क्वचिदपि वाक्यभेदो न स्यात्। द्वितीये तु निमित्तभेदोऽस्त्येव, कोकिलशब्दस्य कोकिलत्वजात्यैव प्रवृत्तत्वात्पिकशब्दस्य पिकशब्दवाच्यत्वलक्षणविवक्षया प्रयोगात्। कथमिदमवगतमिति चेदित्थम्; कः पिक इति पृच्छतो हि पिकशब्दवाच्यः क इत्यभिप्रायः, तदुत्तरार्थस्तु तदनुरूप एव भवितुमर्हति. ततश्च कोकिलः पिकशब्दवाच्य इत्येवोत्तरवाक्यार्थः। एतदनभ्युपगमे तत्रापि पौनरुक्त्यादिदोषो दुष्परिहर इति।

एवं च न समानाधिकरणवाक्यस्य मुख्येपि विशिष्टैक्ये सम्भवति लक्षणा, तत्रापि सर्वपदलक्षणा, तत्र च निर्विशेषविशेष्यमात्रलक्षणा, तदुपरि व्यावृत्तिलक्षणेत्यादिपरिक्लेशो भवति। इदं च तात्पर्यनिर्णयवशात्स्वीक्रियत इति वदन् कथन्न जिह्रेति? स्वप्रतिपत्तिर्भवतीति कथमेनन्न निर्भर्त्सयति? अथ वा लक्षणयापि ब्रह्मणश्शब्दबोध्यत्वं वदता 'यतो वाचो निवर्तन्त' इत्यादेः स्ववचनविरुद्धोऽप्यसङ्कोचोपपादनप्रयासो विस्मृतः। मुख्यतया बोध्यत्वं तत्र निषिध्यत इति चेत्; विपरीतं किन्न स्यात्? उभयथापि शाब्दवृत्त्या बोध्यत्वस्याविशेषात्, बोध्यत्वे मिथ्यात्वप्रसङ्गभयं लक्षणया बोध्यत्वेपि समानमेव, विशेषाभावात्। अत एव

---

रामसिद्धमित्यर्थः। नैराकाङ्क्ष्येणे ति। नैराकाङ्क्ष्येण यो वाक्यभेदः, विमलं जलं नद्याः कच्छे महिषश्चरतीत्यादौ, स न स्यादित्यर्थः। मुख्येपी ति। मुख्यार्थे विवक्षितेपीत्यर्थः। इदं च सर्वपदलक्षणादिकं विशिष्टैक्ये तात्पर्यनिर्णयादिति भावः। स्वप्रतिपत्ति रिति। अखण्डार्थत्वमेव सर्वानुभवसिद्धमिति भावः। अथवे ति। अपिचेत्यर्थः। असङ्कोचः– शब्दविशेषाविषयत्वेन सङ्कोचाभावः। उभयथापी ति। व्यावृत्तिनिषेधस्यैव 'वाचो निवर्तन्त' इत्यनेन प्रतीतिरिति भावः। अत एवे ति। मिथ्यात्वभयादेवे-

परमार्थतो वा लक्षणया वा बोधन नेच्छाम इति चेत्, तर्ह्यखण्डवाक्यार्थासिद्धिरेव भवेत्, परमार्थतस्तत्प्रतिपादनाभावेऽपि तत्सिद्धौ तत्रैव सखण्डवाक्यार्थसिद्धिरपि किन्नस्यात् ?

यत्तु वाक्यतात्पर्याविरोधायैकपदलक्षणेव सर्वपदलक्षणापि न दोष इत्याहु । तदपि तात्पर्यस्यान्यथानिर्णयादेव निरस्तम् । यत्पुनर्विष भुङ्क्ष्वेत्यादिषु सर्वपदलक्षणा दृष्टेति, तदपि न भुङ्क्ष्वेत्यस्य निषेध प्रतियोगिविशेषसमर्पकस्य, तत्रापि मुख्यत्वात्, विषशब्देनैव ह्यनर्थकर भक्ष्यरूढेन भुज्यमाने तस्मिन्ननर्थहेतुतया निषिद्धतामभिप्रयता भोजननिषेधोऽप्यभिप्रेत । यद्वा भुङ्क्ष्वेत्यत्र प्रकृत्या निषिद्धभोजन विवक्षितम्, निषशब्देन तन्निषेध एव विवक्षित, तथापि प्रत्यया शस्य मुख्यत्व सिद्धम् । अस्तु तर्हीहापि प्रत्ययांशस्य मुख्यत्वम्, विशेष्यैक्यस्य तदर्थस्यापरित्यागादितिचेत्, न, विशेष्यमात्रस्यैव प्रतिपत्तुमशक्यत्वोपपादनेन विशेष्यैक्यस्यापि दुष्प्रतिपादत्वात् । यत्तु विशेषस्यापि मुख्यार्थैकदेशत्वाचन वृत्तिर्नलक्षणेति के चिदाहु,

---

स्यर्थ । याचोनिवृत्तिश्रुति परमार्थवाग्वृत्तिनिषेधिकेति भाव. । अपरमार्थत तद्बोधनादेव तत्सिद्धिरित्यत्राह परमार्थत इति । तत्रैवे ति । सत्यादि वाक्य इत्यर्थ । ननु बोधनादर्थसिद्धि, तच्चाखण्डे अपरमार्थत, अत सखण्डे तु तादृशमपि नास्तीति कथ तत्सिद्धिरिति चेत् न, तथापि सगुणवाक्ये सखण्डबोधनात्तनैव तत्सिद्धिप्रसङ्ग इति भाव । यत्पुन रिति । विषशब्द स्यानर्थावहतया निषिद्धलक्षकत्वात् सर्वपदलक्षणेत्यर्थ । यदि भुङ्क्ष्वेत्यस्य मुख्य तैव, तर्हि निषेधावगम केनेत्यत्राह शब्देनैव ही ति । अपिशब्दस्त्वर्थे । भोजन निषेधस्तु निषिद्धपरतया त्वदाभिमतेन विषशब्देनैव लक्ष्यत इत्यर्थ । भोजन कर्मोपस्थितस्त्वध्याहारादिति भाव । यद्वा विषशब्देन निषिद्धत्वमुद्भावयता तद्भोजनविधानस्य व्याहतत्वान्नास्य तद्विधाने तात्पर्यम्, किन्तु निषेध एवेति निषिद्धत्वबोधनादेवोन्नीयत इत्यर्थ । यद्वे ति । भोजनकर्मोपस्थित्यर्थ मुक्तम् विषशब्देने ति । विषमित्यत्र प्रथमाविभक्ति, सा चाविवक्षितार्था

मसङ्गात् । अतोत्र निर्निमित्तलक्षणादिदोषो दुष्परिहरः ।

यद्यपि विशेष्यमात्रे तदैक्ये च मुख्यत्वं सम्भवति, विशेष्य हि वाक्ये प्रधानांश, तथापि तत्र स्वारम्भहानिरवर्जनीयैव । किञ्च वाक्यार्थस्य निरशेषभेदराहित्ये तत्प्रतिपादकस्य वाक्यत्वाभावप्रसङ्ग., परस्परसंसृष्टपदार्थपरतया वा तत्संसर्गपरतया वा खल्वन्विताभिधानाभिहितान्वययोस्सम्भव । निर्विशेषे तु तदुभयमपि न सम्भवति, बौद्धमतगन्धिवैयाकरणाभिमतबुद्धिविशेषादिवाक्यार्थत्वं मीमांसाचार्यादिभिर्विस्तरेण प्रतिक्षिप्तमिति न तत्रास्माभिरिह प्रयस्यते ।

नन्वस्तु तत्त्वमसिसत्यज्ञानादिवाक्यानामखण्डपरत्वं निष्प्रमाणकम्, तथापि भवता वाङ्ग्जलयोस्सखण्डपरत्वे प्रमाणं वाच्यमितिचेत्; उच्यते । विप्रतिपन्नं वाक्यं विशिष्टपरम्, बोधकत्वात्; सम्प्रतिपन्नवत्; न च पदमात्रैर्भ्रमहेतुभिर्वाऽनैकान्त्यम्; तेषामपि यत्किञ्चिद्विशिष्टबोधकत्वमात्रस्य सिद्धत्वेन तत्रापि साध्य

---

पत्यागेपि कुण्ठितत्वं न स्यात्, तथा च गङ्गादिपदानामपि तीरादौ मुख्यत्वं स्यात्, यदि च मुख्यार्थैकदेशस्यापि मुख्यार्थत्वान्न लक्षणा, तदा भावप्रधानेष्वपि सा न स्यादितिभाव । अत इति । मुख्यार्थत्वे बाधाभावेपि वाक्ये हेतुमन्तरेण लक्षणाकल्पनम्, तत्रापि सर्वपदलक्षणेत्यादिकमयुक्तमित्यर्थ । ननु प्रधानांशस्यापरित्यागात्प्रकृते न लक्षणा, भावप्रधाने तु अप्रधानस्य प्राधान्येन बोधनाल्लक्षणा, तथा च न लक्षणादिदोष इत्याशङ्क्य तथापि सर्वपदलक्षणावदस्यान्यमेव दोष इत्याह यद्यपी त्यादिना । किञ्चे ति । अखण्डस्य वाक्यत्वेऽव्यवस्थं इत्यर्थ । नन्वस्त्वि त्यादि । विमतं वाक्यं विशिष्टपरमिति पूर्वग्रन्थ अखण्डार्थत्वानुमानदूषणपर, अयं तु सखण्डार्थत्वसाधनपर इत्यपौनरुक्त्यम् । विशिष्टपरमि ति । विशिष्टबोधकमित्यर्थ । न चे ति । वाक्यवत् संसर्गानुभावकत्वाभावात् पदमात्रै रित्युक्तम्, अख्यातिपक्षानुसारेण संसर्गप्रतीत्यभावात् भ्रमहेतुभिरि त्युक्तम् । तेषामपी ति । स्वपदार्थसंसर्ग

सामान्यस्य विद्यमानत्वात्, स्मारकत्वं हि पदानां । विशिष्टमेव स्मार्यम्, एकस्यापि पदार्थस्य प्रकृत्याद्यंशभेदेन विशिष्टत्वात्पदार्थानामपि निपुणनिरूपणे प्रायशो विशिष्टत्वादेव । अख्यातिगर्भमयथार्थगोचरं वा भ्रान्तिज्ञानमपि विशिष्टविषयमेव । संसर्गमात्राख्यातिरेवद्यख्यातिर्न पुनस्सर्वाख्यातिः। एतेनाखण्डवाक्यार्थ इति भवद्वाक्येनाप्यनैकान्त्यं परिहृतम् ।

---

ज्ञानजनकत्वमात्रं न साध्यम्; किन्तु सामान्यतो विशिष्टबुद्धिजनकत्वम्, तस्य च न व्यभिचार इत्यर्थः । स्मारकत्व इति । शब्दप्रवृत्तिनिमित्तविशिष्टस्यैव पदार्थत्वादिति भावः । सच पदमित्यभिप्रायेणेदम् । 'सुप्तिङन्त पद' मित्यभिप्रायेणाह एकस्यापी ति । प्रतिपदार्थं प्रकृतिप्रत्ययात्मकशब्दद्वययुक्तपदवत्त्वेन पदार्थाना प्रत्ययार्थविशिष्टप्रकृत्यर्थरूपत्वात् स्वार्थिकाना प्रकृत्यनतिरिक्तार्थत्वेन तत्र प्रत्ययार्थवैशिष्ट्याभावात् प्रायश इत्युक्तम् । तत्र प्रवृत्तिनिमित्तविशिष्टरूपत्वं पदार्थाना द्रष्टव्यम् । 'अखण्ड वाक्यस्यार्थ' इति वाक्यस्य अखण्डरूपैकार्थवृत्तित्वेन सामानाधिकरण्य वाच्यम्, यथा नीलमुत्पलमिति वाक्यस्योत्पलरूपैकार्थवृत्तित्वेन सामानाधिकरण्यम्, अतस्तत्रानैकान्त्यमिति शङ्का निराकरोति एतेने ति । प्रवृत्तिनिमित्तप्रत्ययार्थाभ्या विशिष्टत्वादित्यर्थः ।

अन्ये — संसर्गगोचरप्रमाजनकत्व वा पर्यायशब्दानाभेकप्रातिपदिकार्थपर्यवसायित्व वा नाखण्डार्थत्वम्; आद्ये संसर्गशब्देन संसर्गमात्रोक्तौ 'अप्राप्तयोः प्राप्तिस्संसर्गः' इत्यादिसंसर्गलक्षणवाक्येऽव्याप्तिः, लक्षणमात्रस्याखण्डार्थत्वात्, पदस्मारितपदार्थसंसर्गोक्तौ तु विषं भुङ्क्ष्वेत्यादावतिव्याप्तिः; तस्य पदस्मारितपदार्थसंसर्गाप्रमाणकत्वात्, प्रतिपिपादयिषितपदार्थसंसर्गोक्तौ चन्द्रप्रकाशादिशब्दार्थाना प्रश्नधर्मित्वेन प्रागेव सामान्यतो

णततया स्वरूपेणाप्रतिपिपादयिषितत्वात् प्रकृष्टादिवाक्यापि । सखण्डार्थत्वनासम्भवश्च । अत एवास्य लक्षणमप्ययुक्तम् । किञ्च प्रवृत्तिनिमित्तभेदश्चेत् पर्यायत्वम्, तद्भेदस्त्विह नास्ति, अनन्तत्वादीनां शुद्धादन्यत्रासम्भवात्, आनन्तादिशब्दानां लक्षणयाऽखण्डार्थत्वे च शुद्धे तदसिद्धेः । यदपि सत्यादिवाक्यस्याखण्डार्थत्वेऽनुमानमुक्तम् सत्यादिवाक्यमखण्डार्थम् एकप्रातिपदिकार्थमात्रनिष्ठं वा, लक्षणवाक्यत्वात्, तन्मात्रप्रश्नोत्तरत्वाद्वा, प्रकृष्टादिवाक्यवदिति, तत्र आद्यानुमाने अप्रसिद्धविशेषणत्वम्, प्रत्यक्षादीनामर्पस्यर्थमिति सप्रकारकज्ञानस्यैवोत्पत्तेः । असिद्धिश्च, सत्यत्वज्ञानत्वादेः परापरजातित्वे तस्या ब्रह्मण्यपि सत्वे नातिव्याप्तेः, अजातित्वे ब्रह्मण्यपि तस्य तात्विकस्य धर्मिणानाबाध्यस्य चासम्भवात् अतात्विकस्य व्यावहारिकस्य चानात्मन्यपि सत्वात् । विरुद्धत्वं च असाधारणधर्मरूपलक्षणवाक्यत्वस्य सखण्डार्थत्वेनैव व्याप्तत्वात् । न च स्वरूपलक्षणस्य लक्ष्यानतिरेकात् तत्परत्वमखण्डार्थत्वाद्विरोधि, तस्य लक्ष्यमात्रत्वे लक्ष्यलक्षणभावायोगात्, अतिरेकेऽपि यावद्द्रव्यभावित्वादिनैव स्वरूपलक्षणतोपपत्तेश्च । बाधश्च, धर्मज्ञानाधीनसप्रकारकसंशयादिनिवर्तकं मोक्षहेतुं सप्रकारज्ञानं प्रति वेदान्तविचारविधानान्यथानुपपत्त्या वेदान्तवाक्ये साध्याभावनिश्चयात् । सत्प्रतिपक्षत्वं च सत्यादितात्पर्यविषयः संसृष्टरूपः संसर्गरूपो वा प्रमाणवाक्यतात्पर्यविषयत्वात्, सम्मतवत्, सत्यादिवाक्यं स्वतात्पर्यविषयज्ञानायोग्यसंसर्गपरम्, स्वकारणकमितिविषयपदार्थनिरूप्यसंसर्गपरं वा, प्रमाणवाक्यत्वात्, 'ख छिद्र कोकिल पिक' इत्यादावप्यनतिभिन्नार्थत्वे सामानाधिकरण्यायोगात् छिद्रकोकिलादीनां खपिकादिशब्दवाच्यत्वसंसर्गपरत्वान्न तत्रापि व्यभिचारः, वेदान्तवाक्यजन्या प्रमा सप्रकारा, विचारजन्यत्वात्, वेदान्तजन्या प्रमा ब्रह्मनिष्ठप्रकारविषया, ब्रह्मधर्मिकसंशयविरोधित्वात्, ब्रह्मविचारजन्यत्वाच्च, यदेवं तदेवम्, यथा कर्मकाण्डजन्या इत्यादिना प्रतिरोधात् । दृष्टान्तस्य साध्यवैकल्यं च । तथा हि प्रकृष्टादिवाक्यस्याखण्डार्थत्वं न तावत् मुख्यया वृत्त्या लक्षणयापि । न तावत् गङ्गायां घोष इत्यादाविवान्वयानुपपत्त्या चन्द्रादौ प्रकृष्टेन द्रव्यरूपेण गुणरूपेण वा प्रकाशेन सम्बद्धत्वात् । नापि यष्टीः प्रवेशयेत्यादाविव तात्पर्यानुपपत्त्या, कश्चन्द्र इति स्वरूपमात्रस्यैव पृष्टत्वादिति वाच्यम्,

अस्ति कश्चिच्चन्द्रशब्दार्थं इत्यज्ञाने तादृशधर्मिज्ञानसाध्याया बुभुत्साया स्वरूपकथनस्य चानुपपत्ते, चन्द्रपदस्य प्रातिपदिकत्वानिश्चयेन सुब्विभक्तिप्रयोगायोगात् चन्द्रइत्यननुभूय स क इति प्रश्नायोगाच्च । नक्षत्रानुवादार्थम्, असङ्कीर्णं चन्द्रस्वरूपम् न ज्ञातमिति चेत्, न, चन्द्रे सङ्कराद्यभावात्, तदेव सङ्कीर्णस्वरूपत्वेन ज्ञातमिति चेत्; तदसङ्कीर्णत्वस्य व्यावृत्तिरूपधर्मवैशिष्ट्ययोरन्यतरत्वेन प्रश्नस्य विनिगमपरत्वापातात् । तस्मात् चन्द्रस्येतरस्मात् भेदधर्म एव पृष्ट इति न तद्वाक्यस्याखण्डार्थत्वम् । एवं प्रतिवचनस्य प्रकृष्टप्रकाशादिनिविष्टतात्पर्याभावे च, कश्चिच्चन्द्र इत्येव बोधनात् अतात्पर्यविषयस्य च प्रतीतस्याव्यावर्त्तकत्वात् तात्पर्यविषये अखण्डे अयं चन्द्र इति लक्ष्यलक्षणरूपोद्देश्यविधेयादिविभागाभावेन तात्पर्यतो यत् किञ्चिदित्येव बोधनात्, तेन चन्द्रबुभुत्साया निवृत्त्यभावात् कश्चन्द्र इति प्रश्नस्योत्तरं च न स्यात् । प्रकृष्टादिपदवैयर्थ्यं च स्यात् । गामानयेत्यादौ गोत्वस्यानयनेनेव प्रकृष्टत्वादेर्विधेयेन चन्द्रप्रातिपदिकार्थेनान्वयेऽपि उद्देश्यतावच्छेदकत्वेन विवक्षितत्वात् तद्वत् वैशिष्ट्यार्थत्वं दुर्वारम् । अस्ति च पृथिवीत्ववती पृथिवीत्यादौ पृथिवीत्वस्य विधेयेन पृथिवीशब्दार्थेनान्वयः, न हि पृथिवीत्वं न पृथिवीप्रातिपदिकार्थं, सहप्रयोगस्तु पृथिवीशब्दस्य तच्छब्देन व्यवहर्त्तव्यत्वात्, तस्मात् धर्मिणः चन्द्रस्य सामान्यतो नक्षत्रादिव्यावर्त्तकस्य व्यावृत्तिरूपधर्मस्य च घटादौ प्रागेव ज्ञातत्वात् विशिष्टविषयएव प्रश्नोत्तरे व्यावृत्तिवैशिष्ट्यस्य साक्षात् बुभुत्सितस्यापि विविच्येदमस्माद्व्यावृत्तमिति जन्मशतेनापि दुर्वचत्वात् धूमे कथितेऽग्निमिव व्यावर्त्तक उक्ते व्यावृत्तिं ज्ञास्यतीति व्यावृत्तिवैशिष्ट्यमेव तात्पर्यतः प्रतिपादयति । नह्यग्निबोधार्थस्य धूमोऽस्तीति वाक्यस्य न धूमे तात्पर्यम्, न वा यागाक्षेपकस्याग्नेयादिवाक्यस्य न द्रव्यदेवतासम्बन्धे, यदि नु पृष्टैव व्यावृत्तिः प्रतियोगिनामानन्त्यात् साक्षात् प्रष्टुं वक्तुं चाशक्येति ज्ञात्वा कश्चन्द्र इत्यनया वचोभङ्ग्या कैर्विशेषणैर्विशिष्ट इति पृष्टम्, तदा सुतरां प्रश्नोत्तरे व्यावर्त्तकवैशिष्ट्यपरे इति न क्वाप्यखण्डार्थत्वम् । एतेन प्रश्नो धर्मवाचिपदं नेति प्रत्युक्तम् । तथापि चन्द्रधर्मस्यैव लक्षणीयत्वात् चन्द्रप्रातिपदिकार्थज्ञानस्य

ज्ञातत्वेन तत्र जुगुत्साया अयोगात् । यद्वा लक्षणवाक्यमाप्तवाक्यत्वेनानुमान त्वेन वा चन्द्रव्यवहारकर्तव्यतावैशिष्ट्यपरमस्तु, चन्द्रस्वरूपस्य प्रत्यक्षेण ज्ञातत्वात् चन्द्रव्यवहारशब्देन चन्द्रशब्दविशेषितो व्यवहारो विवक्ष्यते, न तु पदार्थविशेषित, तस्मात् साध्यवैकल्य दुर्परिहरम् । एतेन द्वितीयमप्यनुमान निरस्तम्, प्रकृष्टादिवाक्योक्तरीत्या सत्यादिवाक्येपि बुभुत्सानुपपत्त्या ब्रह्मस्वरूपमात्रप्रश्नोत्तरासिद्धे, इह कश्चन्द्र इतिवत् स्वरूपस्य प्रश्नस्याभावात्, कल्प्यस्य क्लृप्तौ चारानुसारेण धर्मविषयस्यैव कल्प्यत्वात्, कतम आत्मा कतर आत्मेत्यत्र स्वपदार्थप्रश्ने 'वा बहूनां जातिपरिप्रश्ने डतमच्' 'द्वयोरेकस्य निर्धारणे डतरजि' ति सूत्राभ्यां जात्याद्यर्थकतमादिशब्दप्रयोगेण, तत्प्रतिवचन 'यो ऽयं विज्ञानमय' इत्यादौ धर्मत्वेन त्वदभिमते हेतोरसिद्धेश्च, सर्वस्याप्युत्तरस्याप्रश्नधर्मिनिष्ठानिर्धारितप्रकारपरत्वाद्विरुद्धत्वाच्च । अन्यथा उत्तरमेव न स्यात्, प्रश्नाधिकविषयत्वानियमात्तस्य, किं करोतीति किमानयेत्यादिप्रश्नोत्तरेषु अध्ययन करोति ग्रामानयेत्यादिषु व्यभिचाराच्चेति ।

यदपि तत्त्वमस्यादिवाक्यमखण्डार्थम्, आत्ममात्रनिष्ठ वा, समानाधिकरणवाक्यत्वात्, तन्मात्रप्रश्नोत्तरत्वाद्वा, सोऽय देवदत्त इति वत्, न च दृष्टान्तस्य साध्यवैकल्यम्, तदेतत्पदद्वयलक्षितदेवदत्तैक्यस्य तेन प्रतिपादनात्, न तावत्तद्देशकालविशिष्टमुद्दिश्य एतद्देशकालवैशिष्ट्य वाक्येन प्रतिपाद्यत, एतद्देशकाले तद्देशकालप्रसङ्गात्, नाप्येतद्देशकालविशिष्टस्य तद्देशकालादिवृत्तित्वम्, एतद्देशकालयोस्तदा प्रसङ्गात्, समानाधिकरणवाक्यस्य पदार्थाभेदप्रमेयत्वाच्च, नापि कालद्वयदेशद्वयविशिष्टाभेद प्रतिपाद्यते, युगपत्कालद्वयसत्त्वप्रसङ्गात्, विशिष्टस्य विशेषणविशेष्यतत्सम्बन्धात्मत्वेऽर्थान्तरत्वेच तद्विशिष्टयोर्भेदादेकत्वानुपपत्ते, नापि तत्कालोपलक्षितस्य एतत्कालविशिष्टाभेदेन वाक्यार्थ, तत्कालोपलक्षितस्य तदापि सत्त्वेन एतत्कालविशिष्टस्य तदभेदेन तदाप्येतत्प्रसङ्गात्, अन्यथा तदयोगात्, अत एवैतत्कालोपलक्षितस्य न तत्कालीनाभेद, तस्मात्तदुभयोपलक्षिताभेद प्रतिपाद्यत इति तदप्ययुक्तम् । तथाहि– सोऽयमिति पदद्वय तत्तेदन्तयोरेकवृत्तित्व बोधयति, समानाधिकरणत्वात्, भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्, न तु विशेष्यस्य तत्तेदन्तान्वयपरमिद वाक्यम्, विशिष्टस्य तदन्वयो नेत्यतावताऽखण्डा

र्थत्वे, नीलमुत्पलमित्यादेरप्यखण्डार्थतापातात् । कालद्वयवैशिष्ट्यं च क्रमेण एकस्मिन्नविरुद्धमिति नाखण्डार्थत्वम् । किञ्च तत्त्वादेरतीतत्वेपि यदन्विततया ज्ञात एव तात्पर्यविषयभूतेतरान्वयस्तद्विशेषणमित्येवरूपस्य विशेषणत्वस्य सम्भवात् । न च विधेयान्वयि विशेषणम्, शब्दो नित्य इत्यादौ शब्दत्वादाव व्याप्तेः । नापि विधेयान्वयकालिक विशेषणम्, दण्डीभविष्यति दण्डीनास्तीत्यादाव व्याप्तेः । नापि विधेयान्वयप्रतियोगितावच्छेदकं प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदक वा, अवच्छेदकत्वस्यान्यूनानधिकदेशकालादिरूपत्वे तस्य सास्नादिमान् गौरित्यादिलक्ष्यतावच्छेदकरूपविशेषणेषु सत्त्वेपि गौश्शुक्ल इत्यादावव्याप्तेः । यद्वत्तया ज्ञात एव यदन्वयधीस्तत्त्व चेदवच्छेदकत्वम्, तदिहाप्यस्ति, न हि तत्ताप्रत्ययेनाज्ञाते इदन्त्वधीः, अनिदव्यावृत्तिधीर्वा । तस्मादतीतमपि यद्वत्तया ज्ञात एवेत्याद्युक्तलक्षणयुक्त चेद्विशेषणमेव, तदयुक्तश्चेद्वर्तमानमप्यविशेषणमेवेति ।

अत्र नवीनः, स्वपदोपस्थापितार्थसंसर्गागोचरप्रमाजनकत्वमखण्डार्थत्वम् । गामानयेत्यादिवाक्येतिव्याप्तिवारणाय संसर्गागोचरेत्युक्तम् । जलेन सिञ्चतीति वाक्ये पदद्वयेपि शक्तिभ्रमाजायमानस्य वह्निविषयस्य घटोऽस्तीति ज्ञानस्य प्रमात्वादत्राति व्याप्तिवारणाय स्वपदार्थेत्यनुक्त्वा स्वपदोपस्थापितेत्युक्तिः । प्रमापद च ज्ञान परम्, शुकाद्युदीरितलक्षणवाक्ये अव्याप्तिवारणाय तादृशज्ञानजननयोग्यत्व विवक्षणीयम् । योग्यत्व च लक्षणवाक्यत्वादिना द्रष्टव्यम् । सयोगादिलक्षणमप्येव विधमेवेति नाव्याप्तिः । प्रिय शुद्धश्वेत्यादिवाक्यमपि स्वपदस्मारितपदार्थ संसर्गागोचरज्ञानजनकमेव, द्वितीयायाः प्रकृत्यर्थगतस्वार्थबोधकत्वात्, विपद्यन्दस्य द्विपदमलक्षकत्वादिति नातिव्याप्ति. । शीतोष्णस्पर्शवन्तौ पय पावका विव्येतदपि पय.पावकयोः पृथग्लक्षणद्वयमिति नातिव्याप्ति. । नाप्यसम्भवः; तथाहि — अस्ति चन्द्र न जानामीत्यज्ञानानुभवात्तस्मिन्ज्ञानम्, अस्ति च कश्चन्द्र इति तत्स्वरूपमात्रनिष्ठः प्रश्नः, अत उत्तरमपि तत्समानार्थमित्यखण्डार्थम्, चन्द्रस्य प्रत्यक्षेणावगमाच्चतद्गोचरौ तत्राज्ञानप्रश्नाविति चेत् ? तर्हि किं तयोः प्रकृष्टप्रकाशत्ववैशिष्ट्य विषयः, उत चन्द्रव्यावृत्तिवैशिष्ट्य, चन्द्र पदवाच्यत्ववैशिष्ट्य वा ? नाद्यः, प्रकाशत्ववैशिष्ट्यस्य वृत्तिविशेषे प्रत्यक्षेणैवावगमात्तयोर्निर्विषयत्वापत्तेः, चन्द्रनिरूपणाम च तस्य चन्द्रपदार्थांज्ञान विना

न सम्भवति । द्वितीये किं चन्द्रोऽचन्द्राद्व्यावृत्त इत्याकारेण ज्ञातत्वम् ? किं
प्रकृष्टप्रकाशो चन्द्रव्यावृत्त इत्याकारेण? नाद्यः, चन्द्रोऽचन्द्राद्व्यावृत्त इति सामान्येन
तस्या अपि ज्ञातत्वात्, चन्द्रोऽयमचन्द्राद्व्यावृत्त इत्यज्ञानं तु चन्द्रज्ञाननिबन्धन
मेव । न द्वितीयः, प्रत्यक्षतोऽनुभूयमानप्रकृष्टप्रकाशाश्रयव्यक्तौ चन्द्रत्ववैशिष्ट्यस्य
निश्चये तत्प्रयुक्ताचन्द्रव्यावृत्तिरपि निश्चितैव स्यात् । प्रकृष्टप्रकाशश्चन्द्र इति
हि ज्ञाने सति प्रकृष्टप्रकाशो न भवतीति धीरिवाचन्द्रो न भवतीति धीरपि
भवत्येव । तत्र चन्द्रत्वानिश्चये तन्निष्ठमेव वाक्यमिति न व्यावृत्त्यादिकं वा-
क्यार्थः । न च प्रकृष्टप्रकाशाश्रये प्रागितरव्यावृत्तिज्ञातापि सा नाचन्द्रव्या-
वृत्तित्वेन ज्ञायते, प्रतियोगिष्वचन्द्रत्वस्य प्रागज्ञानादिति वाच्यम्, प्रकृष्टप्र
काशश्चन्द्र इति वाक्येनापि चन्द्रप्रातिपदिकार्थज्ञापनं विना तेषु तज्ज्ञापना
भावादचन्द्रव्यावृत्तिज्ञानासम्भवात् । किञ्च व्यावर्तकस्वरूपज्ञानं विना व्यावृ-
त्तिज्ञानासम्भवात् सति च तस्मिन् स्वत एव तत्सम्भवात् शब्देन व्यावर्तक
मेव प्रतिपाद्यत इति वक्तव्यम् । अन्यथा व्यावृत्तिवाचकपदाभावाच्चन्द्रपदेऽपो-
हलक्षणाप्रसङ्गात् । व्यावर्तकवैशिष्ट्यं च न प्रकृष्टप्रकाशवाक्यं प्रतिपादयति
निश्चितत्वादित्युक्तम् । न तृतीयः, प्रकृष्टप्रकाशे चन्द्रे चन्द्रपदवाच्यत्वविषय
योरप्यज्ञानप्रश्नयोः प्रकृष्टप्रकाशो चन्द्रत्वाज्ञानं विना अयोगात्, तत्र तन्नि
श्चये हि यथा पटगतशुक्लगुणे तज्जातिविशिष्टशुक्लपदवाच्य इत्याप्तवाक्यनिश्चिते
पटशौक्ल्ये न तद्वाच्यत्वसंशयः एवं चन्द्रत्वसंज्ञिता काचिज्जातिः तदाश्रय
श्चन्द्रपदवाच्य इति ज्ञाने सति प्रकृष्टप्रकाशे चन्द्रत्वनिर्णये तत्संशयो न स्यात्,
तन्निष्ठधर्मे वाच्यत्ववैशिष्ट्यनिश्चयस्योभयत्र तुल्यत्वात् । नच निश्चितेपि दोष-
बलात् तत्र संशय इति वाच्यम्, नियमेनोपदेशविशेषनिवर्त्यस्य तस्य तद-
भावातिरिक्तदोषाप्रयोज्यत्वादुपदेशविशेषस्य च वाच्यत्वज्ञान एवोपयोगे
तज्ज्ञानसामग्र्याः पटशौक्ल्य इव प्रागेव सम्भवात् तत्संशयो न स्यात् ।
ननु वस्तुतः प्रकृष्टप्रकाशवृत्तिधर्मे चन्द्रपदवाच्यत्वज्ञानेपि तद्वृत्तित्वेन तदज्ञानं
सन्दिह्यत इति चेत् ? तर्हि पटगुणगतशुक्लत्ववृत्तित्वेन प्राक् तस्याप्यनव
गमात् तत्रापि संशयः स्यात् । ननु घटगतगुणगतजातिविशेषे शुक्लपद
वाच्यत्वविशिष्टजात्यभेदावगमात् तदभेदेनावगतपटगुणशुक्लत्वजातौ न तत्संशय
इति चेत् ? पटगुणगतशुक्लत्वे शुक्लपदवाच्यत्वविशिष्टजात्यभेदावगमः किं पट

गुणे शुक्लत्वनिश्चयप्रयुक्तः ? उत शुक्लत्वमेकमिति निश्चयप्रयुक्तः ? आद्ये प्रकृतेपि तद्भेदावगमः स्यात्, तव मते चन्द्रत्वस्य वृत्तिविशेषे निश्चितत्वात्। न द्वितीयः, चन्द्रत्वमेकमिति निश्चितत्वेन तद्भेदज्ञानादेरपि तुल्यत्वात्। यत्तु तस्मिन् धर्मे चन्द्रत्वसंज्ञितत्वं न जानातीति, तन्न, तत्संज्ञितत्वं हि तद्वाच्यत्वम्, तच्च पटगुणनिष्ठेपि शुक्लत्वे स्वरूपेणेवाज्ञातमपि ज्ञातमेव, तस्मात्तत्र शुक्लत्वे उपदेशसहकृतप्रत्यक्षादज्ञाननिवृत्तिरत्र नेत्ययमेव विशेषः। किञ्च चन्द्रोऽयं न वेति सन्देहः किं वाच्यत्वप्रकारक एव, उत तदन्यजातिप्रकारकः ? गवादिवच्चन्द्रोऽचन्द्रश्च वाच्य इत्यनेकार्थत्वनिश्चयदशायां तत्पदवाच्य इति तस्मिन् वाच्यत्वनिर्णयानन्तरमपि भवतस्तस्य तदनुपपत्तेः। द्वितीये प्रकृष्टप्रकाशोस्ति न वा ? अन्त्ये अनेकार्थत्वनिश्चयदशायां प्रकृष्टप्रकाशे चन्द्रपदवाच्यत्वं जानतोप्ययं चन्द्रस्सन् तत्पदवाच्य उतान्यथेति संशयाभावप्रसङ्गात्। प्रथमे चन्द्रत्वाज्ञानं वक्तव्यमिति तदेव सङ्कीर्णस्वरूपाज्ञानमुच्यते। नच चन्द्रस्सन् तत्पदाभिधेयोऽन्यथा वेति सन्देहः प्रकृष्टप्रकाशो वृत्तिधर्मे चन्द्रत्वसंज्ञितत्वे पर्यवसन्न इति वाच्यम्, प्रकृष्टप्रकाशे चन्द्रशब्दवाच्यत्वनिश्चयदशायां तन्मात्रवृत्तिधर्मे चन्द्रपदवाच्यत्वस्यापि निश्चितत्वेन तदयोगात्। चन्द्रपदवाच्या जातिरिहास्तीति वाक्याच्चन्द्रत्वसंज्ञितत्वानुसन्धानाभावेपि निवर्तमानस्य तद्रोचरत्वायोगात्। किञ्चैवं सर्वोपि संशयो वाच्यत्वविषय एवेत्यसाधारणधर्माकारकोपि न स्यात्। देवदत्तादिसाङ्केतिकशब्दार्थे तु देवदत्तत्वादिरूपोऽर्थो नास्तीति शब्दसम्बन्धविषय एव संशयादि। नहि घटादिव्यक्तिविशेषे सङ्केतितस्य देवदत्तादिशब्दस्याभिधेयं किञ्चिदस्ति, यदज्ञानात् संशयो भवेत्, सत्त्वे वा तदपि चन्द्रत्वादितुल्यमिति नास्माकमनिष्टम्, चन्द्रसंशयस्तु न वाच्यत्वविषय इत्येतावन्ममाभिधेयम्, तस्मात् सामान्यतो व्यक्तिविशेषे वाच्यत्वनिश्चयानन्तरमप्ययं चन्द्रो नवेति संशयदर्शनादज्ञानाभ्युपगमः चन्द्रश्चन्द्रपदवाच्य इति तमेव न जानामीत्यनुभवाच्च अनुभूयमानेपि चन्द्रे चन्द्राज्ञानमस्तीति वाच्यम्, उपदेशानन्तरभाविप्रत्यक्षमेव तन्निवर्तकमिति ज्ञातेप्यज्ञानमुपपन्नत इति तत्स्वरूपमेव वाक्यार्थः। नन्वेवमेतेषु कश्चिच्चन्द्र इत्युपदेशसहकृतप्रत्यक्षादपि तदज्ञाननिवृत्तिर्न स्यादिति चेत् ? सामान्योपदेशस्यान्यथोपपत्त्यादिशङ्कया तदर्थज्ञानस्य व्यक्तिविशेषे संशयानवधारणात्मकत्वात्। किञ्च

यदिप्रकृष्टप्रकाशो सत्तानिश्चयरूप चन्द्रत्वप्रकारक प्रत्यक्षमस्ति तर्हि यत्तया चन्द्रत्वप्रकारकतया प्रत्यक्षेण विषयीक्रियते तच्च चन्द्रपदवाच्यमिति ज्ञानात् प्रकृष्टप्रकाशे संशयो निवर्तेत । नच चन्द्रत्वपदस्यागृहीतसङ्गतिकत्वाच्च चन्द्रत्वप्रकारकतयेत्यादिवाक्यमबोधकमिति वाच्यम्, वस्तुत. चन्द्रत्वस्य तज्ज्ञानप्रकारत्वेन पदसमभिव्याहारादेव चन्द्रपदाभिधेयस्य ज्ञातु शक्यत्वात् । नन्वथाप्यय चन्द्रत्वप्रकारकज्ञानविषय इति विशिष्य न ज्ञायत इति चेत् ? न, अथ चन्द्रत्वज्ञानितिज्ञाने सति तत् विशिष्य न ज्ञायत इत्युक्तेरयोगात् । ज्ञानाभावे तज्ज्ञातमेव चन्द्रत्वमिति न विवाद । अपिचैव चन्द्रश्च चन्द्रपदवाच्य इति ज्ञानानन्तर चन्द्रत्व कश्चिद्धर्म सच प्रकृष्टप्रकाशे वर्तत इत्युपदेशात् सन तत्संशयनिवृत्तिर्न स्यात्, तस्य प्रत्यक्षानधिकविषयत्वात्, तेनापि प्रकृष्टप्रकाशनिष्ठधर्मे चन्द्रपदवाच्यत्वाविषयीकरणात्, प्रत्यक्षस्याखण्डधर्मचन्द्रत्वविशिष्टविषयकत्वात् । ननु त्वन्मतेपि येय व्यक्ति प्रकृष्टप्रकाशत्वेन नक्षत्रादिव्यावृत्तधर्मवत्त्वेनानुभूयते स एव चन्द्र इत्युपदेशात् कथ संशयनिवृत्ति., प्रत्यक्षानुभूताविषयीकरणात्, वाच्यत्वबोधकस्य च त्वयैव निरस्तत्वादिति चेन,– अनुभूयमानव्यक्तावेव चन्द्रत्वपदभिनव्यक्तिस्वरूपविशेषस्य प्रत्यक्षानिश्चितस्य तेन प्रतिपादनात् । यद्यप्यस्मन्मते अभेदो व्यक्तिस्वरूपमेव, तच्च प्रत्यक्षेणापि विषयीक्रियते, तथापि तज्ज्ञान चन्द्रत्वबद्व्यक्तयवो न सत्तानिश्चयरूपम्, अनन्तर तत्संशयादिदर्शनात् । उपदेशजन्य तु तज्ज्ञान सत्तानिश्चयरूपमेवेत्यस्ति विशेष, तस्मात् पूर्वं चन्द्रत्वस्वरूपमज्ञातमुपदेशसहकृतप्रत्यक्षेण निर्णीयत इत्यावश्यकत्वाच्चन्द्रपदार्थ एव प्रश्नविषय ।

किञ्च यदि वाच्यत्वजिज्ञासा, तदा उत्तरमप्यसङ्गतम् । तथाहि– न सावयथाश्रुति प्रकृष्टप्रकाशवैशिष्ट्य प्रतिवचनप्रमेयम्, तस्य प्रत्यक्षेणावगतत्वात्, नापि तद्विशिष्टस्य, चन्द्रत्ववैशिष्ट्यमज्ञात तत्प्रमेयमिति वाच्यम्, नागृहीतविशेषणन्यायेन लाघवेन चाज्ञातचन्द्रप्रातिपदिकार्थस्यैव तत्प्रमेयत्वात् । नापि चन्द्रपदवाच्यत्व तत्प्रमेयम्, तस्यापि चन्द्रपदवाच्य किंचिदस्तीति सामान्यत. स्वरूपेण ज्ञातत्वात्, अत प्रवृत्तिनिमित्तमेव प्रश्नविषयो वाच्य, ततश्च प्रकृष्टप्रकाशत्व चन्द्रपदप्रवृत्तिनिमित्तमित्युक्त स्यात्, तच्चायुक्तम्, उपाधे

रसगण्डस्याखण्डशब्दावलम्बनत्वायोगात्, इतरथा सर्वताप्युपाधिरेव प्रवृत्तिनिमित्तमिति जातिर्न स्यात्। नच प्रकृष्टप्रकाशपदेन चन्द्रत्व लक्ष्यत इति वाच्यम्, प्रकृष्टप्रकाशेनासाधारणसम्बन्धवत्तया पूर्वं चन्द्रत्वज्ञाने चन्द्रत्ववांश्चन्द्रपदवाच्य इति वाक्यादपि प्रकृष्टप्रकाशे तत्संशयनिवृत्तिस्स्यात्। नच समयग्रहात् प्राक् चन्द्रत्ववानिति वाक्यमबोधकमिति शङ्क्यम्, पूर्वोक्तन्यायेन चन्द्रत्वग्राम काचिज्जातिरिति वाक्यादेव तद्ग्रहसम्भवात्। तस्यासाधारणरूपेण प्रकृष्टप्रकाशसम्बन्धाज्ञाने च न ततस्तल्लक्षणा। नच चन्द्रपदवाच्यत्वस्याश्रयविशेषसंसर्ग एव प्रतिपाद्यत इति वाच्यम्, तस्याजिज्ञासितत्वात्। नच तस्यैव जिज्ञासेति वाच्यम्, प्रवृत्तिनिमित्तज्ञानाभावे व्यवहारासिद्धेस्तावन्मात्रस्यानुपयोगात्। नन्वस्ति कश्चिच्चन्द्र इत्यनेनैव चन्द्रत्वनिमित्तकत्वं वाच्यत्वस्य ज्ञातम्, तस्याश्रय एव परं जिज्ञास्यत इति चेत्? किं वाच्यत्वस्याश्रयः, उत निमित्तस्य? नाद्य, चन्द्रत्वाश्रयस्य अस्ति कश्चिच्चन्द्र इत्यनेनैव ज्ञातत्वात्। द्वितीये चन्द्रपदार्थ एव जिज्ञास्यत इति मदिष्टसिद्धिः। प्रकृष्टप्रकाशत्वाधिकरणे चन्द्रत्वनिमित्तकवाच्यत्वाश्रयत्वमेव जिज्ञासितम्, तच्च प्रकृष्टप्रकाशे चन्द्रत्वानुमानार्थमिति चेत्? किमनेन भगबन्धनेन, साक्षादेव तत्प्रतिपादनोपपत्तेः। नन्वास्य प्रकृष्टप्रकाशपदसमानाधिकरणचन्द्रपदप्रयोगसामर्थ्यात् प्रकृष्टप्रकाश एव चन्द्रपदवाच्य इति निश्चीयते, तत्र प्रकाशत्वस्य गुरुत्वाद्रूपादेरननुगतत्वाल्लाघवात् सद्गतचन्द्रत्वमेव निमित्तमित्यवसीयते, इति चेत्? न, गवादिपदवच्चन्द्रपदमपि नानार्थकमिति ज्ञाने प्रमात्वनिश्चयवत्तया बोधासम्भवात्। नच त प्रति चन्द्रत्वसमानाधिकरणपदवाच्यत्वमेव तत्र प्रतिपादयतीति वाच्यम्, तथात्वे चन्द्रत्ववांश्चन्द्रपदवाच्य इत्यस्य सार्वजनीनत्वात् प्रकृष्टप्रकाशे चन्द्रत्वनिश्चये तत्र तद्वाच्यत्वज्ञानायोगात् लाघवादावश्यकत्वाच्च चन्द्रत्वमेव ज्ञातं वाक्यार्थः।

किञ्च प्रकृष्टादिपदैर्वाच्यत्वसंसर्गो मुख्यवृत्त्या बोध्यते, लक्षणया वा? नाद्यः, तद्वाचकपदाभावात्। द्वितीये मुख्यार्थसम्बन्धितया चन्द्रपदवाच्यत्वस्य ज्ञाने वाक्यं व्यर्थम्; अज्ञाने तु हेत्वाभावाच्च लक्षणा। नन्वेवं यतो जिज्ञासा कथं तत एव धर्मिज्ञानात् तन्निवृत्तिरिति वाच्यम्, जिज्ञासा

हि स्वविषयनिश्चयनिवर्त्यां, ननु स्वाविषयवैशिष्ट्यनिश्चयनिवर्त्यां, भिन्नविषयत्वात्, प्राथमिकचन्द्रज्ञानं च न तथा, तस्य चन्द्रत्वे सत्तानवधारणात्मकत्वात्, उपदेशानन्तरभाविज्ञानञ्च आप्तोपदेशादिरूपतर्कप्रतिसन्धानेन सत्तानधारणात्मकमिति तत्तन्निवर्तकम् । नच प्रकृष्टप्रकाशपदवैयर्थ्यम्, चन्द्रपदमात्रप्रयोगे व्यक्तिविशेषे चन्द्रत्वनिर्धारकतर्कानुदयात् । तावन्मात्रात्तत्र सन्तमसादिव्यावृत्तस्वरूपविशेषानुपस्थितेश्च । विशेषश्च स्वरूपमेव । नन्वेवमपि ससर्गस्य प्रतिपाद्यत्वात् कथमखण्डार्थतेति ? किं भ्रान्तोऽसि, नहि संसर्गागोचरप्रमाजनकत्वमात्रमखण्डार्थत्वम्, किन्तु पदार्थतावच्छेदकावच्छिन्ननिरूपितसंसर्गागोचरप्रमाजनकत्वम्, तच्चात्राप्यस्त्येव ।

वस्तुतस्तु व्यक्तिरेव जिज्ञासिता वाक्यार्थः, जातेरिव व्यक्तेरपि स्वरूपविशेषसत्त्वात् जातिविशेषाश्रयत्वप्रयोजकत्वेन तस्य वक्तव्यत्वात्; अपि-खात्मकजातेः स्वतो विशेषाभावेन तत्तद्व्यक्त्युपहितत्वस्यैव विशेषत्वात्, अत श्चन्द्रव्यक्तेः प्रकृष्टप्रकाशात्मकतया ज्ञातत्वेपि चन्द्रस्य स्वरूपजव्यक्तिविशेषात्मना सन्देहादिदर्शनेन तेनरूपेणाज्ञातत्वादेकशाखावृतत्वानावृतत्वयोरुपपादनाच्च चन्द्रात्मकतया जिज्ञासितव्यक्तिरेव लक्षणया वाक्येन प्रतिपाद्यते, अर्थाच्च-न्द्रत्वज्ञानं भवतीति न तद्वैशिष्ट्यं वाक्यप्रमेयम्, अतएव कश्चन्द्र इति जिज्ञासते, न तु कास्य जातिरिति ।

किञ्च यथा ज्ञायमानायामपि जातौ तद्वैशिष्ट्यस्याज्ञानम् तथा व्यक्तावपि तन्न विरुद्धम्, व्यक्तिस्वरूपाज्ञानाभावे जातौ तदसम्भवात्, अनुभूतदण्डसंसर्गस्य दण्डाश्रयमनुभवामि ननु दण्डमितिवत् । येन पूर्वं घटत्वाद्याश्रयतया व्यक्तिरनुभूता तस्य घटत्वाश्रयमनुभवामि नच घटत्वमनु-भवामीत्यननुभवात्, इदन्त्वेनानुभूयमानेपि घटत्वाश्रयन्नानुभवामीत्यनुभवाच्च, यावद्धर्मोपाधिकव्यक्तिभेदस्य सत्त्वात् । किञ्च व्यवहारयोग्यतयोर्भेदेनेदमिति व्यवहारयोग्ये घटादिनिरूपितयोग्यताया अभावस्य तद्विपरीतयोग्यतायाश्च सम्भवादेकस्यैवावरणानावरणे । किञ्च घटादिसामान्यस्य यथा साधारणधर्मवान् सामान्यवानिति वानुभवेप्यज्ञानम्, अन्यथा तत्संशयाद्ययोगात्, एवं व्यक्तावपि किन्न स्यात् । नच तत्र न स्वरूपाज्ञानात् संशयः, किन्तु तत्प्रश्न

रकाज्ञानादिति वाच्यम्, तस्यापि घटत्वादिप्रकारकत्वात् । नच तत्र धर्मत्वादिक प्रकार इति वाच्यम्, तथापि घटत्वादिप्रकारकताया अनपायात् । असाधारणधर्मवानय घटो घटत्वाद्यसाधारणधर्मवानयमिति ज्ञानात्तस्य विशेषात् । वस्तुतस्त्वेवमेव युक्तम्, सामान्यस्यानुगतबुद्धिमात्रविशेषकत्वभावत्वात् । व्यक्तेरेव व्यावृत्तरूपतया विशेषत्वभावतया सशयादिदशाया तदज्ञानादेव सामान्याज्ञानमिति व्यक्तिरेवाज्ञाता जिज्ञास्यते । अत्रच मुख्यार्थान्वयानुपपत्त्यभावेपि कुन्ताः प्रविशन्तीतिवत्तात्पर्यानुपपत्तिर्लक्षणाबीजम्, बुभुत्सितचन्द्रप्रातिपदिकार्थे एव प्रतिवचनस्य तात्पर्यावगमात् । एव सत्यज्ञानादिवाक्यमपि, तत्रापि स्वरूपप्रकाशस्य वेदान्तजन्यज्ञानस्य वा विचारात् पूर्व सत्तानवधारणात्मत्वात्, आत्मातिरिक्तस्य कल्पिततया तमेव विदित्वेत्यवधारणाच्च, तद्विषयज्ञानस्य बन्धानिवर्तकत्वेन तस्याजिज्ञास्यत्वाच्च । अतएवापर्यायशब्दानामित्यादिद्वितीयमपि लक्षण साधु, प्रातिपदिकार्थमात्रस्यैव बुभुत्सिततया तस्यैव प्रतिपाद्यत्वात् । एवमनुमानमप्यदुष्टम्, तत्र न प्रथमे साध्याप्रसिद्धि, लौकिकलक्षणमात्रे साध्यसत्त्वात्, प्राशस्त्यप्रतिपादकेषु 'वायुर्वै क्षेपिष्ठे' त्यादिवाक्येषु तत्सिद्धेश्च । नाप्यसिद्धिः, सत्यज्ञानानन्दाभेदस्याब्रह्मण्यभावात् ब्रह्मण्स्तदात्मत्वेन चातिव्याप्त्याद्यभावेन तस्य लक्षणत्वात् । वस्तुतस्त्वरूपलक्षणस्यावश्यकत्वात्, अन्यस्य च तस्याभावात् सत्याद्यात्मकत्वमेव स्वरूपलक्षणं युक्तम्; जगत्कारणत्वादेः कल्पितस्य वास्तवस्वरूपत्वानुपपत्तेः । नच सत्यादीना धर्मत्वाभावे लक्षणत्वानुपपत्ति., असाधारणधर्मस्यैव लक्षणत्वादिति वाच्यम्; — एव परिभाषाया प्रमाणाभावत् । यद्विषयत्वेन ज्ञानस्य व्यावर्तकता तल्लक्षणम्, तद्विषयश्च स्वरूपमित्युक्तमिति स्वरूपमपि लक्षणम् । अन्यथा प्रमेयत्वादौ केवलान्वयिनि लक्षणाभावप्रसङ्गात्, तत्र मेयत्वतारूपस्य धर्मान्तरस्य प्रमेयेतराङ्कितारूपस्यासम्भवात् । नच प्रमेयत्वमेव लक्षणम्, स्ववृत्तित्वस्य सम्बन्धाभावेन निरस्तत्वात्, साधारणत्वाच्च । एव घटत्वादेरपि न घटत्वतादिः घटवृत्तित्वे सति पृथिवीत्वसाक्षाद्व्याप्यजातित्वादिर्वा असाधारणधर्मः, तस्य घटाद्यनेकपदार्थघटिततया घटत्वाद्याश्रितत्वासम्भवात् । किञ्च धर्मस्यैव लक्षणत्वे स किमवगतमात्रो धर्मिणं व्यावर्तयति, उत इतरव्यावृत्ततयावगतः ? नाद्य., प्रमेयतया ज्ञानस्यापि व्यावर्तकत्वापातात् । द्वितीये तद्व्यावर्तकपरिज्ञाने तस्य व्यावृत्ततयावगमः तद्व्यावर्त

कस्यापि स्वेतरव्यावृत्तत्वेनावगम विना व्यावर्त्तकत्वायोगात् तद्व्यावर्तकस्या प्यन्यस्य तथावगमापेक्षेत्यनवस्थाप्रसङ्ग । अतो धर्मस्यैव लक्षणत्वमिति नियमाभावाद्व्यावर्त्तकमेव लक्षणम् । स्वरूपलक्षण सर्वत्र धर्म्येव, याव त्स्वरूपस्थाप्यसाधारणधर्मो विशेषणलक्षणम्, कादाचित्कासाधारणधर्मस्तटस्थल क्षणमिति विभाग । लक्षणवाक्यत्व च साधारणधर्मप्रतिपादकमावार्थ वाक्यस्य पदार्थस्वरूपजिज्ञासानिवर्त्तकवाक्यस्य समभिव्याहृतपदार्थमात्रव्यावर्त्तक वाक्यत्व वा विवक्षितम् । अत्र अय चन्द्रव्यावृत्त इति व्यावृत्तिवैशिष्ट्य प्रतिपादनवाक्ये व्यभिचारवारणाय भावार्थेति । यत्तु धर्म एव स्वरूप लक्षणमिति विरुद्धत्वमिति, तदसत्, नित्यादेरपि धर्मादिधर्मत्वात् । नचयावद्धर्म्यनुवर्त्तमानो धर्म, एकत्वादौ स्वरूपलक्षणत्वाप्रसिद्धे, तस्य द्रव्यमात्रासाधारणत्वाच्च, अभावे भावरूपस्याभावरूपस्य वा अतिरिक्तस्य भावत्वस्यानभ्युपगमात् तदात्मकस्य तस्य तद्धर्मत्वायोगात् तल्लक्षणत्वानु पपत्तेश्च । नापि बाध, ज्ञानमालिन्यनिवृत्तये हि विचार क्रियते, मालिन्य च सत्तानवधारणात्मकत्वम्, ततश्चाज्ञानसमानविषय सत्तावधारणात्मक ज्ञान मविद्यानिवर्त्तयति, नतु तस्य सप्रकारत्वमपि प्रयोजकम्, सत्तानिश्चयरूपस्यैव तन्निवर्त्तकत्वात् । किञ्च समानप्रकारकज्ञानमेव सशयनिवर्त्तक नतु समान विषयमिति मते पुरुषे दण्डोऽस्ति नवेति सशयस्य दण्डीपुरुष इति ज्ञाना दनिवृत्तिप्रसङ्ग । किञ्च विशिष्टविषयाज्ञान सप्रकारकज्ञाननिवर्त्यम् केवल विषयक तु तत्केवलज्ञाननिवर्त्यम्, नतु तद्गोचरवैशिष्ट्यविषयज्ञानात्, मूलाज्ञान च चैतन्यमात्रगोचरमिति न तन्निवृत्तौ विशिष्टज्ञानापेक्षा, तस्मा दखण्डार्थत्वे नेद बाधकम् ।

किञ्च प्रकारो नाम विषयमात्रम्, किं वा विशेषणम्, व्यावर्त्तक वा, भासमानवैशिष्ट्यप्रतियोगि वा ? आद्यमखण्डाज्ञानस्यापीति न बाध । न द्वितीय, चिन्मुरिति ज्ञानस्य निष्प्रकारकत्वप्रसङ्गात्, ब्वा तत्राविशेषण त्वात् । न तृतीय, प्रमेयत्वाभावात् । किञ्च व्यावृत्तिबाधहेतुज्ञानविषयत्व रूपेण व्यावर्त्तकविषयज्ञान सप्रकारकम्, उत वस्तुतोव्यावर्त्तकविषयम् ? नाद्य, तेनैव ज्ञानेन व्यावर्त्तकस्य तथानवगाहनात् । नान्त्य, पराभिमत निर्विकल्पके अस्मदभिमताखण्डब्रह्मसाक्षात्कारे तत्सत्त्वात्, ब्रह्मणएव स्वम

महिम्नां जडव्यावर्त्तकत्वात्। न चतुर्थं, लाघवेन सविषयत्वस्यैव सप्रकारक शब्दार्थत्वात्।

किञ्च भासमानवैशिष्ट्यप्रतियोगित्वेन तद्विषयज्ञानं सप्रकारकं चेत्? स्वस्यैव स्वविषयत्वापत्तिः। वस्तुतो भासमानवैशिष्ट्यप्रतियोगित्वं चेत्? विशेष्यस्यापि तदापत्तिः। किञ्चाभावविशिष्टज्ञानस्य निष्प्रकारकत्वापत्तिः, स्वरूपातिरिक्तवैशिष्ट्यस्य तत्राभावात्। अभावस्य भूतलादेश्चान्योन्याप्रतियोगित्वात्, स्वाप्रतियोगिकत्वाच्च। भासमानत्वं च किं मानविषयत्वमात्रम्, उतविशेषणविशेष्यसम्बन्धविषयया भासमानत्वम्, प्रत्यासत्तिं विना भासमानत्वं वा? नाद्य, प्रमेयमिति ज्ञाने विश्वस्य प्रकारत्वापातात्। द्वितीये यदि त्रिधा प्रकारः तदा आत्माश्रयः। अयं रत्यप्रसिद्धः। न तृतीयः, अयं घट इति प्रत्यक्षे घटत्वे अव्याप्तेः, सन्निकर्षादेव तत्सन्निकर्षप्रतीतेः। प्रमेयमिति ज्ञाने च घटत्वादेः प्रकारत्वे तत्सशयाभावप्रसङ्गः। तदंशे तत्सत्तानवधारणमिति चेत्? तर्हि किं प्रकारत्वेन, अखण्डज्ञानस्यापि सत्तावधारणात्मकत्वेन संशयादिनिवर्त्तकत्वसम्भवात्। प्रकारशब्दार्थस्तु विषयत्वम्। प्रतिपक्षानुमानेषु मध्ये ब्रह्मतज्ज्ञानपक्षकानुमाने धर्मिग्राहकप्रमाणबाधिते, सत्यज्ञानमनन्तमिति वाक्यगम्यस्यानन्तस्य संसृष्टत्वानुपपत्तेः, अनन्तत्वं ह्यभावाप्रतियोगित्वम्, अन्तशब्दस्य परिच्छेदवाचिनोऽभावपर्यवसानात्। ततश्च नान्योभावापेक्षसंसर्गसम्भवः। नच ध्वंसएवान्तः, अभावत्वे सत्युत्पत्तिमत्स्वरूपस्य ध्वंसत्वस्य शक्यत्वे गौरवात्। नगरान्तस्सीमान्त इत्यादावत्यन्ताभावेऽपि प्रयोगाच्च। अस्तु तर्हि संसर्गाभाव इति चेन्न, संसर्गाभावत्वस्यैकस्याभावात् नानार्थत्वापत्तेः। अन्योन्याभावातिरिक्ताभावत्वेनानुगमे गौरवात्। कथं तर्ह्यनन्तमाकाशमिति प्रयोगः, नह्याकाशोद्वितीयः? तत्रापि कथम्? आकाशस्यानित्यत्वात्। प्रचुरप्रयोगानुसारेण लाघवादभाव एवान्त इति निर्णीते अमरादिवच्चिरस्थायितामात्रेणोपचारितत्वात्, ततश्च ब्रह्माद्वितीयं सत्यज्ञानादिवाक्यार्थ इति संसर्गसाधनानुमाने बाधः। अत एव सत्यादिवाक्यपक्षकमप्यसाधु। एवं "वेदैश्च सर्वैरहमेव वेद्य" इत्येवकारेणात्मातिरिक्तस्य श्रुतितात्पर्यनिषेधाच्च बाधः।

प्रभृष्टादिवाक्ये तत्तात्पर्यगोचरे च व्यभिचारः। प्रमापक्षकानुमाने प्रथमं सिद्धसाधनम्, ज्ञाने विषयस्यैव प्रकारत्वात्। अप्रयोजकता च सर्वेषां हेतूनाम्। नापि तन्मात्रप्रश्नोत्तरत्वादिति हेतोस्सत्यादिवाक्येष्वसिद्धिः, भृगुवल्ल्याम् "अधीहि भगवो ब्रह्मे" ति प्रश्नस्येव ब्रह्मवल्ल्यामपि प्रश्नस्य कल्प्यत्वात्, उत्तरज्ञानानन्तवस्तुपरमिति प्रश्नोऽपि तथैव कल्पयितुमुचितः। नत्वसाधारणधर्मविषयः। त्वम्पदार्थविषयवाक्यपक्षक वेदमनुमानम्। तत्र 'कतम आत्मे' ति प्रश्नो न जात्यभिप्रायः, 'अतोन्यदार्तम्' 'स एष नेति नेत्यात्मा" "असङ्गोह्ययमात्मा' 'माययाह्यन्यदिव' 'नह्यस्ति द्वैतसिद्धि' रित्यादि वाक्यैर्द्वैस्यत्वादिन्यायोपोद्बलितैरात्मनि वास्तवजात्यादिसम्बन्धनिषेधात्; किन्तु अहमिति व्यवहारविषयतया सजातीयेभ्यो देहादिभ्यो विविच्य त्वम्पदार्थस्यासाधारणरूपेण निर्धारणपरः। नच सर्वस्याप्युत्तरस्य प्रश्नधर्मिनिष्ठा निर्धारितैकप्रकारपरत्वाद्विरुद्धो हेतुः, उत्तर प्रश्नतात्पर्यविषयमिति हि नियमः, अन्यथा ततो भिन्नविषयत्वेन संशयानपायात्, तत्र प्रश्नविषयो धर्मी चेत् स एवोत्तरस्यापि, धर्मश्चेत् स एवेति न सर्वथापि त्वदुक्तनियमः, धर्मिमात्र प्रश्ने धर्मवैशिष्ट्यतात्पर्यकोत्तरस्य वैयर्थ्यात्, विशिष्टज्ञान विनापि स्वरूप मात्रविषयावधारणात् संशयनिवृत्तिसम्भवात्।

यत्तूत्तरस्य प्रश्नानधिकविषयत्वे उत्तरत्वमेव न स्यादिति, तदप्युत्तरस्य प्रश्नविषयनिर्धारकत्वनियमनिरूपणेन निरस्तम्, धर्मप्रतिपादनेन ब्रह्म स्वरूपजिज्ञासाया अनिवृत्तेश्च। ब्रह्मस्वरूपस्यानुमानादिनैवावगमात् सत्यत्वादिधर्मा एव जिज्ञास्या इति चेत्? न, धर्मिग्राहकादेव तेषामपि सिद्धेः। ब्रह्मणो निर्धर्मकसदाद्यात्मस्वरूपविशेषस्तत्त्वावगम बिना न निश्चेतुं शक्य इति तत्र जिज्ञासा, अतएव ब्रह्मणस्सत्यत्वादिवैशिष्ट्यस्यान्यतोवगमेपि तस्या खण्डत्वविप्रतिपत्तिनिराकरणेन सत्यादिवाक्यमर्थवदित्यपास्तम्, भेदग्राहिमान विरोधेनाखण्डे ब्रह्मण्यन्यतः प्रतिपत्त्ययोगात्। सत्यादिवाक्यादेव प्रतिपत्तौ तेनैव तद्बाधासम्भवात्। विशिष्टतात्पर्यकल्पने गौरवाच्च। कथ तर्ह्यात्मन आकाश इत्यादेर्जगदुपादानत्वादौ तात्पर्यमिति चेन्न,— तस्यापि निमित्तोपादान-कार्यकारणवास्तवभेदनिरासेनानन्त्यप्रतिपादन एव तात्पर्यात्। 'उदरमन्तर कुरुते अथ तस्य भय भवती' ति भेददर्शनस्य तत्प्रकरणे निन्दितत्वात्। तत उत्तर केवलपरमेव।

यत्त्वध्ययनं करोतीति वाक्ये व्यभिचार इति ; तन्न, तत्रापि किं-शब्दाभिप्रेताध्ययनप्रातिपदिकार्थस्यैव प्रतिपाद्यमानत्वात् । तस्य चाध्ययनत्व संसृष्टरूपत्वेऽपि न हानिः। तस्मात् सत्यादिवाक्य पदोपस्थापितपदार्थसंसर्गा गोचरप्रमितिजनकम् , तादृशसंसर्गागोचरतात्पर्यकं एकप्रातिपदिकार्थमात्रपरं वा लक्षणवाक्यत्वात् , प्रातिपदिकार्थमात्रप्रश्नोत्तरत्वाद्वा ; लौकिकलक्षणवाक्यवत् । विशिष्टविषयप्रश्नोत्तरे व्यभिचारवारणाय प्रातिपदिकार्थमात्रेत्युक्तम् । नचा सिद्धिरित्युक्तम् । नचाप्रयोजकत्वम् , अनिर्णीते हि ब्रह्मपदार्थे वाक्येन तत्संसर्गस्य प्रमापयितुमशक्यत्वात् । तन्निर्णयश्च न मानान्तरेण, अलौकिकत्वात् । सत्यादिवाक्यादेव पदार्थभूततत्प्रतिपत्तौ तेनैव पुनः संसर्गप्रतिपादनस्य विरम्यव्यापारप्रसङ्गेनायोगात् ।

ननु वृद्धिशाली ब्रह्मपदार्थ इति व्याकरणादिना निर्णीतत्वात् तत्संसर्गनिष्ठ वाक्यमिति चेत् ? न, तावता ब्रह्मत्वमात्रं पदार्थ इति सिद्ध्यति, नैतावता तत्प्रतीतिः पर्यवसन्ना, ब्रह्मत्वस्य लोके बहुविधस्योपलम्भात् तद्विशेषाकाङ्क्षणात् । अन्वयप्रतियोगितावच्छेदकविशिष्टतया उपलम्भे सत्येव पदानां अन्वयबोधकत्वेन ब्रह्मणो जीवादिव्यावृत्तरूपेणाप्रतीतौ तत्संसर्गबोधनायोगात् ।

किंच पदानि सामान्याभिधायीनि, तदभिधानस्य व्यक्तिप्रतिपत्तिं विना पर्यवसानाभावात् व्यक्तेश्च शक्यसम्बन्धितया मानान्तरेणावगताया एवापर्यवसानेन लाभात्तदन्वयो वाक्यादवगम्यते, अलौकिकब्रह्मणस्तु ब्रह्मपदार्थबृहत्त्वसामान्य पर्यवसानेनालाभान्न तदन्वयस्तद्वाक्यादवगन्तु शक्यः, ततश्च व्याकरणादिभिस्सामान्यतो ऽवगतब्रह्मत्वस्यैवासति सङ्कोचकप्रमाणे निरवधिकस्यैव युक्तत्वेन सर्वात्मतायोग्यमेव तदिति प्रागवगतसामान्यापेक्षितविशेषस्वरूपपरैः सत्यज्ञानादिवाक्यैस्सत्यज्ञानानन्दात्मा प्रतिपाद्यते, तेषामभेदे ब्रह्मणस्सर्वात्मत्वायोगात्, तेषाच श्रुतिन्यायसिद्धत्वाच्च घटादेरिव तेषां मिथ्यात्वेनापि सर्वात्मत्वसम्भवः ।

यत्तु ' यतोवे ' त्युपक्रम्य " तद्ब्रह्म " " ब्रह्मैवेद विश्वमिदं वरिष्ठ " मिति सामानाधिकरण्यात् सर्वात्मकजगत्कारणब्रह्मपदार्थनिर्णय इति ; तन्न ,

यतोवेत्यादिना किं ब्रह्ममात्र तात्पर्यतो ऽवगतम्, जगत्कारणत्वविशिष्ट वा? नाद्य, रक्षणवाक्यत्वाविशेषात् सत्यादिवाक्येपि तन्मात्रपरत्वसम्भवात्। नान्त्य, कल्पितजगत्कारणत्वस्य तद्वाक्यार्थत्वायोगात्; जडस्य च सर्वस्य ब्रह्म भेदायोगाच्च। तथाच यद्रजत सा शुक्तिरितिवद्दृश्यमानोपमर्देन तदधिष्ठानर्भवेद सर्वमिति वाक्यार्थः। नच ब्रह्म भिन्यादिकारणतया निर्णीतमिति वाच्यम्, औपनिषदस्य मानान्तरागोचरत्वात्। तस्मात् सत्यादिवाक्य ब्रह्मनिष्ठम्। एवमस्थूलादिवाक्यमपि। "योय विज्ञानमय" इत्यादि वाक्यमपि 'कतम आत्मे' ति 'जिज्ञासितप्रत्यगात्ममात्रनिष्ठम्, चैतन्यातिरिक्तेऽपुरुषार्थे, श्रुतितात्पर्यायोगात्, स्वरूपातिरिक्तस्य आत्यादेर्ब्रह्मणि सयोग समवायतादात्म्याद्यन्यतमवास्तवयोगिप्यामावेन तस्य अत्यप्रतिपाद्यत्वात्, ब्रह्मणो निर्गुणत्वश्रुतिविरोधाच्च। चैतन्यातिरिक्तापुरुषार्थत्व तु "ब्रह्मविदाप्नोतिपर" मिति ब्रह्मज्ञानस्यैव मुक्तिहेतुत्वावगमात्, 'आनन्द ब्रह्मणो विद्वानि' ति ब्रह्मानन्दज्ञानस्यैव भयनिवर्तकत्वश्रवणाच्च, नच तत्र ब्रह्मातिरिक्त एवानन्दो वेदितव्यत्वेन निर्दिश्यते, 'आनन्दाद्ध्येव खल्वि' ति आनन्दस्यैव ब्रह्मता निर्देशात्। नच भेदनिर्देशाविरोधेनानन्दगुणत्वादिरयथं कल्प्यत इति वाच्यम्, ब्रह्मण आनन्दभिन्नत्वे हेयत्वप्रसङ्गात्। तयोस्सम्बन्धानिरूपणात्। चिन्द्भिन्नस्य दृश्यतया मिथ्यात्वाच्च। भेदनिर्देशस्यैव राहो शिर इतिवदौपचारिकत्वात्, उदरमन्तरमिति भेददर्शनस्यानर्थहेतुनोक्तेश्च ब्रह्मान्यदपुरुषार्थ। नच 'तमेव विद्वानि' ति विशिष्टब्रह्मज्ञानस्यैव मुक्तिहेतुत्व श्रुतिगतमिति वाच्यम्, तत्र हि 'पुरुष एवेद सर्व' मिति पूर्वत्र प्रतिपादित सर्वात्मत्वमेवशब्द आह, नच सर्वात्मत्व सति किञ्चिद्भेदेपि सङ्कच्छते। 'एकधैवानुद्रष्टव्य' मिति ब्रह्मज्ञानस्य एकाकारत्वश्रवणाच। अत्रहि प्रकारार्थं प्रत्यय, प्रकारश्च शब्दे आकार, सच विषय एवेत्युक्तम्, नचैतद्विशिष्टविषयत्वे सम्भवति; पराभिमतेश्वरे तदभिमतप्रकारस्यापि बहुत्वेन एकधैवेत्ययोगात्, 'यस्मिन्द्यौ पृथिवीचान्तरिक्षमोतम्मनस्सह प्राणैश्च सर्वै तमेवैक जानथात्मानमन्यावाचो विमुञ्चथे' ति यच्छब्दनिर्दिष्टस्यैव ज्ञातव्य नान्यदिति विशेषप्रतिपादनाच्च द्युभ्वादेर्यच्छब्दार्थत्वाभावात्। नहि यस्मिन्नासने देवदत्त

आस्ते तदानयेति वाक्यं देवदत्तस्याप्यानयनं प्रतिपादयति । आधेयस्यापि ज्ञेयत्वे एवैकमिति पदद्वयायोगात्, अन्यावाच इत्यस्य निर्विषयत्वापाताच्च। नचैतद्वाक्यस्य द्युम्वाद्यन्यविषयत्वम्, सत्यत्वादेरप्यज्ञेयत्वप्रसङ्गात् । नचान्यस्य स्वातन्त्र्येण ज्ञानं निषिध्यत इति वाच्यम्, स्वातन्त्र्यवाचिपदाभावात्; नित्यस्य कालादेस्तव मते पराधीनत्वानुपपत्तेश्च ।

'तद्वा एतद्ब्रह्माद्वय' मित्यद्वितीयत्वयोग्यस्यैव ब्रह्मशब्दार्थत्वोक्तेः अन्यत्रापि बृहति बृंहयतीति प्रतिपाद्यमाना बृद्धिस्सङ्कोचकाभावात् सर्वात्मत्वयोग्यतारूपा निरवग्रहैवेति तदेव ब्रह्मशब्दार्थः । ब्रह्मशब्दलक्ष्यमपि सर्वात्मत्वयोग्यमेव, निर्वचनप्राप्तवृद्धिकर्तृत्वादि परित्यज्य पूर्णचिन्मात्रस्यैव लक्ष्यत्वात् ।

नापि प्रतिकूलतर्कपराहतिः । तथाहि— न तावद्वाक्यं तत्संसर्गबोधकमिति नियमः, अप्रयोजकत्वात्, प्रकृष्टादिवाक्यैर्व्यभिचाराच्च । नच पदार्थस्य वाक्यार्थत्वानुपपत्तिः, वाक्यार्थब्रह्मणः पदशक्यत्वाभावात् । पदलक्ष्यस्य च न वाक्यार्थत्वानुपपत्तिः, सर्वत्रापि पदलक्ष्यत्वाद्वाक्यार्थसंसर्गस्य ।

*अथैकार्थत्वे आकाङ्क्षाद्यभावात् वाक्यत्वानुपपत्तिः ; तथाहि– यस्य पदस्य येन पदेन विना स्वार्थान्वयाननुभावकत्वं सा तस्याकाङ्क्षा, अन्वयाबोधो योग्यता, अन्वयप्रतियोग्युपस्थितिरासत्तिः;* अभेदवाक्यार्थे चान्वयाद्यभावात् आकाङ्क्षाद्यभाव इति,– तन्न, तात्पर्यगोचरस्यैवात्रान्वयपदेन विवक्षितत्वात् । अन्यथा शुक्लाङ्गामानयेत्यादौ शुक्लपदं विनापीतरपदस्य स्वार्थान्वयानुभावकत्वादव्याप्तिः । तात्पर्यगोचरार्थाबाध एव योग्यता । वाक्यार्थप्रतीत्युपायपदार्थोपस्थितिरासत्तिः । नचैवमपि पदलक्ष्यतावन्मात्रत्वात् वाक्यार्थस्य पदान्तरं विनाननुभावकत्वं नास्तीति वाच्यम्, पदत्वेन स्मृतिहेतोः पदान्तरेण विनानुभवाजनकत्वात् ।

ननु सत्यं ब्रह्मेत्येतावतोपपत्तेः किमितरेणेति चेन्न;– विनिगमकाभावात् । किंच एकैकपदप्रयोगे लक्षणैवानुपपन्ना, अनुपपत्तिप्रतिसन्धाना-

भावात् । ज्ञानादिपदसमभिव्याहारं विना वाक्यार्थब्रह्मस्वरूपविशेषानवगमेन मुख्यार्थसम्बन्धाप्रतीतेश्च । नाप्येकैकपदलक्ष्यावगमात् ज्ञानानन्दाद्यभेदसंशय निवृत्तिः, तत्र तस्य सत्तानवधारणत्वात् । नचानन्दपदादेव ज्ञानाद्यात्मत्व सिद्धेर्नेतरापेक्षेति वाच्यम्, ज्ञानादेर्मिथ्यात्वेपि ब्रह्मानन्त्योपपत्तेः । अतो न कस्यापि वैयर्थ्यम् ।

ननु पदार्थस्य वाक्यतात्पर्यगोचरत्वमेवानुपपन्नमिति चेत्? किमेतत् पदार्थातिरिक्तत्वस्य वाक्यार्थतात्पर्यगोचरत्वप्रयोजकत्वात्, उत पदार्थत्वस्य वाक्यतात्पर्याभावप्रयोजकत्वात्; नाद्यः, वायोः क्षेपिष्ठत्वेन विषस्य भक्षणेन संसर्गे तदभावात्; नान्त्यः, वाक्यजन्यपदार्थज्ञानेन पुरुषार्थलाभे वाक्यार्थ इव तस्मिन्नप्युपक्रमादिना तात्पर्यावश्यम्भावात् । अखिचात्र सत्यादिवाक्यार्थज्ञानात् सत्याद्यात्मब्रह्मस्वरूपाज्ञाननिवृत्तिः ।

यत्तु वाक्यार्थस्यैकत्वे उद्देश्यविधेयभावाभावात् ब्रह्मस्वरूपासिद्धिरिति, तन्न, यच्छिद्रं तत् खमितिवत् यत् सत्यज्ञानमनन्तञ्च तत् ब्रह्मेति तद्भावस्य सत्त्वात्, भेदभ्रमादेव उद्देश्यविधेयभावोपपादकप्रसिद्ध्युपपत्तेः ।

एतेन सत्यादिवाक्यस्थसर्वपदानां लक्षकत्वे ब्रह्मणो भेदे कथमनन्त शब्दविरोध उद्भाव्यते, नच लाक्षणिकमप्यानन्दपदं भेदेन विरुद्ध्यते? कथं वा ब्रह्मणस्सत्यज्ञानाद्यात्मकत्वे इयं श्रुतिरुपन्यस्यते? नहि सत्यादिपद-लक्ष्यस्य सत्याद्यात्मत्वम्, गङ्गादिपदलक्ष्यस्य गङ्गात्वाभावादिति निरस्तम्, विशिष्टवादिना सत्यादिपदेन वाच्यैकदेशस्यैव चैतन्यस्वरूपस्य घटोनित्य इत्यत्र घटस्येव लक्ष्यत्वात् । लक्षणाबीजं च तात्पर्यानुपपत्तिरित्युक्तम् । तस्मात् पदार्थबोधकवाक्यप्रखण्डनिष्ठम्, सगुणवाक्यं [illegible] संसर्गनिष्ठम्, तेन विनोपासनासिद्धेः । तस्यापि परमतात्पर्यं ब्रह्मण्येव, ब्रह्मसाक्षात्कारादन्यत्र परमपुरुषार्थासिद्धेरिति ।

एवं तत्त्वमस्यादिवाक्यमखण्डार्थम्, परस्परनिरूपितकार्यकारणभावानधिकरणद्रव्यगोचरसमानाधिकरणवाक्यत्वात्, सोऽयं देवदत्त इति वाक्यवत् ।

द्रव्यत्व रूपाद्यन्यत्व विवक्षितं मतद्वयसाधारणम् । यावद्व्यवहार कल्पित गुणाश्रयत्वेन वा नासिद्धिः । तन्त्व सिद्धान्ते सहोत्पन्नरूपादिविषये नील मुत्पलमिति समानाधिकरणवाक्ये व्यभिचारवारणाय । मृत् घट इत्यत्र व्यभिचारवारणाय कार्यकारणभावानधिकरणेति । दण्डीति प्रयोगे च न द्रव्ययाच कयोः दण्डपुरुषयोस्सामानाधिकरण्यमिति न व्यभिचारः । अन्यथा दण्डपुरुष इति स्यात् । इनिप्रत्ययस्तु सम्बन्धविशेषमात्रमाह नद्रव्यम्, दण्डिज्ञान मित्यपि प्रयोगस्य मुख्यार्थत्वात् । द्रव्यमात्रसम्बन्धप्रवृत्तिनिमित्त हि द्रव्य गोचरम्, इनिप्रत्ययार्थसम्बन्धस्तु रूपादिसाधारण । सोऽयमित्यत्र तत्पदार्थस्तु नानेति न दृष्टान्ते असिद्धिः । नन्वेवमपि द्रव्य घट इति प्रयोगे जाति द्रव्यसामानाधिकरण्यनिष्ठे व्यभिचारः, तदुभयार्थस्य द्रव्यस्यैकत्वेनाकार्यकारण द्रव्यगोचरसमानाधिकरणवाक्यत्वस्य सत्वात्; नच यथा मृत् घट इति बुद्धिर्घटस्य मृत्त्वाश्रयतादात्म्यविषयतयाऽन्यथासिद्धेति न घटस्य मृद्भेदः एव द्रव्य घट इतिधीरपीति घटो द्रव्यत्वाश्रय इति पदार्थयोः परस्पर निरूपितकार्यकारणभावराहित्याभावान्न व्यभिचार इति वाच्यम्, तत्कारणस्यैव तस्यापि द्रव्यत्वव्यवस्थापकगुणादेस्सत्वेन तदाश्रयत्वादिति चेत् ? सत्यम्, घटो द्रव्य तदुपादानमपि द्रव्यमेवेति न पदार्थयोः कार्यकारणभावराहित्यम् । नच वाक्यार्थप्रतीतिविषयपदार्थयोर्न कार्यत्वादिकमिति वाच्यम्, तस्य हेतुत्वे नाविवक्षितत्वात् । नित्यपरमाणोरप्रामाणिकत्वेन तद्गोचरवाक्ये न व्यभिचारः ।

औपाधिकभेदवत्पदार्थकसमानाधिकरणवाक्यत्वात् महदम्बर कुम्भाम्बरमिति वाक्यवदिति वा प्रयोगः । अत्र घटाकाशः शरावावच्छिन्नाकाशात् भिन्न इति वाक्ये व्यभिचारवारणाय समानाधिकरणपदम् । एवं परस्परनिरूपिता धाराधेयत्वराहितपदार्थसमानाधिकरण्यवाक्यत्वात्, सोऽयं देवदत्त इति वाक्य वदिति प्रयोक्तव्यम् । नच दृष्टान्तस्य साध्यवैकल्यम्, सोऽयमिति पदद्वय लक्षितदेवदत्तैक्यस्य तेन प्रतिपादनात् ।

यदत्रोक्तं सोऽयमिति पदद्वय तत्तेदन्तयोरेकवृत्तित्व बोधयतीत्यादि; तन्न, नच किं सोऽयमिति पदद्वयं तत्तेदन्ते एकवृत्ती इति बोधयति, उत

सोऽयमित्येव प्रतीत्याकारः वाक्यतात्पर्यन्त्वेकवृत्तित्व इति ? नाद्यः, तदिद शब्दयोरतत्तेदन्ताविशिष्टवाचकत्वेन उक्तरूपतद्विशेष्यकबोधस्यासम्भवात्, आश्रय। भेदवाचिपदाभावेन एकवरूपाभेदस्य वाक्यादन्येनानुपस्थितेः । ननु वाक्य मेवाश्रयाभेदं प्रतिपाद्य तत्तेदन्तयोरेकनिष्ठतामपि बोधयतीति चेन्न,– विरम्य व्यापारप्रसङ्गात्, तत्तेदन्ताश्रयत्वस्याभिन्नयोरेव सिद्धत्वाच्च ।

नचाश्रुतदेवदत्तवृत्तित्वमेव बोधयतीति वाच्यम्, देवदत्तद्वयाश्रितत्वेपि उपपत्तेर्वाक्यात् भेदभ्रमानिवृत्तिप्रसङ्गात् । वृत्तिपदाभावाच्च । द्वितीये यदि तात्पर्यकल्पनम्, लाघवेन विशेषणीभूताभेद एव तदस्तु । अपिच समानाधिकरणवाक्यतयाऽभेद एव तात्पर्यम्, तत्र च विशिष्टाभेदे विशेषणयो रप्यन्वयो वाच्य॰, पदार्थैकदेशेऽन्वयाव्युत्पत्ते॰; विशेषणयोश्चाभेदाभावेन तदव च्छेदकतया नीलगुणोत्पलत्वयोरिव वाच्य, अवच्छेदकत्वं चावच्छेद्यान्यून कालीनत्वमेव, शौक्ल्यादेरपि यावद्द्रव्यभावित्वेन गोपिण्डावच्छेदकत्वात् तत्रा व्याप्ति. । ननु यद्वत्तया ज्ञात एव यदन्वयधीस्तत्त्वम्, उपलक्षणस्याप्यवच्छे दकत्वेन विशेषणत्वप्रसङ्गात् । नहि काकवत्ताज्ञान विना काकवद्देवदत्तगृह मितिधीर्भवति । नवा तत्संशयादिनिवृत्तिः । तच्चावच्छेदकत्व न तत्तेदन्तयो रीत्, तयोरभेदान्यूनकालीनत्वाभावात् । ततो लक्षणया अभेदमात्र वाक्यार्थ इति अखण्डार्थता । अभेदश्च न संसर्ग इत्युक्तम् । पदार्थानधिकविषयत्वेपि वाक्यस्य वर्णितरीत्या ततस्तत्तानिश्चयरूपा भेदभ्रमनिवृत्तिश्चोपपद्यते, भेदोपाधि परामर्शपूर्वक पूर्वं भेदानधिगतेस्ततत्संशयनिवृत्तेः । एवञ्च यत्र धर्मस्य नाभेदावच्छेदकत्व तत्र सर्वत्रापि न विशिष्टाभेदः । नचैव दण्डय मित्यादावपि विशिष्टाभेदो न स्यादिति वाच्यम्, इष्टापत्तेः ।

नन्वस्ति प्रतिकूलतर्कबाधः; तथाहि– तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वे पदार्थ द्वयबोधकवाक्यैरेवावगतार्थत्वेन वैय्यर्थ्यप्रसङ्गः; नच भेदभ्रमस्तेन न निवृत्त इति वाच्यम्, अद्वितीयब्रह्मस्वरूपनिश्चये तदयोगात्; अनिश्चयेत्ववान्तर वाक्यार्थस्यैव विचार्यत्वात्, पदार्थनिश्चयाभावे महावाक्यस्यार्थबोधकत्वात्; नच जीवस्वरूपस्य घटादिवत् बाध्यत्वेपि तदद्वितीयत्व सिद्ध्यतीति वाच्यम्, 'योयविज्ञानमय' इत्यादिवाक्यात्तस्य चिद्रूपतया निश्चितत्वेन तदभेदेनैव ब्रह्मणोऽद्वितीयत्वनिश्चयात्, ब्रह्मणि परोक्षत्वादिभ्रमनिवृत्तेरपि तत एव सम्भ-

वादिति, मैवम्, अद्वैतवाक्यादि ब्रह्मणो जीवाभेदो न सिद्ध्यति, घटादेरिव जीवस्वरूपस्योपमर्देनापि तन्निश्चयसम्भवात्, नच निष्प्रपञ्चस्वप्रकाशात्मना निर्णीतजीवस्वरूपस्य बाधो नसम्भवतीति वाच्यम्, तन्निर्णायकवाक्यस्य महावाक्यशेषत्वेन तेन विना तदसिद्धेः। तथाहि– न तावदद्वैतार्थसिद्धये तन्निर्णयः, तस्योक्तविधयान्यथापि सम्भवात्, नापि निष्प्रपञ्चप्रकाशात्मकत्वं स्वत एव प्रतिपाद्यम्, उपयोगाभावात्, प्रयोजनस्य "ब्रह्मविदाप्नोतिपरम्" "तरति शोकमात्मविदि" ति श्रुतिद्वयपर्यालोचनया निष्प्रपञ्चात्मब्रह्माभेदनिश्चयाधीनत्वाद्वाक्यद्वयस्य स्वस्वार्थे पर्यवसन्नत्वेन ततस्तदभेदासिद्धेश्च, अतो महावाक्यमेवाभेदयोग्यतासिद्ध्यर्थं निष्प्रपञ्चात्मत्वमपेक्षत इति तन्निर्णायकवाक्यं महावाक्यशेषमेव। नच जीवस्वरूपस्य बाधे बन्धमोक्षयोर्वैयधिकरण्यं स्यादिति तस्य मुक्तिकालीनत्वे निर्णीते ऽद्वैतश्रुत्या तदभेदः सिद्ध्यतीति वाच्यम्, जीवस्वरूपविषयाणां न्यायानां तद्विषयवाक्यशेषतया ऽतच्छेषत्वात्। एवं सत्यादिवाक्यमपि महावाक्यशेषमेव, तावन्मात्रात्पुरुषार्थासिद्धेः, तस्यादाहृतश्रुतिद्वयपर्यालोचनया प्रत्यगभिन्नब्रह्मज्ञानाधीनत्वात्, तदभेदस्य महावाक्यं विनाऽप्राप्तेः, महावाक्यं विना जीवपरभेदश्रुतिविरोधेनाद्वैतवाक्यस्य निरङ्कुशाद्वैततात्पर्यकल्पनायोगाच्च। ननु भेदश्रुतेरनुवादत्वात न स्वार्थतात्पर्यम्, "नान्योऽतोऽस्ती" ति श्रुतिश्च जीवपरभेदं निषेधतीत्युक्तम्, सत्यम्, जीवपरभेदनिषेधश्रुतिन्याययोस्तदभेदप्रापकवाक्यशेषत्वात्, अन्यथा सामान्यतो हितसाधनत्वबोधकोत्पत्तिविधेरर्थवादोपस्थितस्वर्गमादाय पर्यवसानसम्भवात् तदधिकारविधिमात्रं निरर्थकं स्यात्। तत्र चेदप्ययमेवे प्रकृतेपि तथेत्यलमनया चर्चया। तदुक्तं भगवता नारदेन "तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्। ज्ञानेत्वनाहते सिद्धं सर्वं ब्रह्ममयं भवेदि" ति। अतएवैतस्य स्वर्गकामाधिकारवाक्यस्येव महावाक्यत्वम्, नास्याप्रयोजकत्वम्, 'एव थैवानुद्रष्टव्यमि' त्याद्युपक्रमार्थतात्पर्यग्राहकश्रुतिविरोधप्रसङ्गस्य विपक्षे बाधकत्वस्य वत्त्वात्। चैतन्यातिरिक्तस्य मिथ्यात्वेन नाभ्रप्रतिपाद्यत्वायोगाच्च। किञ्चाखण्डार्थत्वाभावे वाक्यं निर्विषयं स्यात्, समानाधिकरणवाक्यस्य तादात्म्यातिरिक्तसम्बन्धाबोधकत्वात्, जीवपरयोश्च गुणगुण्यादिवद् भिन्नत्वे सति

अभिन्नसत्ताकत्वलक्षणतादात्म्यस्य भेदमिथ्यात्वं विना असम्भवात्, मिथ्या भेदस्यच प्रमाणशास्त्राप्रतिपाद्यत्वात्, जीवपरयोर्गुणगुण्यादिभावाभावाच्च। नचाभेदएव संसर्गो वाक्यार्थः, भिन्नयोरभेदायोगात्; स्वरूपमात्राभेदस्य संसर्गत्वाभावात्; तथाच परिशेषाद्वाक्यमखण्डार्थनिष्ठमेव।

अत्राह नवीनः — तदाश्रितत्वात् जीवे तदितिपदव्यपदेशः, 'समर्थः- पदविधि' रित्यत्र 'समर्थपदाश्रितो विधिस्समर्थपदेनोच्यते' इति महाभाष्योक्तेः, "सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा" इति वाक्यशेषाच्च। अथवा "ब्राह्मणोऽस्य मुखमासीदि" ति यत् शरीरविशिष्टत्वेन ततो जातत्वात् तदिति व्यपदेशः, "इग्यणस्सम्प्रसारण" मित्यत्र "काकाजातः काकः श्येनाजातः श्येनः एव सम्प्रसारणाज्जातः सम्प्रसारणमि" ति महाभाष्योक्तेः; "सन्मूलास्सोम्येमास्सर्वाः प्रजा" इति वाक्यशेषाच्च। अथवा "धान्यमसि धिनुहि देवानि" त्यत्र तण्डुले धान्यशब्दवत् तदधीनत्वात्तद्व्यपदेशः, "प्राणबन्धनं हि सोम्य मन" इति वाक्यशेषे जीवस्येश्वराधीनत्वोक्तेः; "यदधीना यस्य सत्ता तत्तदित्येव भण्यते" इति भारतोक्तेश्च। अथवा अतिदेशोऽयम्, तद्वत्त्वमसीत्यर्थः; "बहुगणे" त्यादिसूत्रे बहुगणवतुडतय स्संख्यावत् भवन्ति, अन्तरेणापि वतिमतिदेशो ऽवगम्यत" इति भाष्योक्तेः। एवञ्च सत्येकस्मिन्नेव पदे लक्षणेति। अन्येतु - शरीरवाचिनां देवमनुष्यादि शब्दानां शरीरिपर्यन्तत्वदर्शनात् जीवस्य 'यस्यात्मा शरीरमि' त्यादिश्रुत्या ईश्वरशरीरत्वात् तत्त्वमसीति व्यपदेशः शरीरशरीरिभावनिबन्धन इत्याहुः। इति। तन्न, विधेस्समर्थपदाश्रितत्ववत् जीवस्य ब्रह्माश्रितत्वस्य वास्तवस्या सम्भवात्; औपाधिको हि जीवपरयोर्भेदः, "यथाह्यय ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजो ऽयमात्मा" "एको देवस्सर्वभूतेषु गूढ" इत्यादिश्रुतेः। "स एष इह प्रविष्ट" इति परस्यैव जीवभावेनानुप्रवेशश्रुतेश्च। अनुप्रविष्टोऽन्तर्याम्येव न जीव इति चेन्न; — "सवा एष भूतानीन्द्रियाणि विराजन्देवताः कोशांश्च सृष्ट्वा। प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव तस्मादद्वय एवा

यमात्मा सन्नाथो नित्य" इत्यादिश्रुतिष्वनुप्रविष्टस्य मूढत्वव्यवहर्तृत्वादि-श्रवणात् । न चान्तर्यामी मूढो व्यवहर्ता वा । "अनेन जीवेनेत्यनुप्रविष्टे जीवशब्दप्रयोगाच्च । किं न तावदणुर्जीवः, 'एष महानज आत्मे' ति श्रुति-विरोधात्; आगमपरिमाणश्रुतिविरोधाच्च । अणुत्वे प्रत्यक्षस्यानुपपत्तेः विरुद्ध देशे युगपदुत्पन्नयुगपदुःखानुभूतिद्वयायोगाच्चेत्युक्तम् । नापि सर्वगतः, अहमनु-भवगोचरस्य सर्वगतत्वे प्रमाणाभावात् । अनुमानानां धर्मिग्राहकप्रमाण-बाधात् । श्रुतौ च ब्रह्मात्मनैव तस्य विभुत्वं प्रतीयते, अतोऽहमनुभवान्मध्य-मपरिमाणो जीवः । तस्य च स्वाभाविकत्वे चार्वाकमतप्रसङ्गात् कृतहान्यादि प्रसङ्गात् विधिमोक्षशास्त्रानर्थक्यप्रसङ्गाच्च औपाधिकभेदवानेव परात्मा जीवः । स च भेदोऽपारमार्थिकः, तदभिन्ने तद्भेदस्य तत्सामानाधिकरण्यायोगात्, तथा च कल्पितभेदवान् जीवः । तेन तदाश्रितत्वमपि कल्पितभेदेति तत्परो भेदोऽप्रमाणं स्यात्, बाधितार्थकत्वात् । "सदायतनाः सत्प्रतिष्ठा" इति वाक्येनैव तन्निर्देशितस्यैक्यपर्यवसानाच्च । एतेन तज्जातत्वमपि व्याख्यातम्, जीवस्य स्वरूपेणोत्पत्त्ययोगात् । शरीरविशिष्टस्य केवलजीवादन्यत्वे तस्मादनि-ष्पत्तेः । अनन्यत्वेऽपि सन्मूला इत्यनेनैव तन्निर्देशितस्यैक्यपर्यवसानाच्च । धान्यमसी त्यत्रापि न धान्याधीनत्वं प्रतिपाद्यते, विनियोगबलाद्धान्यशब्देन कथञ्चित्त-ण्डुला एवोपस्थाप्यन्ते । तदधीनत्वस्याप्यवास्तवस्य शास्त्राप्रतिपाद्यत्वात् । वाक्यान्तरेण सिद्धत्वाच्च । यदधीना यस्य सत्तेत्यादिभारतवचनं च तत्र न साधु, तत्कार्यस्य जीवस्य वस्तुतो भिन्नस्य तदधीनसत्ताकत्वायोगात् । कल्पितभेदस्यैव तदधीनसत्ताकत्वात् । तद्वदित्यतिदेशोऽप्यनुपपन्नः, अतिदेश-ज्ञापकाभावात् । बहुगुणेत्यादिरूपेषु एकधेनेत्यादिवत् कतिधेत्यादिप्रयोग-सिद्ध्यर्थं क्वचित् विनाप्यतिदेश आश्रितः । न चेह तथा किञ्चित् तेन विनानु-पपन्नमस्ति । न च त्वम्पदमुख्यार्थलाभ एव प्रयोजनम्, त्वम्पदवाच्ये श्वेतकेतौ ब्रह्मसारूप्यस्य बाधितत्वात् । न च मुक्तौ तद्वदिति वाक्यार्थः, मुक्तिवाचक पदाभावात् । त्वम्पदेन मुक्तिविशिष्टस्य जीवस्य लक्षणायामतिदेशकल्पकाभा-वात् असीतिवाक्यार्थस्य वर्तमानत्वश्रुतिविरोधाच्च । नित्यज्ञानादिमत्त्वमतिदेशार्थः, न चानुभवविरोधः, आवृतत्वादिति चेन्न; — अविद्यां विना प्रकाशावरणानु-

पपत्ते. । जीवातिरिक्तनित्यज्ञाने प्रमाणाभावात् , जीवधर्मिकज्ञानस्यानित्यत्वानुभवेन बाधितत्वाच्च । यत्तु "सआत्मा अतत्त्वमसीति पदच्छेद", भिन्नशकुनिसूत्रदृष्टान्तबलात् शब्दोनित्य इत्यत्र घटदृष्टान्तेनानित्य इति च्छेदवदिति, तदतिफल्गु, ईश्वरभेदस्य प्रत्यक्षसिद्धत्वेन अजिज्ञासितस्याप्रतिपाद्यत्वात् ; एकविज्ञानाधीनसर्वविज्ञानाद्वितीयत्वप्रतिज्ञातदुपपादनाद्यनेकोपक्रमविरोधाच्च । दृष्टान्तमात्रबलात् भेदोपदेशे च तद्वदेव जीवस्य शकुनित्वं ब्रह्मणोऽचेतनत्वं च विवक्षितं स्यात् । अन्यथा दृष्टान्तवैषम्यात् । अहं ब्रह्मास्मि, तत्त्वमेव अहमेव तत् , आत्मा ब्रह्मैव, ब्रह्मात्मैव, अतस्रेव न विचिकित्सामीत्यादिषु महावाक्येषु त्वदुक्तकल्पनायोगाच्च । तस्मादर्वाचीनमतमप्राचीनमेव ।

यत्तु अन्येषां मतम्, तत्र किं मनुष्यादिशब्दानामात्मनीव त्वशब्दस्यान्तर्यामिणि लक्षणा, किंवा मुख्यार्थत्वमेव ? नाद्य , अन्तर्यामिलक्षणाविनानुपपत्त्यभावात् । नच ब्राह्मणादिशब्दानामपि न लक्षणेति वाच्यम् , ब्राह्मणत्वस्य तद्विशिष्टत्वस्य वा तदर्थत्वात् , शरीरातिरिक्तात्मनश्च तदुभयातिरिक्तत्वात् । न द्वितीय , त्वशब्दस्य सम्बोध्यमात्रवाच्यकत्वात् अन्तर्यामिणश्च सम्बोध्यादन्यत्वात् । जीवस्य परमात्मशरीरत्वाभावाच्च । नहि जीवः परस्य भोगायतनम् । नच साक्षात्प्रयत्नाधिष्ठेयत्वाच्छरीरत्वम्, अङ्गुल्यादेरपि साक्षात्प्रयत्नाधिष्ठेयत्वात् । अन्त्यावयवित्वस्य जीवे अभावात् । ब्रह्मणि प्रयत्नाभावाच्च । अतस्तत्पदस्य जगत्कारणत्वाद्वितीयत्वादिविशिष्टवाचिनस्त्वंपदस्य च परिच्छिन्नाहङ्काराभिन्नचैतन्यवाचिनस्स्वरूपमात्रलक्षणयाऽखण्डार्थत्वम् । साच लक्षणा भागत्यागेन भागगोचरा जहदजहद्रूपेति । *

अत्र ब्रूम , प्रथमलक्षणे मिथोयोग्यलक्षणवाक्ये ऽव्याप्ति , तत्र उक्तसंसर्गाप्रसिद्धे । नच तस्यालक्ष्यत्वमेव ? स्वरूपमात्रप्रश्नोत्तरत्वादियुक्तेस्तुल्यत्वात् । अन्यथा तस्य तत्रैव व्यभिचारापत्ते । प्रमेयत्वरूपलक्षणवाक्ये प्रमाविषयत्वं प्रमेयत्वमिति वाक्ये प्रकाशो बुद्धिरिति त्वदभिमतप्रकाशस्वरूपलक्षणवाक्ये चा व्याप्ति , स्वरूपलक्षणस्य लक्ष्यानतिरेकेण संसर्गाभावात् । स्वपदोपस्थापितपदार्थसंसर्गगोचर ज्ञानजनकत्वविरहस्यायामिथोयोग्यलक्षणवाक्यमात्रेति

व्याप्तिः। किंच– योग्यताघटितत्वेनैव त्वया निर्वचनीयत्वात् स्वपदोपस्थापितपदार्थसंसर्गगोचरप्रमाजननयोग्यान्यत्वमखण्डार्थत्वमित्यर्थः स्यात्, तथाच सर्वस्यापि लक्षणवाक्यस्य त्वदुक्तरीत्या शक्तिभ्रमादर्थान्तरसंसर्गबोधकत्वसम्भवा दसम्भवः। नन्व्यत्यासाभावे चार्थान्तरभ्रमेण लक्षणवाक्यत्वभ्रमदशाया स्वरूपमात्रबोधकतया घटमानयेत्यादावतिव्याप्तिः। किंचास्मिन् पक्षे लक्षणवाक्यानां स्वगोचरसाक्षात्कारजनकतया सिद्धसाधनम्। किंच संयोगलक्षण वाक्येऽव्याप्तिः, अप्राप्तयोरितिपदोपस्थापितसम्बन्धिद्वयनिरूपितसंसर्गस्यैव संयोगस्य एतल्लक्षणवाक्यार्थत्वात्। पदोपस्थापितेत्यनेन पदद्वयोपस्थापितत्वं विवक्षितमिति चेन्न,– उपादानोपादेयभावानापन्नयोर्द्रव्ययोः प्राप्तिस्संयोग इत्यादौ तस्यापि सत्त्वात्। भिन्नार्थकत्वं पदद्वयविशेषणमिति चेत्? प्रवृत्तिनिमित्त भेदस्य प्रकृते सत्त्वात् भिन्नविशेष्यकत्वस्य सत्यादिवाक्येप्यभावेन सिद्धसाधनात्। लक्ष्यलक्षणपदद्वयोपस्थापितत्वं विवक्षितमिति चेन्न;– व्यधिकरण वाक्येतिव्याप्तेः। स्वावयवभूतलक्ष्यलक्षणपदद्वयोपस्थापितत्वं विवक्षितम्, व्यधिकरणवाक्ये स्वावयवलक्ष्यादिपदाभावान्न दोष इति चेन्न;– तथासति तत्त्वमस्यादिवाक्ये अव्याप्तेः; प्राणस्त्वप्रतिपादकार्थवादे साध्यप्रसिध्युक्तिभङ्गाच्च। विषं भुङ्क्ष्वेत्यत्र चातिव्याप्तिः, समुदायस्यैवार्थान्तरलक्षकत्वात्; अन्यथा विषादिपदाना द्विषदन्नादिलक्षकत्वे द्वितीयाया मुख्यार्थत्वेन सर्वपदलक्षणाभङ्गापातात्। असम्भवश्च, तथाहि– चन्द्रं न जानामीत्यज्ञानानुभवः कश्चन्द्र इति प्रश्नश्च न स्वरूपमात्रनिष्ठौ, अत उत्तरमपि तत्समानार्थम्, चन्द्रस्य प्रत्यक्षेणावगमाच्च नाज्ञानप्रश्नौ स्वरूपगोचरौ, अस्तिहीन्द्रियसन्निकर्षादिवशादवर्जनीयं तज्ज्ञानम्, नच तस्य ज्ञाने चन्द्र इति व्यवहारप्रसङ्गः, चन्द्र पदस्य तत्राव्युत्पत्तेः, तत्सेवार्थप्रवृत्त्यादेश्चेष्टत्वात्। उत्पन्नमपि तज्ज्ञानमनव धारणमिति चेत्? कुत एतत्? उत्तरकाल संशयदर्शनादिति चेत्? कोऽय संशयः? अयं चन्द्रो नवेत्यादिरूप इति चेत्? तर्हि धर्मिस्वरूपमवधृत मेव, धर्मयोरेवात्र कोटित्वात्। इतश्च न स्वरूपानवधारणम्, प्रादेशमात्रत्व वर्तुलत्वसकज्जलत्वप्रकृष्टप्रकाशत्वादिनावधारणात्। नच चन्द्रत्वमनवधृतमित्यपि वक्तुं शक्यम्, संस्थानविशेषरूपस्य तद्व्यङ्ग्यजातिरूपस्य वा चन्द्रत्वस्य

प्रत्यक्षेणैव निश्चयात्। अत एव हि न तत्स्थानादौ संशयो दृश्यते। अत एव वाक्यश्रवणात् प्रागनिर्णीतस्य चन्द्रशब्दवाच्यत्वादन्यस्य कस्यापि तदनन्तरनिर्णयो निपुणनिरूपणेऽपि नानुभवमारोहति। एवमन्तर्गदृश्यस्य ज्योत्स्नादिना चन्द्रस्वरूपस्य तत्स्थानादिरूपचन्द्रत्वविशिष्टत्वावधारणं दृश्यते, तथा प्रश्नोत्तरे च तदानीमेव, नच तत्र त्वदुक्तानवधारणसम्भवः। किञ्च — चन्द्रशब्दस्य कश्चिदर्थोऽस्तीत्यवधारणे सत्येव हि कश्चन्द्र इति पृच्छति, अन्यथान्यप्रश्न एव वा किं चन्द्रशब्दस्यार्थ इत्यादिरूपेण प्रश्नो वा स्यात्? अत एव ह्यस्मिन्ज्योतिर्मण्डले कश्चन्द्र इति प्रश्न। स्वरूपस्यैवाज्ञाने कथं ज्योतिर्मण्डले न प्रश्नः? ज्योतिष्ट्वेन निर्णयादेवहाय प्रश्नः। किंच नानार्थत्वज्ञानदशायां देवदत्तयज्ञदत्तयोश्चन्द्रपदव्यवहारं शृण्वतोः द्वयोः प्रष्ट्रोरन्यतरप्रत्यन्यतरेण प्रकृष्टप्रकाशश्चन्द्र इत्युपदेशे कृते तत्प्रष्टवतस्संशयनिवृत्तावपि अन्यप्रष्टवतः स्वप्रश्नमूलसंशयो न निवर्त्तते, अत एव प्रागिव कश्चन्द्र इति पृच्छति, अतस्तेन वाक्येनान्यतरस्य जिज्ञासाया निवृत्तेरन्यतरस्य शृण्वतोप्यनिवृत्तेः प्रश्नयोः विषयभेदो वाच्यः। किञ्च— नानार्थत्वभ्रमदशायां देवदत्तयज्ञदत्तयो श्चन्द्रव्यवहारं शृण्वत एकस्य तदुभयजिज्ञासो। कश्चन्द्र इति पृष्टेन देवदत्तेन प्रकृष्टप्रकाशश्चन्द्र इत्युपदिष्टेपि काचिज्जिज्ञासा निवर्तते, यज्ञदत्त तु जिज्ञासया प्रागिव कश्चन्द्र इति पृच्छति, तत्र निश्चितजिज्ञासितयोर्भेदो वाच्यः। किंच— कस्यचिचन्द्रव्यवहारदर्शनेन्यस्य प्रकृष्टेत्याद्युपदेशेन जिज्ञासानिवृत्तावपि पश्चाच्चन्द्रपदस्य नानार्थत्वभ्रमे प्रागिव सैव जिज्ञासा आवर्त्तते, न तत्र स्वरूपजिज्ञासाया उत्थितिसम्भवः। तर्हि चन्द्रचन्द्रत्वाचन्द्रव्यावृत्तिप्रकृष्टप्रकाशादीनां ज्ञातत्वे प्रश्नोत्तरयोर्निर्विषयत्वप्रसङ्ग इति चेन्न- तयोश्चन्द्रशब्दवाच्यताविषयत्वात्। ननु प्रकृष्टप्रकाशे चन्द्रत्वाज्ञानं विना वाच्यत्वाज्ञानप्रश्नयोरप्ययोगात् तदेव प्रश्नविषयः, तन्निश्चये हि यथा शुक्ले पटगुणे ऽयं शुक्लशब्दवाच्य इत्याप्तवाक्यान्निश्चये पटशौक्ल्ये न तद्वाच्यत्वसंशयः. एवं चन्द्रत्वसंज्ञिता काचिज्जातिस्तदाश्रयश्चन्द्रपदवाच्य इति निश्चये सति प्रकृष्टप्रकाशे चन्द्रत्वनिर्णये तत्संशयो न स्यात्, तन्निष्ठे धर्मे वाच्यत्ववैशिष्ट्यनिश्चयस्योभयत्र तुल्यत्वादिति चेत्? तर्हि शुक्लत्वं नाम काचिज्जातिस्तदाश्रयश्शुक्लपदवाच्य इत्याप्तवाक्यान्निश्चये पटशौक्ल्ये वाच्यत्वसंशयो न स्यात्, तत्र शुक्लत्वं न

निश्चितमिति चेत्? तर्हि घटगुणे अयं शुक्लपदवाच्य इत्याप्तवाक्यान्निश्चये पटशौक्ल्येऽपि तद्वाच्यत्वसंशयस्स्यात्, अविशेषात् तत्रापि शुक्लत्वनिश्चयायोगात्। तत्र शुक्लत्वं निर्णीतमिति चेत्? किमत्र व्यवस्थापकम्? फलबल कल्प्यदोषतदभावाविति चेत्? तर्हि सर्वत्र शुक्लत्वचन्द्रत्वादिनिश्चये सत्यपि दोषतदभावाभ्यां वाच्यत्वसंशयतदभावावेव किमिति न व्यवस्थाप्येते। ननु प्रकृष्टप्रकाशश्चन्द्रः अयं शुक्लशब्दवाच्य इत्याद्याकारोपदेशविशेषे सति नियमेन वाच्यत्वसंशयाभावस्य दर्शनात् तादृशोपदेशविशेषाभावप्रयोज्य एव वाच्यत्वसंशयः, यदि च सदुपदेशो वाच्यत्वज्ञान एवोपयुज्यते, न तु स्वरूप निर्णये, तस्य स्वरूपमात्रं तु निश्चितमेवेत्युच्येत, तदा घटगुणे अयं शुक्ल शब्दवाच्य इत्युपदिष्टजातिविशेषवत्तया निश्चिते पटशौक्ल्ये यथा तद्वाच्यत्व सन्देहस्तथा चन्द्रत्वमिति काचिज्जातिस्तद्विशिष्टश्चन्द्रपदवाच्य इति उपदिष्ट-जातिविशेषवत्तया चन्द्रस्वरूपनिश्चये वाच्यत्वसंशयो न स्यात्, ततश्च स्वरूप निश्चयाभावादेव संशयः, उपदेशसहकृतप्रत्यक्षेण च स्वरूपनिश्चय इत्यास्थेय मिति चेत्? तर्हि अयं शुक्लशब्दवाच्य इत्युपदेशादिव शुक्लत्वमिति काचिज्जातिः तदाश्रयः शुक्लपदवाच्य इत्युपदेशात् स्वरूपनिर्णयोपि स्यात्। एतादृशोपदेशो न स्वरूपनिर्णायकप्रत्यक्षसहकारीति चेत्? तर्हि यादृशसह-कारी तादृशोपदेशजन्यवाच्यत्वनिश्चय एव तादृशसंशयविरोधीत्यस्तु।

वस्तुतस्तु चन्द्रत्वसंज्ञितत्वावच्छेदेन चन्द्रपदप्रवृत्तिनिमित्तत्वे गृहीतेपि इयं जातिश्चन्द्रत्वसंज्ञिता या नवेति सन्देहात् प्रवृत्तिनिमित्ताश्रयत्वसन्देहात् चन्द्रे चन्द्रपदवाच्यत्वसन्देहोपपत्तिः। इयं जातिश्चन्द्रत्वसंज्ञिता नवेति सन्देहस्तु चन्द्रत्वसंज्ञिता काचिज्जातिरिति यत्किञ्चिज्जातित्वसामानाधिकरण्येन चन्द्रत्व संज्ञितत्वनिश्चयेपि एतज्जातित्वावच्छेदेन तदनिश्चयात् भिन्नप्रकारकत्वादुपपद्यते।

किंच घटशब्दवाच्यः कश्चिदस्तीति निश्चयवतः अयं घटो नवेति संशयः को घट इति प्रश्नश्च दृश्यते, तस्यामेव दशायां घटमानयेति प्रयो जकवृद्धेनोक्ते प्रयोज्यवृद्धेन च तस्मिन्नानीते अयं घट इति निश्चयात् संशयाज्ञानप्रश्ना न दृश्यन्ते, तत्र चेत् स्वरूपविषयाः संशयाज्ञानादयः तदा स्वरूपस्यानवधारणात् व्युत्पत्तिग्रहो न स्यात्।

किंच धूमपदाव्युत्पन्नस्य धूमेन वह्निमनुमिमानस्य को धूम इति प्रश्नादयो दृश्यन्ते, नच तत्र धूमस्वरूपे ऽज्ञानं वक्तुं शक्यम्, व्याप्यनिश्चयाभावे ऽनुमित्युच्छेदप्रसङ्गात् ।

यदुक्तं 'तस्मात् तत्र शुक्लत्वे उपदेशसहकृतप्रत्यक्षेणाज्ञाननिवृत्तिरन्नैत्यमेव विरोध' इति; तन्न, पटगुणशुक्ले शुक्लत्वाज्ञानस्योपदेशसहकृतप्रत्यक्षेण निवृत्तावपि पटगुणशुक्ले तदनिवृत्तेः तत्र संशयप्रसङ्गात् । ननु शुक्लत्वमेकमेव, तत्स्वरूपावारकाज्ञानं च प्रागुपदेशसहकृतप्रत्यक्षेण निवृत्तमिति पटगुणशुक्लेपि तन्निश्चितमेवेति चेत्? तर्हि अयं घट इत्याप्तोपदेशसहकृतप्रत्यक्षेण क्वचित् घटत्वाज्ञाननिवृत्त्यनन्तरमन्यत्र क्वचित् घटत्वनिश्चयात् घटशब्दवाच्यत्वनिश्चयः घटान्तरे च घटत्वघटशब्दवाच्यत्वसन्देहश्च युगपच्च स्याताम् । किंच कटकाद्यसाधनतावच्छेदकतया प्रत्यक्षेण गृहीतरजतत्वजातिकस्य रजतपदाव्युत्पन्नस्यास्ति किं रजतमिति प्रश्नः, अस्तिच तत्र कस्यचित् प्रतारकस्य घटमङ्गुल्या निर्दिश्य इदं रजतमित्युत्तरवाक्यम्, तत्र न प्रश्नस्य रजतस्वरूपनिष्ठत्वम्, उत्तरस्यापि तथात्वप्रसङ्गात्; नचेष्टापत्तिः, तत्र रजतत्वस्योपदेशसहकृतप्रत्यक्षादवधारणे कटकार्थिनः प्रवृत्त्यापत्तेः, नापि रजतशब्दवाच्यत्वविषयप्रश्नः तत्र सम्भवति, रजतत्वमिति काचिज्जातिः तदाश्रयो रजतशब्दवाच्यो नान्य इति निश्चितवत्त्वं तत्र रजतत्वाभावनिश्चयाद्वाच्यत्वाभावनिश्चयापत्तेः वाच्यत्वनिश्चयायोगात्, येन रूपेणोपस्थितप्रवृत्तिनिमित्तावच्छेदेन वाच्यत्वग्रहः तेन रूपेण तदभावनिश्चये वाच्यत्वाभावनिश्चय इति चेत्? तर्हि तद्रूपेण प्रवृत्तिनिमित्तवत्त्वनिश्चय एव वाच्यत्वसंशयविरोधीति तुल्यम् ।

अपिचैवं एवमुपदेशसहकृतप्रत्यक्षेणाज्ञाननिवृत्तावपि अगृहीतसोमपदसङ्गतिकस्य कस्सोमस्सोमन्न जानामीत्यज्ञानप्रश्नौ प्रकृष्टप्रकाशस्सोम इति उत्तरञ्च दृश्यते, यत्प्रदत्तविषयत्वं विना तत्र यत्तेन निस्सारः ।

यच्च - 'किञ्च चन्द्रोऽयं नवेत्यादिसन्देहः किं वाच्यत्वप्रकारक एवे' त्यादि; तन्न, सामान्यतश्चन्द्रपदवाच्यत्वनिश्चयेपि तत्र तत्र प्रकृतचन्द्रपदवाच्यत्वसन्देहोपपत्तेः । एतच्चोत्तरत्र वक्ष्यते । चन्द्रस्सन् चन्द्रपदवाच्योऽन्यथावेत्यत्रापि प्रकृतचन्द्रपदप्रवृत्तिनिमित्तत्वमेव चन्द्रस्याचित्यत्र विषयः ।

नचैवं सर्वत्र धर्मे सन्देहोच्छेदप्रसङ्गः, तत्कोटिस्मरणविशेषादर्शनादिसामग्रीसत्त्वे तत्सन्देहस्याप्यावश्यकत्वात्। नहि स्थाणुर्वा पुरुषोवेति सन्देहोऽस्तीति शिशुपादिसन्देह उच्छिद्यते। तस्माद्देवदत्तादिसंशयवद्वाच्यत्वविषय एवायं संशयः। यदि च देवदत्तत्वाद्यर्थाभावाद्वाच्यत्वसंशयः, तदा चन्द्रत्वस्य निश्चितत्वाद्वाच्यत्वसंशय इति तुल्यम्। पूर्वोक्तानुपपत्तिश्च देवदत्तेपि तुल्या; तत्रापि इतरव्यावृत्तसंस्थानविशेषः कश्चित् तदाश्रयो देवदत्तपदवाच्य इति निश्चय यतः तादृशसंस्थानविशेषनिश्चयेपि अयं देवदत्तो नवेति संशयासम्भवात्। एवं देवदत्तशब्दस्यानेकसंज्ञात्वज्ञानदशायां देवदत्त आढ्य इति श्रुतवतस्तद्बुभुत्सोर्व्यक्तिविशेषे अयमपि कश्चिद्देवदत्तपदसंज्ञीति ज्ञानेपि अयं देवदत्तो नवेति संशयो न स्यात्, तथाच तत्र प्रकृतदेवदत्तपदवाच्यत्वमेव उभयत्र संशयविषय इति चन्द्रसंशयेपि तथा युक्तम्।

यदुक्तमनुभूयमानेपि चन्द्रे चन्द्राज्ञानमिति; तन्न, तथापि एककोटिकानवधारणेनायं चन्द्र इति व्यवहारप्रसङ्गात्। संशयेन व्यवहर्तव्यज्ञानमानस्य व्यवहारहेतुत्वात्। द्विकोटिकसंशयाद्द्विकोटिकव्यवहारदर्शनाच्च। दृश्यतेच दूरस्थजलज्ञानात् भाविद्विकोटिकसंशयानुसारेणानवधारणरूपेन त्वदभिमतात् कोटिद्वयानुपस्थितिदशायामिदं जलमिति व्यवहारः सकम्पप्रवृत्तिश्च। दृश्यते च मीमांसाश्रवणात् प्रागपि आपातप्रतीत्यैव वेदार्थगोचरो व्यवहारः। तस्मादिहापि कोटिद्वयानुपस्थितिदशायामेककोटिकानवधारणेनायं चन्द्र इति व्यवहारस्स्यादेव। यदीदन्त्वसामानाधिकरण्येन चन्द्रशब्दवाच्यत्वं न ज्ञातमित्युच्येत, तर्हि तत एव प्रश्नाद्युपपत्तेः सिद्धं नः समीहितम्।

किञ्च यद्युपदेशसहकृतमित्यतः प्रत्यक्षमवधारणजनकं तर्हि एतेषु कश्चिच्चन्द्र इत्युपदेशसहकृतप्रत्यक्षादपि तन्नाशाननिवृत्त्यापत्तिः। अत्र यदुक्तं 'सामान्योपदेशस्ये'त्यादि, तन्न, चन्द्रत्वलक्षितजातिविशेषाश्रयश्चन्द्रशब्दवाच्य इत्युपदेशेपि सामान्यरूपतयान्यथोपपत्तिशङ्कया चन्द्रत्वात्मकजातिविशेषे चन्द्रपदवाच्यत्वस्यानवधारणस्य तुल्यत्वात् पटगुणशौक्ल्यवैषम्यात्। यच्च 'यदि प्रकृष्टप्रकाश' इत्यादि, तन्न, चन्द्रत्वपदस्यागृहीतसङ्गतिकत्वेनाबोधकत्वात्। यत्तु 'वस्तुतश्चन्द्रत्वस्य तज्ज्ञानप्रकारत्व' इत्यादि, तन्न, तत्र

नक्षत्रादिगतधर्माणामपि बहूनां प्रकारतया जातिविशेषे चन्द्रपदवाच्यताग्रहायोगात्। चन्द्रत्वमात्र चेत् तज्ज्ञाने प्रकारस्तदा संशयो निवर्तत एव। किंच तत्रापि चन्द्रत्वानवधारणसत्त्वादुक्तोपदेशात् संशयो निवर्तेत। यद्यनवधारणमपि नास्ति तथापि यच्चन्द्रस्वरूपं प्रत्यक्षीक्रियते स चन्द्र इत्युपदेशात् संशयो निवर्तेत, दृश्यमानेषु कश्चन्द्रः प्रकृष्टप्रकाशोऽन्योवेति प्रश्नानुसारेण स्वरूपप्रत्यक्षस्यावश्यकत्वात्। यदपिचोक्तं 'अपिचैतमि' त्यादि; तन्न, चन्द्रत्वपदस्याव्युत्पन्नतया चन्द्रत्वाश्रयश्चन्द्रपदवाच्य इत्यत्र चन्द्रत्वसंज्ञितजात्याश्रय इत्यर्थो वक्तव्यः, चन्द्रत्वसंज्ञितत्वं च प्रकृष्टप्रकाशवृत्तिधर्मेऽन्यत्र वेति सन्दिग्धमिति न तावन्मात्रं श्रुतवतः प्रत्यक्षेण चन्द्रत्वदर्शनात् संशयनिवृत्तिः, चन्द्रत्वं कश्चिद्धर्म इत्युपदेशस्य तु चन्द्रत्वसंज्ञिता जातिः प्रकृष्टप्रकाशे वर्तत इत्यर्थो वक्तव्य इति पूर्ववाक्ये येन रूपेणोपस्थितस्य प्रवृत्तिनिमित्तत्वं निश्चितं तेन रूपेणोपस्थितस्यैव उत्तरवाक्येन प्रकृष्टप्रकाशत्वसामानाधिकरण्यं निश्चितमिति ततस्संशयनिवृत्तिः। यच्च 'किंच यदित्था' दि, तदपि न, चन्द्रपदवाच्यत्वस्य प्रकृष्टप्रकाशसामानाधिकरण्याज्ञानात् चन्द्रपदवाच्यत्वस्य प्रकृष्टप्रकाशाश्रयाभेदाज्ञानाद्वा कश्चन्द्रः किं प्रकृष्टप्रकाशः उताप्रकृष्टप्रकाश इति प्रश्नसंशयाविति उत्तरमपि तद्विषयम्। नन्वेतावन्मात्रं जिज्ञास्यमेव न, अनुपयोगात्; प्रवृत्तिनिमित्तज्ञानाभावे तावन्मात्रेण व्यवहारायोगादिति चेन्न,– प्रवृत्तिनिमित्ताज्ञानेपि तत्पदवाच्यत्वग्रहणात् स्वस्य तत्र तच्छब्दव्यवहारोपपत्तेः, श्रोतुश्च व्युत्पन्नत्वे यथाव्युत्पत्ति ततोऽर्थबोधसम्भवात्, अव्युत्पन्नस्यापि स्वप्रयोगाल्लाघवादिसहकारेण प्रवृत्तिनिमित्तविशेषग्रहणपुरस्सरं व्युत्पत्तिग्रहसम्भवात्; प्रवृत्तिनिमित्ताग्रहे हि व्यक्त्यन्तरे व्यवहारो न स्यात्। तद्व्यक्तियाचकत्वं ग्रहीतवतस्तत्र प्रयोगस्स्यादेव। ननु प्रवृत्तिनिमित्तं विनापि वाचकत्वग्रहे तत्पदं श्रुतवतः तस्य तस्मान्निर्विकल्पकापत्तिरिति चेन्न,– आकाशपदादप्रवृत्तिनिमित्तस्यापि शब्दसमवायिकारणत्वस्येव चन्द्रादिपदाद्वाच्यत्वग्रहदशोपस्थितस्य प्रकृष्टप्रकाशादेः प्रकारतया भानसम्भवात्। यद्वा प्रकृष्टप्रकाशश्चन्द्र इति वाक्यात् प्रकृष्टप्रकाश एव चन्द्रपदवाच्य इति सामर्थ्यान्निश्चिते लाघवादिना चन्द्रत्वादेः प्रवृत्तिनिमित्तत्वग्रहसम्भवान्न कश्चिद्दोषः।

ननु नानार्थत्वनिश्चयवतः प्रकृष्टप्रकाश एव चन्द्रपदवाच्य इति निश्चया सम्भवात् *न त्वदुक्तरीत्या प्रवृत्तिनिमित्तत्वग्रहसम्भव* इति चेन्न ;– चन्द्रोदये कुमुदान्युन्मिषन्तीत्यादिकं शृण्वतः कश्चन्द्र इति प्रश्नोभवति, तत्र चन्द्र–शब्दस्य नानार्थत्वज्ञानवतः कुमुदोन्मेषहेतुत्वेन प्रकृतचन्द्रपदार्थस्यैव जिज्ञासि तत्वात् प्रकृतचन्द्रपदवाच्यतावैशिष्ट्यविषय एव प्रश्नः, अत उत्तरवाक्ये ऽपि कुमुदोन्मेषहेतुत्वेन प्रकृतचन्द्रपदवाच्यः प्रकृष्टप्रकाश एवेति प्रतीतिरुपपद्यते । ततश्च लाघवादिना चन्द्रस्यैव प्रकृतचन्द्रपदप्रवृत्तिनिमित्तत्वग्रहो भवतीति न कश्चिद्दोषः ।

यच्चोक्तं *किंच प्रकृष्टादिपदैरित्यादि ; तन्न,* चन्द्रपद एव *लक्षणाङ्गीकारात्* । चन्द्रपदप्रवृत्तिनिमित्तसमानाधिकरणं चन्द्रपदवाच्यत्वमिति मुख्यार्थ सम्बन्धित्वस्य ज्ञातत्वात्, कोकिलः पिक इत्यादि निखण्डुपाठवत् । दृश्यते च काकशब्दस्य वायसवराहाद्यर्थसन्देहदशायामपि तत्प्रवृत्तिनिमित्तसामानाधिकरण्येन दध्युपघातकत्वनिश्चयदशायां काकपदेन लक्षणा ।

यच्चोक्तं ' प्राथमिकचन्द्रज्ञानं सत्तानवधारणात्मकत्वाज्जिज्ञासानुकूलं, उपदेशानन्तरभावित्वात्तोपदेशादिरूपतर्कप्रतिसन्धानेन सत्तावधारणात्मकमिति तच्च क्षिवर्तकं ' मिति; तन्न, प्राथमिकज्ञानस्य प्रकृष्टप्रकाशत्वादिना स्वरूपावधारणस्यानुभवसिद्धत्वात् चन्द्रत्वमपि तत्तत्स्थानात्मकमवधृतमेव । अत एव ' चन्द्रव्यक्तेः प्रकृष्टप्रकाशात्मतया ज्ञातत्वेपी' त्यादिकमपि निरस्तम् । यच्चोक्तम्, ' अतएव कश्चन्द्र इति जिज्ञासा ननु कास्य जातिरिती ' ति ; तत्र जिज्ञास्यत्व किं विवक्षितम्, यदि स्वरूपस्य जिज्ञासाविशेष्यत्वं विवक्षितम्, तदेष्टापत्तिः । यदिच किंशब्दविवक्षितप्रकारविशेषविशिष्टरूपेण विशेष्यस्याज्ञातत्वं विवक्षितं तदानीमपीष्टापत्तिः । यदि विशेष्यस्य स्वरूपेणाज्ञातत्वं विवक्षितम्, तदा कश्चन्द्र इति जिज्ञासा न सम्भवति, अनिर्धारितप्रकारविशेषविशिष्टवाची हि *किं शब्दः* । तत्रच स एव प्रकारविशेषो वा तद्विशिष्टरूपेण विशेष्यमेव वा अज्ञातम्, ननु व्यक्तिस्वरूपमात्रम्, अत एव स्थाणुत्वाद्यज्ञानतत्संशय दशायां कोऽयमूर्ध्वपदार्थ इति स्थाणुत्वविषयः प्रश्नो भवति, ननु तत्स्वरूप विषयः । अत एव कोऽयमूर्ध्वः स्थाणुः किं वा पुरुष इति किं शब्द विवरण अयं स्थाणुरित्युत्तरं च । कास्य जातिरिति प्रश्नोपि न जातिविषयः,

किन्तु जातिगतविशेषविषय एव । जातिविषयप्रश्नस्तु प्रकृष्टप्रकाशः क इत्याकारः, अतएव प्रकृष्टप्रकाशः कः किं चन्द्रः किंवान्य इति तद्विवरणम् । किंच त्वद्रीत्या ज्योतिःपदार्थस्वरूपज्ञानात् किं ज्योतिरिति प्रश्नः, प्रकाशकं ज्योतिरित्युत्तरेण च तदज्ञाननिवृत्तिर्वाच्या, तथाच तदनन्तरभावी कश्चन्द्रः कानि नक्षत्राणीति प्रश्नः कथमुपपद्यते, स्वरूपाज्ञानस्य निवृत्तत्वात् । नच ज्योतिरात्मना ज्ञातत्वेपि चन्द्रात्मनाऽज्ञानमिति वाच्यम्, स्वरूपद्वयाभावेन धर्मभेदमन्तरेण व्यवस्थाया असम्भवात् ।

यच्च प्रतिधर्मं धर्मिभेद इत्युपपादितम्, तदपि न, मानाभावात् । नच धर्मद्वये ज्ञातत्वाज्ञातत्वयोः स्वाश्रयव्यक्तिज्ञानाज्ञाननियम्यत्वात्तयोश्च विरोधाद्व्यक्तिभेद इति वाच्यम्, शुक्तित्वाश्रयमन्वभूवं शुक्तित्वं तत्र नान्वभूव किन्तु रजतत्वम्, वशत्वाश्रयमनुभवामि नतु वशत्वं तत्र अपि तुरगत्वमित्यनुभवेन व्यक्तिज्ञानाज्ञानयोः प्रयोजकत्वासिद्धेः । इदन्त्वेनानुभूयमानेपि घटत्वाश्रयं नानुभवामीत्यनुभवो सिद्ध एव, घटत्वं नानुभवामीत्यनुभवात् । भ्रमे शुक्तित्वाश्रयं नानुभवामीत्यज्ञानारोप्यः, अनन्तरं शुक्तित्वाश्रयमन्वभूव नतु शुक्तित्वमित्यनुभवात् । किंच धर्मभेदेन ज्ञानाज्ञानयोर्विरोधशान्तौ कथं व्यक्तिभेदसिद्धिः? धर्मिभेदेच करकाकाशो घटाकाशात् भिद्यत इति वत् प्रकृष्टप्रकाशश्चन्द्रात् भिद्यत इति प्रतीतिप्रसङ्गः ।

यदपि 'किञ्च व्यवहारयोग्यतयो' रित्यादि; तदपिन, किं व्यवहारभेदस्सतो व्यक्तिभेद एव विवक्षितः, उतार्थभेदप्रयुक्तः? नाद्यः, प्रकृष्टप्रकाश इत्याद्युपदेशानैरर्थ्यप्रसङ्गात्, चन्द्रवाचिशब्दाना बहुत्वात् तत्तन्निरूपितयोग्यतानां बहुत्वात् । नच तच्छब्दनिरूपितव्यवहारायोग्यतानिवृत्त्या तच्छब्दव्यवहार एव तदुपदेशस्य प्रयोजनम्, तथाप्यावरणान्तरसत्त्वे स्वरूपे प्रकाशादिप्रसङ्गात् । एकावरणनिवृत्त्यैव स्वरूपसत्त्वयनिवृत्तौ प्रकृष्टप्रकाशशब्दनिरूपितव्यवहारायोग्यतारूपावरणनिवृत्त्या चन्द्रोऽयं नवेति संशयो न स्यात् । न द्वितीयः, विशेष्यभेदस्यासिद्धेः । तथाच तत्तत्प्रकारभेदादेव व्यवहारभेदो वाच्यः, ततश्च तत्तत्प्रकारावच्छिन्नस्यैवावरणमिति तस्यैव प्रभादिविषयत्वम् ।

यच्च 'किंच घटत्वादिसामान्यस्ये' त्यादि; तन्न, तत्रापि अनुभूयमाने घटत्वे ऽज्ञानासम्भवात्। नच सत्तानवधारण मोऽनुभवः, तथासति कथमसाधारणधर्मवान्न वा सामान्यवान्नवेति संशयाभावः। अतो नास्त्येव घटत्वाज्ञानम्। अथ घटो नवेति संशयस्तु तद्विरोधिज्ञानाभावादेवोपपद्यते।

ननु किं तद्विरोधिज्ञानम्? न तावत् घटत्वप्रकारकम्, घटविषयक सामान्यवानिति ज्ञानस्य तदविरोधित्वात्; तत्प्रकारे सामान्यधर्माप्रकारक तत्प्रकारकज्ञान तत्कोटिकसंशयविरोधीत्युक्तौ सामान्यात्मकघटत्ववानिति ज्ञानस्य विरोधिता न स्यात्; सामान्यधर्ममात्राप्रकारकत्वविवक्षायामपि सामान्यवानयं घट इति ज्ञानात् संशयनिवृत्तिर्नस्यात्, इति चेन्न,– सामान्यधर्मानवच्छिन्न तत्प्रकारताकज्ञानस्य तत्कोटिकसंशयविरोधित्वात्। सामान्यवानयं घट इत्यत्र च सामान्यधर्मावच्छिन्नप्रकारताया सत्त्वामपि तदनवच्छिन्नापि प्रकारतास्ति। यच्च 'वस्तुत' इत्यादि; तदपिन, इदन्त्वेन ज्ञायमानायामेव शुक्तौ शुक्तित्वाज्ञानदर्शनेन व्यक्त्यज्ञानादेव सामान्याज्ञानमित्यस्यासिद्धेः। तात्पर्यानुपपत्त्या लक्षणेत्यप्ययुक्तम्, विशिष्टस्यैव बुभुत्सितत्वेन तात्पर्यगोचरत्वस्योक्तत्वात्। सत्यादिवाक्येपि स्वरूपमात्रतात्पर्यलक्षणेत्यप्ययुक्तम्, भेदसत्यत्वस्थापनेन तस्यापि विशिष्टतात्पर्यकत्वनिर्णयात्। द्वितीयं लक्षणमप्यसङ्गतम्, एकप्रातिपदिकविशेष्यविशेष्यकत्वे साध्ये सिद्धसाधनात्। एकप्रातिपदिकार्थबोधकत्वे सति तदतिरिक्ताबोधकत्वमिति विवक्षायामपि सिद्धसाधनम्, सत्यत्वादीनामपि बृहत्त्वान्तर्गततया ब्रह्मप्रातिकार्थत्वात्। अनुमानेच साध्याप्रसिद्धिः, लौकिकलक्षणवाक्यमात्रे साध्याभावस्योपपादितत्वात्। अर्थवादेपि न सन्नु दायलक्षणेति न तत्रापि साध्यप्रसिद्धिः। तत्र साध्यसत्वेपि दृष्टान्ते साध्यवैकल्यम्, असिद्धिश्च।

यदत्रोक्त 'सत्यज्ञानानन्दाभेदस्याब्रह्मण्यभावेने' त्यादि;– तन्न, जगत्कारणत्वादीनामपि स्वरूपव्यावर्तकतया लक्षणत्वात्स्वरूपात्मकलक्षणमनावश्यकम्, तदभावे बाधकाभावात्। नचा स्वरूपस्य लक्षणत्व सम्भवति, असाधारण धर्मत्वाभावात्। यद्विषयत्वेन ज्ञानस्य व्यावर्तकता तल्लक्षणम्, तद्विषयश्च स्वरूपमपीति चेन्न,– सत्यत्वादिसम्बन्धविषयतयैव ज्ञानस्य व्यावर्त्तकत्वात्।

अन्यथा सत्यपदादेव जडव्यावृत्तिसिद्धौ ज्ञानपदवैयर्थ्यं स्यात्। यदि च ज्ञानपदादेर जडव्यावृत्तिसिद्धिः, तदा ज्ञानत्वादिसम्बन्धविषयतयैव ज्ञानस्य व्यावर्त्तकत्वमिति न स्वरूपविषयत्वेन व्यावर्त्तकता। नच प्रमेयत्वादेर्लक्षणामात्रप्रसङ्गः, प्रमातद्विषयत्वमात्रघटितधर्मत्वस्य तत्सम्बन्धिन्याः प्रमायाश्च लक्षणत्वात्।

यच्च 'किञ्च धर्मस्यैव लक्षणत्वे' इत्यादि; तन्न, स्वरूपलक्षणेपि तुल्यत्वात्। तदपि प्रमेयत्वादिनावगतञ्च व्यावर्त्तकम्, अपितु व्यावृत्ततयावगतम्, सापि व्यावृत्ततयावगतिस्तद्विषयव्यावृत्ततावगत्यन्तराधीनेति एकविषयव्यावृत्तिष्वप्यनवस्था।

ननु व्यावृत्ततया स्वरूपज्ञानं न व्यावृत्तिबुद्धिजनकम्, किन्तु स्वरूपमात्रज्ञानम्, ततो नातिप्रसङ्गो नाप्यनवस्थेति चेन्न, — अयं घट इति घटत्वप्रकारज्ञानेन व्यावृत्तिबुद्धिदर्शनात्। तस्मादन्वयव्यतिरेकाभ्यां धर्मवैशिष्ट्यज्ञानं व्यावर्तकम्। नचात्र त्वदुक्तातिप्रसङ्गानवस्थे, सामान्यधर्मानवच्छिन्नप्रकारकज्ञानस्य व्यावर्तकत्वात्। स्वरूपस्य व्यावर्तकत्वपक्षेपि उक्तातिप्रसङ्गानवस्थापरिहारस्य एव वक्तव्यत्वात्। वस्तुतस्त्विदमपि त्वया दुर्वचम्, अयं घट इति ज्ञानादपि व्यावृत्तिबुद्धेर्दर्शनात्, घटत्वस्य स्वरूपान्तरसाधारणत्वेन सामान्यधर्मत्वात्।

यच्च 'लक्षणवाक्यत्वञ्चे'त्यादिना हेतुनिर्वचनम्, तदयुक्तम्, तटस्थलक्षणप्रतिपादके वाक्ये व्यभिचारात्। किंबहुना, नीलादिविशेषणमात्रस्य व्यावर्तकतया तत्तात्पर्यके नील्मानयेत्यादिवाक्ये व्यभिचारः। अयं चन्द्र इति वाक्ये व्यभिचारः, अयमचन्द्रव्यावृत्त इत्यस्मात्तस्याविशेषात्। द्वितीये प्रभूतकमलोदरे मधूनि मधुकर पिबतीति वाक्यस्य मधुकरजिज्ञासानिवर्तकत्वाद्व्यभिचारः। तृतीयस्यापि तत्रैव व्यभिचारः।

किंच असाधारणधर्मप्रतिपादकत्वाभावे व्यावृत्तिबुद्धिहेतुत्वासम्भवात् लक्षणवाक्यत्वं सखण्डार्थत्वेनैव व्याप्तमिति विरुद्धत्वं च। 'यदुक्तं ज्ञानमालिन्यनिवृत्तये विचार' इत्यादि, तन्न, स्वरूपमात्रे नवधारणासिद्धे, सद्वितीयत्वाद्वितीयत्वादावेव ह्यनवधारणम्, तद्विषयसंशयदर्शनात्। नच तत एव स्वरूपे

ष्यनवधारणमिति वक्तुं शक्यम्, ऊर्ध्वोऽयं स्थाणुर्वा पुरुषो वेति स्थाणुत्व संशयेप्यूर्ध्वानवधारणासिद्धेः । अन्यथा स्थाणुरेवेत्युपदेशानन्तरमपि पनसाम्रादि सन्देहदर्शनात् स्थाण्ववधारणमपि न स्यात् । ततश्च यत्किंचित्संशयस्य सर्वत्र सुलभत्वात् क्वाप्यवधारणं न स्यादिति । तस्मात् सप्रकारकसंशय निवर्तकं ज्ञानं सप्रकारकमेव विचाराधीनमिति वाक्यान्निष्प्रकारकज्ञाना सिद्धेर्बाध एव ।

यदपि 'किञ्च समानप्रकारकज्ञानमेवे' त्यादि, तन्न, नहि कोट्या समान प्रकारकत्वं विवक्षितम्, तथासति स्थाणुर्वा पुरुषोवेति संशयस्य कुड्यत्व निश्चयादनिवृत्त्यापत्तेः । किन्तु धर्मितावच्छेदकधर्मेणैव विवक्षितम् । तस्मात् संशयधर्मितावच्छेदकावच्छिन्नस्संशयकोटिविरोधिवैशिष्ट्यनिश्चयस्संशयविरोधी । यथाच न समानविषयत्वेन निवर्तकत्वं तथा प्रागेवोक्तम् । ननु विरोधि वैशिष्ट्यज्ञानस्य निवर्त्तकत्वे प्रमेयवदिति ज्ञानात् संशयनिवृत्त्यापत्तिः, नच सामान्यधर्मानवच्छिन्नप्रकारताकत्वमपि विरोधिविशेषणम्, पुरुषे दण्ड इति ज्ञानस्य दण्डी नवेति संशयनिवर्त्तकत्वाभावापत्तेरिति चेन्न,— सामान्यधर्मानव-च्छिन्नविषयविभाजकोपाधिविशिष्टत्वस्य विरोधिनि विवक्षितत्वात् । विषय-विभाजकोपाधिश्च विशेष्यत्वप्रकारत्वादि । नन्वेवमपि दण्डी पुरुष इति ज्ञानमनिवर्त्तकं स्यात्, दण्डत्वस्यापि सकलदण्डवृत्तेः सामान्यत्वात्, नच संशयकोटिद्वयसाधारणधर्म एव विवक्षितः, दण्डी नवेति संशयस्य द्रव्यवा नित्यनेनापि निवृत्त्यापत्तेः, नच संशयकोटिविरोधितदितरसाधारणधर्मो विव क्षितः, द्रव्यत्वन्तु दण्डाभावकोट्यविरोधिकुण्डलादिसाधारणमिति वाच्यम्, सुवर्णे तैजसत्वपार्थिवत्वसन्देहदशायां सुवर्णत्वसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्य जातिमानिति निश्चयस्यानिवर्तकत्वात्, तस्याप्युक्तरूपत्वादिति चेन्न;— विरोधि तावच्छेदकेतरधर्मस्य सामान्यधर्मपदेन विवक्षितत्वात् । विरोधितावच्छेदकं च दण्डीत्यत्र दण्डत्वम्, अयं घट इत्यत्र घटत्वमित्यवधेयम् । विरोधि ताच संशयकोटितावच्छेदकावच्छिन्नप्रतियोगिताका विवक्षिता, तेन द्रव्यत्व स्यापि यत्किञ्चिद्विरोधितावच्छेदकत्वाद्द्रव्यवानिति निश्चयस्य न दण्डी नवेति संशयनिवर्तकत्वाशङ्कावकाशः । अयमत्र निष्कर्षः — तद्धर्मावच्छिन्न प्रतियोगिताकतत्संशयकोटिनिरूपितविरोधितावच्छेदकेतरधर्मानवच्छिन्नविषयविभा

जकोपाधिविशिष्टतत्संशयकोटिविरोधिवैशिष्ट्यनिश्चयस्तद्धर्माभिन्नधर्मानवच्छिन्नकोटिताकतद्धर्मकोटिकसंशयविरोधीति । यदप्युक्तम्— 'किञ्च विशिष्टविषयाज्ञानमि' त्यादि; तदप्यसङ्गतम्, मूलाज्ञानस्य केवलचैतन्यावारकत्वासिद्धेः । 'घटस्सन् घटःस्फुरती'त्यादिव्यवहारस्य चैतन्यव्यवहारतया व्यवहारायोग्यतारूपावरणासिद्धेः । नच विशिष्टव्यवहारे सत्यपि स्वरूपमात्रव्यवहाराभावात् तद्व्यवहारायोग्यतारूपावरणप्रयोजकं मूलाज्ञानमिति वाच्यम्, स्वरूपव्यवहारदशायां स्वरूपमात्रव्यवहाराभावस्य विशेषणव्यवहारपर्यवसितत्वात्तस्यच विशेषणज्ञानप्रयोज्यतया अज्ञानानपेक्षणात् । किञ्च स्वरूपमात्रव्यवहारः शब्दानां प्रवृत्तिनिमित्तविशिष्टविषयतया तादृशशब्दाभावादनुपपन्नः । अतस्तत्सामग्रीकालीनतादृशव्यवहारायोग्यतारूपावरणं कथं स्यात्? लक्षणया स्वरूपमात्रव्यवहारस्तद्योग्य सिद्धः । नचाशनायाद्यतीतं ब्रह्म नास्ति न प्रकाशत इति व्यवहारयोग्यतारूपावरणमपि स्वरूपमात्रविषयम्, अशनायाद्यतीतत्वादिविशिष्टविषयत्वात् । यच्च प्रकारत्वखण्डनम्, तदप्यनुभवविरोधादेव निरस्तम्; अनुभूयते हि दण्डी पुरुष इति प्रत्यये पुरुषे दण्ड इति प्रत्यये च दण्डादेर्विषयतायां समानायामपि कोपि विशेषः, स एवास्माकं प्रकारत्वादिः । अनुभवापह्नवे च सविषयत्वमेव न सिद्ध्येत् । यदुक्तम् 'ब्रह्मणऽज्ञानपक्षके' त्यादि, तन्न, भेदस्य प्रामाणिकतया ऽनन्तशब्दस्याभावप्रतियोगित्वपरत्वासिद्ध्या देशाद्य परिच्छेदमात्रपरत्वात् । अन्तशब्दस्यच नाभावमात्रमर्थः, इह घटाभाव इतिवत् इह घटान्त इत्यप्रयोगात् । नगरान्तस्सीमान्त इत्यत्रापि अवयवविशेष एवान्तशब्दः प्रयुज्यते, 'आद्यन्तौ टकितौ' 'अन्तादिवच्चे' त्यत्र आदिप्रतिसम्बन्धितयान्तशब्दप्रयोगात्, 'समासान्तस्समासान्तावयव' इति व्याख्यानाच्च । अभावपक्षे 'अयं सीमान्त' इत्यप्रयोगापातात्, इह सीमान्त' इति प्रयोगापाताच्च । नगरमध्येपि नगराभावस्य सत्त्वेन नगरान्त इतिप्रयोगप्रसङ्गाच्च । अस्तु वा अभावपर्यवसानमन्तशब्दस्य; तथापि न तत्स्वारस्यानुरोधेन वाक्यतात्पर्यनिर्णयः, उपक्रमोपसंहारस्थसत्यादिपदानां प्रवृत्तिनिमित्तविशिष्टाभिधानस्वारस्यात्; समानाधिकरणवाक्यस्यानेकप्रवृत्तिनिमित्तविशिष्टाभिधानस्वारस्यात्, समानाधि

करणवाक्यस्थानेऽप्रवृत्तिनिमित्तविशिष्टकार्याभिधानस्वारस्याच्चैवानन्तपदस्यार्थवर्णनस्योचितत्वात् । नह्येकपदानुरोधेन उपक्रमोपसंहारस्थानां बहूनां पदानां वाक्यस्य च स्वारस्यभङ्गो युक्तः । अतो न बाधः । अत एव न द्वितीयादिक्रमप्य युक्तम् । नापि 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिना बाधः, अहं शब्दस्यान्तःकरणपरतया तेन स्वरूपमात्रवेद्यत्वासिद्धेः । स्वरूपलक्षणाया च गुणविभूत्यादिविशिष्टलक्षणायामपि बाधकाभावात् । अन्यथा कर्मजगत्कारणत्वादिकमपि न सिद्ध्येत् । किञ्च इतरेषां वेद्यत्वाभावस्य एतद्वाक्यवेद्यत्वाद्याघात, अन्यस्य वेद्यत्वाभावबोधनेन बाधः, तथाचास्य प्राधान्येन सर्ववेदवेद्यत्वं ब्रह्मण एवेत्येवम्परत्वात् ससर्गपरत्वस्य न बाधः । नापि प्रकृष्टादिवाक्ये व्यभिचारः, तत्तात्पर्यविषये च तस्यापि ससर्गपरत्वस्थापनात् । नच सप्रकारत्वसाधने सिद्धसाधनम्, विषयत्वातिरिक्तप्रकारत्वस्यानुभवसिद्धत्वात्, विशेषणविशिष्टविषयत्वस्य सप्रकारकत्वस्य साध्यत्वे दोषाभावात्, भासमानवैशिष्ट्य प्रतियोगित्वस्य विशेष्येऽतिप्रसक्तत्वेपि एतदनुमानसाध्यत्वसम्भवात्, नचाप्रयोजकता, स्वरूपमात्रसंशयादिधर्मिणो ज्ञातत्वेन प्रकृष्टप्रकाशत्वादिप्रकारविशेषावच्छेदेन वाच्यत्वससर्गपरत्वाभावे वाक्यवैयर्थ्यात् । तन्मात्रप्रश्नोत्तरत्वादिति हेतुरप्यसिद्धः, अनन्तत्वस्य ससर्गाविरोधित्वोपपादनात् । संशयाभावेप्यज्ञानविपर्ययनिवृत्त्यर्थमुपदेशसम्भवेन प्रश्नस्य कल्प्यत्वाच्च । त्वम्पदार्थविषयवाक्यपक्षेप्यसिद्धिरेव, तमप्प्रत्ययेन प्रश्नस्य जातिविषयत्वप्रतीतेः । नच जात्यसिद्धिः, आत्मनां बहुत्वस्थापनात् । अत एव प्रश्नासिद्धेश्च । स्वरूपस्य निर्धारितत्वाच्च । अहमिति प्रतीयमाने स्वरूपे सन्देहविपर्ययाभावात् देहादितादात्म्यकोटिक एव हि तत्सन्देहः । विरुद्धश्च च ।

यदुक्तम्– उत्तरं प्रश्नतात्पर्यविषयमिति, तन्न, स्वरूपमात्रविषयकोत्तरेणापि चन्द्रत्वादिसंशयनिवृत्तेस्त्वयाप्यङ्गीकार्यत्वेन त्वदुक्तव्याप्तेरसिद्धः । ततश्च स्वरूपमात्रविषयत्वेनाभिमतप्रश्नस्य यदुत्तरं तस्यापि पूर्वोक्तवक्ष्यमाणवैशिष्ट्यबोधकपदघत्वनियमदर्शनेनान्वयव्यतिरेकाभ्यां विशेषणवैशिष्ट्यज्ञानादेव स्वरूपविषयसंशयनिवृत्तेरभ्युपगन्तव्यत्वात् । अन्यथा कश्चन्द्र इति प्रश्ने चन्द्र इत्येवोत्तरं स्यात् । इयतैव प्रश्नभिन्नविषयेणाप्युत्तरेण प्रश्नमूल

संशयनिवृत्तिः । स्थाणुपुरुषान्यतरोऽयमिति निश्चयदशायां स्थाणुत्वपुरुषत्व सन्देहात् किंधर्मकोऽयमित्यनिर्धारितस्थाणुत्वपुरुषत्वविषयप्रश्ने वल्मीकोऽय मित्युत्तरेण संशयानिवृत्तिः । किञ्च ब्रह्मस्वरूपमात्रस्य, ब्रह्मविदाप्नोतीत्युपक्रमस्थ ब्रह्मपदेनैवावगमात् सत्यत्वादिधर्मा एव वाक्यविषयः । नच ब्रह्मणो निर्धर्मकसदाद्यात्मकस्वरूपविशेषस्य सत्यादिवाक्यं विना निश्चेतुं न शक्य इति वाच्यम्, स्वरूपद्वयासिद्धेः । विशिष्टतात्पर्यकल्पने च न गौरवम्, सत्यादिवाक्यवैयर्थ्यप्रसङ्गेन तस्य प्रामाणिकत्वात् । अन्यथा जगदुपादानत्वादौ 'आत्मन आकाशः' इत्यादेस्तात्पर्यं न स्यात् । यच्चोक्तम् 'तस्यापि निमित्तोपादानादिवास्तवभेद निरासेनाऽऽनन्त्ये तात्पर्यमि' ति, तत्र किं निमित्तोपादाननिषेधादिद तद्भेद निरासपरम्, उत एकस्यैव निमित्तोपादानत्वेन? नाद्यः नञाद्यभावे निषे-धाप्रतीतेः, ब्रह्मणो जगत्कारणत्वासिद्धिप्रसङ्गाच्च । द्वितीये तु विशिष्टतात्पर्य कल्पनमावश्यकम् । ततश्चानन्त्येऽपि तात्पर्यकल्पने गौरवं तदाधिक्यम् । यदुक्त 'उदरमन्तरमित्यादिना भेददर्शनं निन्दित'मिति, तत्र, अन्तरशब्दस्य विद्यारूपप्रतिष्ठाविच्छेदपरतया भगवतैव भाष्ये निपुणतरमुपपादनात् । किं करोतीति प्रश्नोत्तर च 'अध्ययनं करोती' ति वाक्ये व्यभिचारः । नच तत्रापि साध्यमस्तीति वाच्यम्, देवदत्तादिवैशिष्ट्यप्रतिपादकत्वाभावे जिज्ञासाया अनिवृत्तेः । अन्यथा गुरूच्चारणानूच्चारणमध्ययनमिति अध्ययनलक्षणवाक्यादपि तत्र जिज्ञासानिवृत्ति प्रसङ्गात् । नच प्रश्नोऽपि देवदत्तादिविशिष्टविषयः? अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इत्यत्रापि तथात्वापत्तेः । नचेष्टापत्तिः, तत्र उत्तरस्यापि विशिष्टविषयत्वे दृष्टान्तस्य साध्यविकलत्वात् । कश्चन्द्र इत्यविशेषितप्रश्नोत्तर-लक्षणवाक्यस्य दृष्टान्तत्वे इह कश्चन्द्र इति प्रश्नोत्तरे लक्षणवाक्ये उक्त रीत्या व्यभिचारात् । लक्षणवाक्यत्वादिति हेतोश्चाप्रासये अस्मिन्सर्गे इत्यादौ व्यभिचारः, साध्यवैकल्यं साधनवैकल्यं स्वरूपासिद्धिरित्यादिकं च द्रष्टव्यम् । अप्रयोजकत्वञ्च । यदुक्तम्—'अनिर्णीतदी' त्यादि, तत्र, तथासति विशिष्टे व्युत्पत्त्यभावे विशिष्यस्वरूपलक्षणाया असम्भवात् । किञ्च व्याकरणात् प्रवृत्ति निमित्तस्य बृहत्त्वनिक्षेपस्याप्रतीतावपि त्वदुक्तासङ्कोचन्यायसहकृतश्रुत्यादिभिरेव प्रवाचीमितनिश्चयात् । किञ्च बृहत्त्वनिक्षेपानिरूपणेऽपि बृहत्पदार्थस्य मात्र

साधनज्ञानविषयत्वाज्ञातस्य सत्यत्वविशिष्टबोधने तदनन्तरं प्रवृत्तिनिमित्तनिश्चये को विरोधः । अन्यथा कथं ब्रह्मविदाप्नोतीति पूर्ववाक्यादर्थप्रतीतिः । दृश्यते च कुञ्जराधिरूढो राजेत्युक्ते कुञ्जरशब्दस्य न गजत्वं प्रवृत्तिनिमित्तं, किन्तु गजत्वव्याप्यधर्मविशेष इति सामान्यतो ज्ञाततो विशिष्य प्रवृत्तिनिमित्तस्याज्ञानेपि गजाधिरोहप्रतीतिः । यच्च 'किञ्च पदानि सामान्याभिधायीनी' त्यादि, तन्न, तथासति वाक्यादपि तदलाभप्रसङ्गात् । तर्कोपस्थितस्य वाक्यलक्षणालभ्यत्वे तस्यैव पदादपर्यवसानाद्याभमसम्भव । मानान्तरानगतस्य लक्षणायाभिधापर्यवसानेप्रयोजकत्वात् । तर्कोपस्थितस्य वाक्याल्लक्षणयेव ब्रह्मपदादपि लक्षणया उपस्थित्यविरोधाच्च । यतोवेत्यादिवाक्यात् ब्रह्मपदार्थनिर्णयेपि न कश्चिद्विरोधः । यदत्र विशिष्टपरत्वस्वरूपपरत्वविकल्पेन दूषणमुक्तम्, तन्न, जगत्कारणत्वादिविशिष्टपरत्वे बाधकाभावात् । नन्वेवं मतत्त्वावेदकत्वप्रसङ्ग इति चेत्? तर्हि किमनेन भगवन्धेन, अतत्वावेदकत्वप्रसङ्गाद्वाक्यान्तरस्य विशिष्टपरत्वाभावं प्रसाध्य विशिष्टानुपस्थितेः तत्र व्युत्पत्त्यग्रहात् सत्यादिवाक्यस्याखण्डार्थत्वसाधनाद्वरमतत्वावेदकत्वप्रसङ्गेन साक्षादेव सत्यादिवाक्यस्याखण्डार्थत्वसाधनम् । नच सो ऽपि सम्भवति, भेदसत्यत्वस्थापनात् । किञ्च विशिष्टपरत्वेन त्वदभिमतात् 'यस्सर्वज्ञ' इत्यादिवाक्यात् 'बृहत्त्वाद्बृंहणत्वाच्चे' त्यादिनिर्वचनादेव वा ब्रह्मपदार्थनिर्णयसम्भवान्न कोऽपि दोषः, निर्वचनेन बृहत्त्वाश्रयस्यावगतत्वात् । यच्च चैतन्यातिरिक्ते अपुरुषार्थे श्रुतितात्पर्यविरोध इति, तन्न, स्वयमपुरुषार्थस्यापि यदि ज्ञाततया पुरुषार्थसाधनत्वम्, तदा तत्प्रतिपादनसम्भवात् । नच 'ब्रह्मविदाप्नोतिपरमि' ति ब्रह्मस्वरूपज्ञानस्यैव मोक्षसाधनत्वं श्रुतमिति वाच्यम्, बृहत्त्वविशिष्टज्ञानस्यैव तथात्वावगमात् । अन्यथा 'तमेवंविद्वानि' ति विशिष्टज्ञानस्य मोक्षहेतुत्वोक्तिविरोधात् । यदुक्तं 'पुरुषएवेदसर्वमि' ति प्रस्तुतसर्वात्मत्वमेवशब्द आह, नच सर्वात्मकत्वं किञ्चिद्भेदेपि' युज्यत इति, तन्न, सर्वमिथ्यात्वे तस्य सुतरामसम्भवात् । तथाच सर्वशरीरात्मत्वमेव सर्वात्मत्वश्रुतेस्तात्पर्यम् । 'यस्मिन् द्यौः पृथिवी' त्यत्र च न प्रकारता निषिध्यते, 'एवं विद्वानि' ति तत्प्रकारकज्ञानस्यैव मोक्षहेतुत्वावगमात् ।

तत्रैव श्रुतिरन्यत्र स्वातन्त्र्यमाननिषेधवत् । कामादिश्च निर्योगादिरवधीन एव । प्रतिपन्तर्कगदादिश्च, यद्वाक्यं तत्समर्थं घकार्यमिति विभागात् । नचाप्रयोजकत्वम्, तत्तदर्थान्वयानुभवस्य हि तत्पदजन्यत्वावच्छेदकानि युगपदव्यत्यभङ्गे, तथाचान्वयविषयत्वानुभवस्य पदादसम्भवात्समुदायात्मकवाक्यस्यान्वयविषयता, व्यभिचाराभावात् । किञ्च ज्ञायमानकरणस्य स्वसम्बन्धितावच्छेदकप्रकारकज्ञानजनकत्वमावश्यकम्, अन्यथा ऽनुमितेर्व्यापकतावच्छेदकप्रकारकत्वानुपपत्तेः । नचानुमानत्वेन तद्वाक्यानुभवजनकत्वम्, गौरवात् । किञ्च – वाक्यार्थमात्रस्य लक्ष्यत्वपक्षे अवच्छेदकतया पदार्थभानस्य त्वयैवोक्तत्वादिदानीं सत्यज्ञानाद्यभेदरूपवाक्यार्थे पदार्थानां सत्यादीनामवच्छेदकतया भानं स्यात्; तथाच सत्यादिप्रकारक तदभेदसंसर्गकमेव ज्ञानं सत्यादिवाक्यं जनयेत् । किञ्च - पदार्थस्य वाक्यार्थत्वानुपपत्तिः, वाक्यार्थत्वं पदवाक्यैकदेशत्वात्, एकपदादेव तत्प्रतीतेः सम्भूयकारित्वव्युत्पत्तिविरोधस्याविशेषात्; आकाङ्क्षाद्यभावात् वाक्यत्वानुपपत्तिश्च । नच तात्पर्यगोचरत्वमेवान्वयपदेन विवक्षितमिति वाच्यम्, एकपदस्यैव वाक्यतात्पर्यविषयत्वे तद्बोधनस्य एकस्मादपि पदात् सम्भवेन पदान्तरानपेक्षत्वात् अनुभवस्य पदान्तरव्यतिरेकप्रयुक्तत्वासिद्धेः । नच पदत्वेन स्मृतिहेतुत्वात् एकं पदं स्मारकमेव नानुभावकमिति वाच्यम्, अनेकपदस्यापि स्वस्वार्थस्मारकमात्रत्वात्, यथा गौरश्व इत्यादिषु । नचाकाङ्क्षादिसामग्रीसत्त्वे तदनुभावकमिति वाच्यम्, एकपदस्यापि सामग्रीसत्त्वे तथात्वापत्तेः । नच तत्राकाङ्क्षाभावात् सामग्र्येव नेति वाच्यम्, संसर्गपरत्वाभावे आकाङ्क्षाया एवानपेक्ष्यत्वात् । अतएव पदसमभ्यधिकाभावादित्येतदयुक्तम् । संसर्गस्यैव वाक्यार्थत्वेन तस्य च प्रतियोगिद्वयसापेक्षस्य एकमात्रप्रतियोग्युपस्थापकेन एकपदेनानुभावयितुमशक्यत्वात् । लक्षणार्थं च न पदान्तरापेक्षा, तात्पर्यानुपपत्तेर्लक्षणाबीजतया एकस्मादेव पदाल्लक्षणासम्भवात् । नच पदत्वेन स्मृतिहेतुत्वमपि युक्तम्, सम्बन्धिज्ञानत्वेनैव स्मृतिहेतुत्वात् । पदत्वेन हेतुत्वं तु शाब्दानुभवत्वावच्छेदेनैव । तथाच एकस्मादपि पदात् स्यादेवानुभवः । नच सिद्धान्तेप्येकस्मात् पदादनुभवस्स्यात्! शाब्दज्ञानस्यान्वयविषयतानियमेन प्रतियोग्यन्तरस्य पदादनुपस्थितौ तदसम्भवात् । अन्वयाविषयकं तु शाब्दज्ञान

मप्रसिद्धत्वादत्र नापादयितुं शक्यम् । अन्यथा बाधेन विषयानुमितिप्रतिबन्धेपि परामर्शादनुमितिमात्रं स्यात् । यदि च तद्विषयानुमितिः प्रतिरुद्धा, तदन्यविषयानुमितिस्तु तद्व्याप्यज्ञानरूपविशेषकारणाभावान्नास्ति, निर्विषयकोटिस्त्वप्रसिद्धेत्युच्यते, तदा संसर्गागोचरशाब्दज्ञानस्याप्यसिद्धेर्न तदापादनसम्भव । त्वन्मते तु संसर्गागोचरशाब्दज्ञानस्याप्यङ्गीकारे एकस्मात् पदादप्यनुभवो दुर्वारः । नच मन्मतेपि शाब्दानुभवस्यानेकपदजन्यत्वनियमाभावादेकस्मात् पदादनुभवप्रसङ्ग इति वाच्यम्, अनेकपदत्वेन हेतुत्वे गौरवात्, लाघवेन पदत्वेनैव हेतुत्वात् । किञ्च अनुभवार्थं पदान्तरापेक्षायाम् अव्युत्पन्नपदसमभिव्याहृतादपि पदात् स्वरूपानुभवप्रसङ्गः ? नच व्युत्पन्नपदापेक्षेति वाच्यम्, पर्यायपदाद्व्युत्पन्नादनुभवप्रसङ्गात् । नच व्युत्पन्नभिन्नप्रवृत्तिनिमित्तकपदापेक्षेति वाच्यम्, तादृशपदार्थान्तरप्रतीतिर्हि स्वरूपप्रतीतौ न कथञ्चिदुपयुज्यते । किञ्च सत्यं ब्रह्मेत्येतावतोपपत्तौ पदान्तरवैयर्थ्यं स्यात् । नच विनिगमकाभावात् सर्वं सार्थमिति वाच्यम्, वैयर्थ्यात् पदान्तराप्रयोगमापादयन्तं प्रत्यस्यानुत्तरत्वात् । अन्यथा घट कुम्भ कलशमाहरानयेत्यादिवाक्यस्याप्युपन्यासप्रसङ्गात् । अनन्तपदे ब्रह्मपदापेक्षयाऽव्यवधानस्यैव इतरस्माद्विनिगमकत्वाच्च । लक्षणापि पदद्वयमात्रेण पक्षा । नच ज्ञानादिपदसमभिव्याहारं विना वाक्यार्थब्रह्मस्वरूपविशेषानवगमेन मुख्यार्थस्य धाप्रतीतेः, सत्यज्ञानानन्दात्मब्रह्मणो वाक्यार्थस्य पदद्वयादनवगमात्, तस्य सन्मात्रस्वरूपानतिरिक्तत्वात् । नच ज्ञानाद्भेदसंशयनिवृत्त्यर्थं ज्ञानादिपदमिति वाच्यम्, ज्ञानाद्यात्मस्वरूपावधारणस्य जातत्वेन तत्संशयासम्भवात् । एकस्मिन्नेवावरणानावरणव्यवस्थाया दूषितत्वात् । किंच ज्ञानादिपदाभावेपि सत्त्वावधारणात्मकतज्ज्ञानस्य जातत्वेन ज्ञानाद्यनुभावकत्वरूपाकाङ्क्षाया असम्भव । नच पदान्तरव्यतिरेकप्रयुक्तावधारणाजनकत्व सेति वाच्यम्, सत्यावधारणस्य जातत्वात् । किंच य कश्चिच्चन्द्र इत्यादि वाक्यस्य चन्द्रावधारणजनकत्वस्वरूपप्रयुक्तमिति निराकाङ्क्षत्वप्रसङ्ग इत्यादि दूषण वाच्यम् ।

किंच अनन्तपदस्य भेदमात्रनिषेधकत्वेन ज्ञानभेदस्यापि निषेधात् ज्ञानाद्यात्मत्वस्य तत एव सिद्धिः । नच ज्ञानादीनां मिथ्यात्वेपि ब्रह्मानन्त्यमुपपद्यत इति वाच्यम्, आनन्दे सत्यपि 'सर्वं खल्विदं' इत्यत्र सर्वस्यैव

ज्ञानस्य निष्प्रकारकत्वाया अनपायात् । नच चित्स्वरूपिणः सम्बन्धान्तराभावेन कल्पिततादात्म्यस्यैव सम्बन्धत्वात् चित्त्वेन सर्वं कल्पितमिति चित्स्वत्वसिद्धिः, ज्ञानपदाभावेऽपि अनन्तपदेनैव एतत्प्रयासमहत्कृतेन ज्ञानतादात्म्यसिद्धेः । योग्यताप्यखण्डार्थत्वेनुपपन्ना । नच तात्पर्यविषयार्थाबाधो योग्यता, चन्द्रस्वरूपस्य पृथिव्याम्बाधितत्वेन प्रकृष्टादिवाक्यस्यायोग्यत्वप्रसङ्गात् । कञ्चिदर्थस्यायोग्यस्याप्यस्ति, सेचनसंसर्गस्य जले बाधाभावात् । वाक्यार्थप्रतीत्युपायपदार्थोपस्थितिरासत्तिरित्येतदप्ययुक्तम्, पदजन्यार्थोपस्थितिमात्रस्यातिप्रसक्तत्वेन वाक्यार्थप्रतीत्यनुपायत्वात् । अन्वयप्रतियोग्युपस्थितेरेव तदुपायत्वात् । नच तात्पर्यविषयत्व यत्सम्बन्धी तदुपस्थितिरासत्तिः, सच क्वचित् संसर्गः क्वचिदभेद इति वाच्यम्, प्रकृष्टप्रकाशश्चन्द्र इत्यत्र चन्द्रस्यैव तात्पर्यविषयत्वेन चन्द्रोपस्थितेरनासत्तित्वप्रसङ्गात् । नच प्रकृष्टरूपप्रकाशोपस्थितिरेवासत्तिरिति वाच्यम्, एवं सति तस्या वाक्यार्थसम्बन्ध्युपस्थितित्वेन हेतुत्वं चन्द्रोपस्थितेस्तु पदजन्योपस्थितित्वेन हेतुत्वमिति गौरवप्रसङ्गात् । किञ्च वाक्यार्थसम्बन्ध्युपस्थितित्वेन हेतुत्वे भूतले घट इत्यत्र वाक्यार्थसंयोगसम्बन्धिना संयोगकार्यकारणादीनामुपस्थितेरपि हेतुत्वप्रसङ्गेनासत्तित्वापत्तेः । पदार्थे वाक्यतात्पर्यानुपपत्तिरप्यखण्डार्थत्वे बाधिका ।

यदुक्तम् — 'पदार्थज्ञानाद्वाक्यजन्यात् पुरुषार्थलाभे तत्र तात्पर्यं वाक्यस्यापि सम्भवती' ति; तन्न, पदस्य स्वरूपापरोक्षावधारणहेतुत्वाभावाद्वा पदार्थे वाक्यतात्पर्यम्, तस्य तदवधारणहेतुत्वेऽपि वाक्यरूपकारणविशेषजन्यज्ञानस्यैव निवर्तकत्वाद्वा ? नाद्यः, एकस्मादपि पदात् ब्रह्मावधारणसम्भवस्योक्तत्वात् । न द्वितीयः, अधिष्ठानापरोक्षज्ञानस्य साक्षादज्ञानविरोधित्वान्निदिध्यासनादिना प्रतिबन्धकभेदवासनानिवृत्तौ पदजन्यब्रह्मावधारणादप्यविद्यानिवृत्तेरावश्यकत्वात् पदार्थे वाक्यतात्पर्यकल्पनस्य व्यर्थत्वात् । पदार्थस्यैकत्वे उद्देश्योपादेयभावश्चानुपपन्नः, ज्ञानाज्ञानयोरेकाश्रयायोगात् ।

यत्तु — 'यच्छिद्रं तत् खमितिवदि' त्यादि; तन्न, तत्र खं खेन न भिद्यत इति स्वरूपभेदाभावनिश्चयेऽपि खं छिद्रं न भवतीति जायमानो भ्रमः छिद्रशब्दवाच्यत्वावच्छिन्नभेदविषय एव खे वाच्यः, सच वाच्यत्व

विशिष्टाभेदोपदेशादेव निवर्तते, प्रकृतेपि ज्ञान न स्वस्वरूपात् भिन्नमिति निश्चयेपि आनन्दभिन्न नवेत्यादिभ्रमः आनन्दत्वाद्यवच्छिन्नभेदविषय इति आनन्दत्वादिविशिष्टाभेदोपदेशादेव निवर्तते । किञ्च सर्वपदानां लक्षकत्वे ब्रह्मणोभेदेऽनन्तशब्दविरोधात् भावनानुपपत्तिः । सत्यज्ञानाद्यात्मत्वे एतच्छ्रुत्युपन्यासासम्भवश्च ।

यदत्रोक्तं– 'विशिष्टवाचिना सत्यादिपदेन वाच्यैकदेशस्य चैतन्यस्वरूपस्य लक्ष्यत्वान्नानुपपत्तिरि' ति, तन्न, विशिष्टैकदेशलक्षणायामपि ज्ञानत्वानन्दत्वादीनामिवानन्दस्वरूपविशेषणस्यापि विकल्पितत्वोपपत्त्या ब्रह्मणि सत्यभेदाविरोधित्वात् । अज्ञानात्मत्वेपि कल्पितज्ञानत्वादिविशिष्टवाचिनो ज्ञानादिपदस्य विशेष्यलक्षकत्वसम्भवाच्च ज्ञानाद्यात्मकत्वरूपसिद्धिरपि युक्ता ।

तत्त्वमस्यादिवाक्यमपि नाखण्डार्थम् । तत्र यत् परस्परनिरूपितेत्याद्यनुमानमुक्तम्; तदयुक्तम्, रक्तरूपो घटः, अयं घट इत्यत्र व्यभिचारात् । रक्तरूपशब्दस्य द्रव्यवाचित्वात् । नीलमुत्पलमित्यत्रापि व्यभिचार एव, नीलशब्दस्य द्रव्यपर्यन्तत्वात् । किञ्च द्रव्यं घट इत्यत्र परस्परनिरूपिताकार्यकारणघटपटात्मकद्रव्यगोचरत्वाद्व्यभिचारः । नच तन्व्यवस्थासेन कार्यकारणभावाधिकरणद्रव्यगोचरत्वाभावो विवक्षित इति वाच्यम्, नीलमुत्पलमित्यादौ व्यभिचारात् । नच परस्परानिरूपितकार्यकारणभावानधिकरणद्रव्यगोचरत्वमपि विवक्षितमिति वाच्यम्, नीलान्युत्पलानीत्यादौ तादृशानेकोत्पलद्रव्यविषयत्वेन व्यभिचारात् । नच द्रव्यगोचरपदमात्रघटितत्वमेव विशेषणमिति वाच्यम्, पाकादिना पश्चादपि नीलोत्पत्तेरुत्पले सम्भवाद्द्रव्यपदवैयर्थ्यात् । इदन्त्वस्यानुगतत्वादिदन्नीलमिति वाक्ये व्यभिचारो माभूदिति द्रव्यविशेषणमिति चेत्? एवं सतीदमुत्पलमिति वाक्ये व्यभिचार एव । किंच पार्थिवे सुवर्णे सुवर्णं तैजसमिति भ्रान्तवाक्ये व्यभिचारः । परस्परानिरूपितकार्यकारणभावानधिकरणत्वेन ज्ञायमानद्रव्यगोचरत्वविवक्षायां सुवर्णं तेजः घटो द्रव्यमित्यादिवाक्ये व्यभिचारः, नहि तत्र परस्परं कार्यकारणभावो ज्ञायत इति नियमः । नच तत्र प्रमाणत्वमेव वाक्यविशेषणं विवक्षितम्, न ज्ञायमानत्वद्रव्यविशेषणमिति वाच्यम्; तत्त्वावेदकत्वस्य विवक्षायां दृष्टान्ते साधनवैकल्यात्, विशेषणान्तरवैयर्थ्याच्च । तद्धि तत्प्रकारकज्ञानजनकत्वस्य पक्षे

असिद्धेः, तदभाववति तत्प्रकारकज्ञानान्यज्ञानजनकत्वविवक्षायां सप्रकारकज्ञानान्यज्ञानजनकत्वस्यैव व्याप्यत्वे शेषवैयर्थ्यात् । ननैवं हेत्वप्रसिद्धिः, सोऽयमित्यादौ प्रसिद्धत्वाभावे साध्यवैकल्यापत्तेः । अखण्डाभावे न वैयर्थ्यमिति प्रलापस्याकोसलाकारसुतिमात्रत्वात् । प्रकारत्वविद्वेषिणस्तत्र तद्घटितनिरुक्तयसम्भवाच्च ।

यदप्युक्तम् — 'द्रव्यमानसम्बन्धप्रवृत्तिनिमित्तकत्व द्रव्यगोचरत्वम्, अतो दण्डी पुरुष इत्यत्र नव्यभिचारः, दण्डिज्ञानमित्यपि प्रयोगादि' ति; तन्न, सिकतिलो देशश्शर्करिलो देशस्सिकता अयं देश इत्यत्र व्यभिचारात्, तत्र देशे लुबिलजावपिति देशे प्रत्ययस्य नियतत्वात्; एवं तारकितादयो द्रष्टव्याः। 'औपाधिकभेदवत्पदार्थके' त्यादिहेतुरप्ययुक्तः, कुम्भखं परिच्छिन्नमित्यत्र व्यभिचारात्; कुम्भखस्य कुतश्चिदौपाधिकभेदवत्त्वात् । नापि 'परस्परपदार्थनिरूपितौपाधिकभेदवत्पदार्थकत्व' विवक्षितम्, मठाकाशः शब्दाश्रय इत्यत्र व्यभिचारात्; शब्दाश्रयपदार्थमहाकाशस्य मठाकाशात् भेदात् । नच पदार्थशब्दः पदजन्यानुभवविषयपरः, अनुभवश्च मठाकाशस्यैवेति न दोष इति वाच्यम्; — महत् ख कुम्भखमित्यत्रासिद्धेः, तत्र स्वरूपस्यैवानुभवविषयत्वात् । पदजन्यस्मृतिविषयभेदस्तु मठाकाशः शब्दाश्रय इत्यत्रास्ति । नच पदार्थतावच्छेदकावच्छेदेन परस्परार्थनिरूपितौपाधिकभेदवत्त्वम्, शब्दाश्रयपदार्थतावच्छेदक च मठाकाशेपीति न व्यभिचार इति वाच्यम्; — सूर्यसूर्यकभेदभ्रमदशायामेव जलसूर्यः करसहस्रशालीति वाक्ये व्यभिचारात् । एवमयं वारिस्थमेरुमन्दरावृत्तिगुरुत्वविशेषाश्रय इति वाक्ये व्यभिचारः । एव मातर तत्प्रतिबिंबच पश्यतः शिशोः बिंबप्रतिबिंबयोरैक्यज्ञानाद्धुरस्य प्रतिबिंबे इव मातेति प्रयुञ्जानस्ये व्यभिचारः । किञ्च सजन्नोपाधिकव्यक्तिभेदाङ्गीकाराच्चव समानाधिकरणवाक्यमात्रे हेतुसत्त्वाद्व्यभिचारः । प्रवृत्तिनिमित्तधर्मभेदात् औपाधिकभेदग्रहिशेषणवैयर्थ्यं च । आशाद्धश्च, — जीवब्रह्मभेदस्य स्वाभाविकत्वात् । तृतीयहेतुरप्ययुक्तः, दण्डी देवदत्त इत्यत्र व्यभिचारात् । ननु दण्डदेवदत्तयोराधाराधेयभावोऽस्तीति चेत्? तर्हि

भ्रान्तोदीरिते तस्मिन्नेव व्यभिचारः । किञ्च यद्येवमेतत्पदविशेषणस्य पदान्तरार्थविधेयत्वाभावो विवक्ष्यते, तर्हि तत्पदस्य पदान्तरार्थाविशेषणत्वात् साधनवैकल्यात् साध्यवैकल्यञ्च । यदत्र निष्कल्पदूषणं 'तत्र किं सोऽयमित्यादिपदद्वय' मित्यादिना कृतम्, तन्न, अभेदमात्रस्य बुभुत्सितत्वेन तत्तेदन्ताश्रयाभेदे तात्पर्यात् । नच तत्तेदन्तयोरुपलक्षणत्वमिति वाच्यम्, वस्तुतो यः तत्तेदन्ताश्रयस्तदभेदमात्रस्य प्रागेव निश्चितस्याजिज्ञासितस्यातात्पर्यविषयत्वात् । तथाच तात्पर्ये तस्य विशेषणत्वं वाच्यमिति तात्पर्यविषय एव तत्तेदन्तासम्बन्ध इति कुतस्तस्य न बोध्यता? तदिदमुक्तं सोऽयमिति पदद्वयं तत्तेदन्तयोरेकवृत्तित्वं बोधयतीत्यादिना । वाक्यार्थाभेदप्रतियोगिनि तूपलक्षणम्, वाक्यार्थाभेदानन्वयात्, अभेदस्वरूपमात्रज्ञानात् नायं स इति भेदभ्रमनिवृत्तिरप्यनुपपन्ना । अतो व्यर्थैवाभेदस्वरूपलक्षणा । अन्यथा देवदत्तोऽयमित्यतोऽपि स भ्रमो निवर्तेत, अस्यापि सत्तानिश्चयजनकत्वात् । ननु तत्पदं विना तद्भेदभ्रमनिवर्तकसत्तानिश्चयो न जायत इति चेत्, किं तत्पदसमानार्थकपदप्रयोगेऽपि न जायते? तत्त्वप्रकारकज्ञानजनकं तादृशावधारणजनकमिति चेत्, व्युत्पत्तेरवधारणे कथमुपयोगः? व्युत्पत्तिस्संस्कारद्वारा ज्ञानहेतुरिति चेत्, तर्हि तत्त्वप्रकारकावधारणमेव भेदभ्रमविरोधि त्यायातम् । ननु तादृशविशिष्टज्ञानाधीनलक्षणाजन्यविशेष्यावधारणमेव भ्रमविरोधीति चेन्न,— प्रत्यभिज्ञाप्रत्यक्षस्य तत्त्वविशिष्टावधारणस्यैव तादृशभ्रमविरोधित्वदर्शनात् लाघवाच्च तादृशविशिष्टज्ञानस्यैव तादृशभ्रमविरोधित्वात् ।

किंच यद्यभेदमात्रं प्रतीतिविषयः, न तत्तेदन्ते, तदा तात्पर्यविषयभूतस्तत्तेदन्ताश्रयाभेदो न प्रतिपादितस्स्यात् । अभेदस्वरूपमात्रप्रतीत्यङ्गीकारे तद्विषयस्याभेदस्य तव मते तत्तेदन्ताश्रयाभेदादन्यत्वस्यैव वाच्यत्वात्, अन्यथा वाक्यार्थत्वात् ब्रह्मणस्सत्यादितादात्म्यस्य पदद्वयसत्तानामानुमाने व्यभिचारो दुरुद्धरस्स्यात् । नियोगः पदार्थः, इतरान्वितनियोगस्तु तद्भिन्न एव वाक्यार्थः, वाक्यार्थस्संसर्ग इत्यत्र संसर्गः पदार्थः, वाक्यार्थत्वसंसर्गस्तु तद्भिन्न एव वाक्यार्थ इति स्वदृष्टान्तपरिहारासम्भवात्, वाक्यार्थत्वादिप्रतिपादनासदप्रतिपादनाच्चापाततः तत्र तथा व्यवस्था ।

यदुक्तम् - पदार्थैकदेशे ऽन्वयाव्युत्पत्तिरिति; तन्न, सर्वं हि वाक्यं एकपदप्रतिपन्नविशिष्ये ऽपरपदप्रतिपन्नविशेष्यसंसर्गं बोधयतीति नियमः; अन्यथा समानाधिकरणं व्यधिकरणं च कृत्स्नमेव वाक्यं लक्षकं स्यात्।

यदुक्तं 'विशेषणयोश्चाभेदाभावेन तदवच्छेदकतयान्वयो वाच्य' इति; तत्तथैव, प्रकृतेऽपि तत्सम्भवात्; नत्ववच्छेद्यान्यूनकालीनत्वमवच्छेदकत्वम्, दण्डी पुरुष इत्यत्र दण्डस्याविशेषणत्वप्रसङ्गात्; नचेष्टापत्तिः, सकलतान्त्रिकव्यवहारविरोधात्।

किञ्च - किं प्रमाणमात्रे व्यावर्तकानां त्वदुक्तावच्छेदकतयान्वयस्यभावादेव कल्प्यते, उत व्यधिकरणवाक्यस्वाभाव्यात्, समानाधिकरवाक्यस्वाभाव्याद्वा? नाद्यः प्रत्यक्षादिषु न्यूनकालस्यापि विशेष्ये प्रतीतेः। नद्वितीयः, दण्डमभाव इत्यादौ अभावसम्बन्धन्यूनकालत्वाद्दण्डस्य। नतृतीयः, दण्डी भोक्ष्यत इत्यादौ दण्डादेर्वाक्यार्थभोजनसंसर्गन्यूनकालीनत्वात्। किञ्चाभेदानवच्छेदकत्वरूपान्वयः प्रतिपाद्यत इति विवक्षितम्, उत वस्तुतो ऽस्तीति? नाद्यः, अपदार्थत्वादवाक्यार्थत्वाच्च। किञ्चैवमप्यभेदान्वयः पदार्थैकदेशे नैवेति व्यर्थः प्रयासः। अपिच पदार्थस्य वाक्यार्थेनान्वयाव्युत्पत्तेः कथमभेदानवच्छेदकतया तदन्वयः। किञ्च एकपदार्थस्य सर्वस्य इतरपदार्थेन एकरूपान्वयस्तत्रापि नास्ति, विशेष्ययोरभेदेनानन्वयात्; यथाकथञ्चिदन्वयमात्र तु अस्मन्मत एव सुवचम्। विशेषणयोस्सामानाधिकरण्येन विशेष्ययोश्चाभेदेनान्वयात्। तदनु विशेषणयोर्न कथञ्चिदप्यन्वयसिद्धिः, अभेदावच्छेदकत्वेनाभेदमानान्वयसिद्धेः। पदार्थतावच्छेदकस्य पदार्थान्वयितया केनचिदन्वयमात्र मन्मतेप्यस्ति। अभेदपदार्थतावच्छेदकयोरवच्छेद्यावच्छेदकभावप्रतीतौ अभेदस्य प्रकारत्वविशेष्यत्वान्यतरप्रसङ्गश्च। अवच्छेद्यावच्छेदकसंसर्गप्रतियोगिभूताभेदस्य वाक्यबोध्यतया विरम्यव्यापारप्रसङ्गाच्च। नद्वितीयः, एवमपि पदार्थैकदेशयोरेवान्वयप्रतीतेः। स्वरूपतोऽवच्छेदकतयान्वयोपि वाक्यार्थाभेदेनैव, ननु पदार्थेन। किञ्च नीला बलाकेति भ्रान्तोक्तौ नीलत्वस्य स्वतोव्यवच्छेदकत्वं न सम्भवति। नच तत्रापि लक्षणा, नीलत्वस्यासिद्धस्मादविशे

पात्, द्वयोरपि विशिष्टाभेदतात्पर्यकत्वात्; अनुपपत्तिप्रतिसन्धानाभावाच्च । किंच - विशेष्ययोरभेदे भासमाने विशेषणयोरभेदभानाभावेऽपि तदवच्छेदकतयान्वयो वाच्य इत्यस्य विशेष्ययोरभेदे भासमाने तदभेदान्यूनकालीनधर्मस्यैव भानं न न्यूनकालीनस्येति फलितार्थः; अयञ्च नियमो निर्निबन्धनः, अन्यूनकालीनधर्मोपरक्तबुद्धेरिव न्यूनकालीनधर्मोपरक्तबुद्धेरप्युद्देश्यत्वे तत्प्रतिपादनसम्भवात् । तस्मात् न त्वदुक्तमवच्छेदकत्वं साधु, किन्तु यद्वत्तया ज्ञात एव तात्पर्यविषयीभूतेतरान्वयधीस्तत्त्वमवच्छेदकत्वम्; नच काकवद्देवदत्तगृहमित्यत्र काकस्यापि विशेषणत्वप्रसङ्गः, यद्वत्तया ज्ञात एव इतरान्वयधीस्तात्पर्यविषयीभूतेत्यर्थात्; एतदन्वयं ज्ञात्वैव इतरान्वयं जानात्वित्यभिप्रायेण यद्वाक्यं प्रयुज्यते नत्वेतत्सहचरितं धर्मान्तरं ज्ञात्वा तेनेतरान्वयं जानात्विति, तद्विशेषणम्, काकस्तु तत्सहचरितमुत्तृणत्वादि ज्ञात्वा देवदत्तगृहं जानात्वित्यभिप्रायेण प्रयुज्यत इति न विशेषणम् । तदिदमाह भगवान्पतञ्जलिः 'य एष मनुष्यः प्रेक्षापूर्वकारी भवति सोऽप्रधानेन निमित्तेन प्रधानमित्तमुपादत्ते वेदिकां पुण्डरीके वे' ति । इदञ्च तत्तेदन्तादिष्वपि सम्भवति, तस्मादेकपदविशेष्यस्य इतरपदविशेष्येण सममभेदान्वयस्तद्विशेषणेन समं धर्मधर्मिभावः विशेषणस्य च पदान्तरविशेषणेन समं धर्मधर्मिभावः विशेष्येण समं सामानाधिकरण्येनान्वय इति न पदार्थस्य पदार्थैकदेशेनान्वयप्रसङ्गः ।

यदपीदमुक्तम् — विशिष्टं विशेष्यादन्यदेव, अन्यथा देवदत्तोऽयमिदानीं दण्डी न भवतीति प्रतीतिविरोधात्; नच सा दण्डाभावविषयैव, तदन्योन्याभावस्य तद्विषयत्वे तद्विशिष्टकालेऽपि तद्धीप्रसङ्गात्, अत्यन्ताभावस्य च भेदबुद्ध्यविषयत्वात्, कदाचिद्दण्डसम्बन्धाभावे तत्र तदत्यन्ताभावायोगाच्च । कालभेदेनैवास्मिन्नविरोध इति चेत्; तथाप्यभेदभानाभावेन तदयोगात् । अन्यथा [illegible] प्रतियोगिता [illegible] । तद्भेदाभ्युपगमेनावश्यं विशिष्टस्यान्यत्वम् । एवं दण्डी नास्तीति प्रतीति-मानाभावो यदि देवदत्तविरोधिकः, तर्हि [illegible], अत्यन्ताभावप्रतियोगित्वेन देवदत्त [illegible] । नच सदा [illegible]

च्छेदकानवच्छिन्नो नास्तीति वाच्यम्, अभावस्य प्रतियोगिना सदैव विरोधात्; विशेष्यस्य विशिष्टानन्यत्वपक्षे त्वदुक्तव्यवस्थायोगाच्च । तस्माद्विशिष्टयोर्भेदान्न तयोरैक्यप्रतिपादनं सम्भवति । अस्मन्मते विशिष्टभेदो न स्वरूपाभेदविरोधी, तस्यानिर्वचनीयत्वात्; अतो दण्डवत्र धूमवान् वह्निमानित्यभेदप्रतिपादनं सम्भवति । तत्त्वमसि सोऽयमित्यत्र तु न सम्भवति, विशेषणयोरभेदावच्छेदकतया धूमाग्न्योरिवान्वयासम्भवात् । तस्माल्लक्षणया वाक्यमखण्डार्थमिति ॥ तदप्यनेन निरस्तम्, त्वदुक्तावच्छेदकतयान्वयासम्भवस्योक्तत्वात् । विशिष्टं विशेष्यादन्यदित्यप्यसिद्धम्, तथात्वे दण्डसंसर्गदशायामपि नायं दण्डीति प्रत्ययप्रसङ्गात्, दण्डकुण्डलसंसर्गदशायां दण्डी कुण्डली नेत्यपि प्रयोगप्रसङ्गात् । मानाभावाच्च न विशिष्टभेदः । त्वदुक्तानुभवश्च कालविशेषावच्छिन्नविषयत्वात् कादाचित्कं विशेषणावच्छिन्नप्रतियोगिताकविशेष्यभेदं विशेषणात्यन्ताभावस्य कादाचित्कं सम्बन्धं वा साधयेत् न तु विशिष्टभेदम्, कालावच्छिन्नविषयत्वादेव । नहि विशिष्टस्य विशेष्यभेदः कादाचित्कः । अत्यन्ताभावस्यैव भेदबुद्धिविषयत्वे न किञ्चिद्बाधकम्, घटात्यन्ताभावाभावप्रतीतेर्लाघवानतिप्रसङ्गाभ्यां घटविषयत्ववदिहापि तत एवात्यन्ताभावविषयत्वकल्पनात् । अत्यन्ताभावस्य प्रतियोगिदेशत्व कालभेदे नोपपद्यत एव । अन्यथा प्रतियोगिकालेऽप्यभावस्य विरोधात् देशान्तरेऽप्यभावो न स्यात् । देशभेदस्याविरोधहेतुत्वे यथाप्रमाणं कालभेदः कथं न विरोधपरिहारकः । भावाभावयोर्विरोधाङ्गीकारो हि न राजाज्ञानिबन्धनः, अपितु प्रमाणनिबन्धनः । तच्च प्रमाणं भावाभावयोर्विरोधवत् तयोर्देशकालभेदेनाविरोधेऽपि तुल्यम् । प्रमाणातिलङ्घने च देशकालभेदेऽपि तयोस्सिद्धिर्न स्यात् ।

एतेन तथाप्याश्रयभेदाभावे तदयोगादिति निरस्तम्, यथाप्रमाणमाश्रयभेदस्येव कालभेदस्याप्यविरोधहेतुत्वात् । प्रतियोग्याश्रये अभावसम्भवे च काललक्षणोपाधिभेदात्, औपाधिकभेदाङ्गीकारेऽपि कदाचित् प्रतियोग्याश्रये तस्मिन् कथमभावः स्यात्? नह्यौपाधिकभेदाङ्गीकारमात्रेण कादाचित्कं प्रतियोग्याश्रयत्वमपि गच्छति । किञ्च – स्वाभाविकभेदस्यैवान्यत्र भावाभावाधिकरणयोर्दर्शनादौपाधिकभेदाङ्गीकारेऽप्यभावो न स्यात्, लाघवेन भेदमात्रस्यैवाविरोधप्रयोजकत्वे च दण्डसंसर्गदशायामेव कुण्डलिविशिष्टभेदस्य सत्वात्

दण्डाभाव. स्यादेव । यथाप्रमाण कालोपाधिकभेदस्यैवाविरोधहेतुत्वाङ्गीकारे च लाघवेन कालभेदस्यैव तत्प्रयोजकत्वकल्पन युक्तम् । आश्रयस्वरूपस्य सम्बन्धत्वेपि न प्रतियोगिकालेभावप्रसङ्ग, यथाप्रमाण कालविशेषएव तत्स म्बन्धत्वात् । अन्यथा तत्राप्यगते । नह्यौपाधिकभेदाङ्गीकारमात्रेणाश्रयस्वरूप मभावश्च गच्छति, येन प्रतियोगिदशाया सम्बन्धो न स्यात् । नच देव दत्तवति दण्डी नास्तीति प्रत्ययो विशिष्टभेदसाधक, तस्य देशकालभेदवत् प्रतियोगिनि प्रतियोगितावच्छेदकाभावस्य भावाभावविरोधहेतुतासाधकत्वात् । तथाच प्रतियोगिनि प्रतियोगितावच्छेदकसम्बन्धकाले प्रतियोग्यभावयोरैकाधि- करण्याभावनियमाविरोधः ।

किञ्च तत्त्वमसिवाक्यस्य एकप्रातिपदिकार्थमात्रपर्यवसाने पदार्थशोधक वाक्याभ्यामेव तदंशस्य सिद्धत्वान्महावाक्यवैयर्थ्यम् । ननुच महावाक्य विना न जीवब्रह्मणोरभेदबोध इति चेत् ? न, स्वरूपातिरिक्ताभेदासिद्धे. । महावाक्य विना भ्रमसशयनिवृत्तिर्न जायत इति चेत् ? न, अभेदावधारणे सति तदयोगात् , स्वरूपस्यावधारितत्वे तदभिन्नस्याभेदस्यानवधारणासम्भवात् । स्वरूपस्य पदार्थशोधकवाक्येनैवावधारणात् अप्रयोजकत्वाच्च । नचैकधैवानुद्रष्टव्य मिति श्रुतिविरोध, किमनयाश्रुत्या ऽभेदेन ज्ञान विधीयते, उत स्वरूप- मात्रज्ञानम् ? नाद्य , नीलोत्पलादाविव सखण्डार्थत्वाविरोधात् । नद्वितीय , 'सख्यायाविधार्थेधे' ति धाप्रत्ययस्य विधार्थे विधानात् , विधाशब्दस्य धर्म परत्वात् । नच ब्रह्मणि द्रष्टव्यप्रकारस्यापि बहुत्वात् द्वैतिमते विरोध इति वाच्यम्, 'नेहनानास्ति किञ्चने' ति प्रकृतस्य प्रपञ्चस्य परमात्मशरीरत्वेन द्रष्टव्यत्व नतु स्वतन्त्रतयेत्येवपरत्वात् । अन्यथा ब्रह्मैव द्रष्टव्यमित्येतावता सिद्धौ एकधेत्यस्य वैयर्थ्यात् । नच चैतन्यातिरिक्तस्य मिथ्यात्वेन शास्त्र प्रतिपाद्यत्वायोग , भेदसत्यत्वस्थापनात् । जीवत्वब्रह्मत्वविशिष्टाभेदज्ञानस्यैव भ्रमसशयादिनिवर्त्तकतया तस्यैव तन्मूलाज्ञाननिवर्त्तकत्वाच्च । जीवब्रह्मत्व रूपेण कल्पितभेदेपि स्वपार्थक्यभेदज्ञानस्याविरोधात् न तथा ऽभेद ज्ञानासम्भव । युक्तचैतत्, स्वरूपमात्रज्ञानस्य पदार्थस्वरूपशोधकेनैव जातत्वात् । नन्वेव तत्वावेदकत्व न स्यादिति चेत् ? तर्हि क आत्मेति स्वरूपमात्रबुभुत्साया प्रवृत्ताना नाह्यागमानामपि स्वद्वीताऽमरत्वमात्रपरताः

तत्वावेदकत्वप्रसङ्गः । ततश्च वेदान्तानां तत्वावेदकत्वमितरेषां नेति व्यवस्था न स्यात् । वेदान्तेभ्यो जडत्वपरिच्छिन्नत्वभेदादिस्वदायनिवृत्तेरन्यैस्तदनिवृत्तेरस्येति चेत्, तर्हि सखण्डार्थत्वेपि न तत्वावेदकत्वविरोधः । वस्तुतस्तु सखण्डार्थत्व एव उक्ततत्वावेदकत्वसम्भवः, स्वरूपमात्रावधारणस्य ग्राह्यग्रहणैकान्तत्वेपि असत्यत्वानित्यत्वभेदस्वदायाद्यनिवृत्तेः । यच्चोक्तमखण्डार्थत्वाभावे वाक्यं निर्विषयं स्यादिति, तच्च, समानाधिकरणवाक्यस्य विशेष्याभेदविषयत्वात् । दण्डो घटकारणं धूमवान्वह्निमानित्यादौ त्वदुक्ततादात्म्यादेरभावात् त्वयापि तस्य विशेष्याभेदविषयत्वकथनाच्च । सचाभेदरससर्गस्तदन्यो वेत्यन्यदेतत् ।

यदपि तत्वमसीत्यस्य तदाश्रितत्वपरत्वे दूषणमुक्तं 'औपाधिकोह्ययी'त्यादि, तन्न, भेदसत्यत्वसाधनात् । 'यथाह्ययमि'ति श्रुतिस्तु यथा नौपाधिक भेदपरा तथाऽवक्ष्यते । 'एकोदेवः' 'सएवहि' ति श्रुती चान्तर्यामिपरे । 'मयाप्यभूतानी'ति श्रुतिस्तु भूतानि सृष्ट्वा तत्र जीवं प्रवेश्य रामकृष्णादिरूपेणावतीर्य सर्वज्ञोप्यसर्वज्ञवद्व्यवहरन्नास्ते, यत एव स्रष्टृत्वनियन्तृत्वादिकं परमात्मन एव अतोऽयं परमात्मा असदृशः निर्विकार इत्यवपरा स्यात् । अथवा स्वयमेव प्रविश्यामूढोपि मूढ इव बाल इव व्यवहरन् तत्तद्व्यापारेषु नियमनेन लीलारसमनुभवन्नास्ते मायया स्वसङ्कल्पेनैव, इत्येवम्परा स्यात्, बाल "क्रीडनैरिव" 'यन्त्रारूढानिमायये' त्याद्युपबृंहणानुसारात्, 'मायावयुनं ज्ञानमि'ति मायाशब्दस्य सङ्कल्पात्मकज्ञानवाचित्वावगमात् । त्वयापि सर्गकर्तुस्सर्वज्ञस्य नहि मूढत्वं वक्तुं शक्यमिति स्वरूपमात्रलक्षणाया वाच्यत्वात् । तत्राप्येकपदलक्षणाया एवोचितत्वात् । अद्वितीयत्र प्रपञ्च सत्यत्वसमर्थनादेव निरस्तम् । समानपदत्र ज्ञानरूपतामपि निषेधति । मानान्तरानुरोधे च विकारादिनिषेध एव युक्तः । 'अनेनजीवेने' त्यत्र जीवशब्दस्तु आनन्दपर इति तत्रैवोक्तम् ।

यदणुत्वे दूषणम्, तन्न, 'एषोऽणुरात्मे' त्यादिबहुश्रुतिविरोधात् । श्रुतौ महच्छब्दस्याचार्यातेरपि प्रयोगादन्यपरः । नच अणुत्वे ग्रन्थभस्त्वानुपपत्तिः, अणोरेव जन्ममरणादिसंसारस्य ग्रन्थत्वात् । तदन्यस्य नोरन्नीकारात् ।

मानसप्रत्यक्षत्वे आत्मत्वस्यैव प्रयोजकत्वात् । महत्त्वस्य रूपवदप्रयोजकत्वात् । नच विरुद्धदेशे युगपत् सुखदुःखाद्ययोगः, ज्ञानस्य व्यापित्वेनोपपत्तेः । नच तदाश्रितत्वस्य सदायतना इत्यादिनैव सिद्धेरितरवैयर्थ्यम्, 'सर्वाः प्रजाः सदायतनाः' इति सामान्येनोक्तस्य विशेषे उपसंहारात् । तज्जातत्वेपि न दोषः, शरीरविशिष्टविषयत्वात्तत्वमसिश्रुतेः । विशिष्टस्य च तज्जन्यत्वात् । 'सन्मूलाः' इत्युक्तोपसंहारत्वान्न वैयर्थ्यमपि । तदधीनत्वेपि न दोषः । नच तत्र धान्यशब्दो न धान्याधीनत्वपरं, किन्तु तण्डुलस्वरूपपर इति वाच्यम्, 'धिनुही'ति श्रुतप्रीणनहेतुतया धान्यमसीत्युक्तत्वेन प्रीणयितृत्वधीन स्यस्यैव वक्तुमुचितत्वात् । एतदभिप्रेत्यैवोक्तं वैयाकरणैः - 'धान्यानां भवने क्षेत्रे खञ्' इत्यत्र धिनोतीति धान्यमिति 'कृत्यल्युटो बहुलम्' इति कर्तरि ण्यत्, अस्मादेव निपातनादन्त्यस्य लोपः, इकारस्य चात्वम्, 'धान्यमसि धिनुहि देवानिति हि दृश्यत' इति । अस्य धिनुहीत्येतदुपपादनायोक्तो धान्यशब्दो धिनोतेर्व्युत्पन्न इत्यभिप्रायः । सच धान्यशब्दो जातिविशेषे योगरूढ इति धान्याधीनत्वमेवात्र लक्षणया धान्यशब्देनोच्यते । तदधीन यस्यापीत्यादिकं तु परिहृतमेव । यदधीनेत्यादिवचनं च ब्रह्मसत्तातिरिक्तजीवसत्तायास्त्वयानङ्गीकारात् अप्रमाणमेव तव स्यात्, अस्माकं तु त्वन्मते अनादेरपि जीवेश-भेदस्याविद्याधीनत्ववत् नित्यस्यापि जीवस्य भगवदधीनत्वादुपपन्नं यदधीने-त्यादिवचनम् । अतिदेशेपि न दोषः, अब्रह्मदत्ते ब्रह्मदत्तशब्दप्रयोगवत् अतस्मिंस्तत्प्रयोगस्यैवातिदेशज्ञापकत्वात्, त्वम्पदमुख्यार्थत्वाच्च । नच श्वेतकेतौ ब्रह्मसारूप्यस्य बाधः, नित्यत्वादेरेव सारूप्यत्वात् । यच्चात्तत्त्वमसीति च्छेदे दूषणं 'भेदप्रतिपादने नैष्फल्य'मिति; तन्न, 'तद्धैक आहु'रित्यत्र वादिप्रसञ्जितासत्त्वनिषेधवत् वादिप्रसञ्जिताभेदनिषेधसम्भवात् । युक्तश्च स्वस्यैव स्वातन्त्र्येण कतिपयप्रजामूलत्वं कतिपयायतनत्वं कतिपयप्रतिष्ठात्वं च मन्यमानस्य स्वातन्त्र्यभ्रमं लोकसिद्धमेव वारयितुं तत्सर्वं स्वातन्त्र्येण सर्वापेक्षं ब्रह्मणि प्रतिपाद्य तादृशात् स्वतन्त्रादन्यस्त्वमसीत्येतत्परत्वम् । वस्तुतस्तु देवादिशब्दानां शरीरवाचिनां शरीरिपर्यन्तत्वात् त्वम्पदमपि श्वेतकेतवन्तर्यामिपर्यवसायित्वेन सामानाधिकरण्यमुचितम् । "नता.स्म सर्वं च यथा-

न च निर्विशेषगोचरप्रत्यक्षादिभिरनैकान्त्यम् , तेषामन्यत्र प्रतिक्षिप्तत्वात् । पराभिमतनिर्विकल्पकस्य निश्शेषोन्मूलनात् । एवं वाक्यत्वादिति प्रागुक्तश्च हेतुरनुसन्धेयः । यद्वा — किमनुमानक्लेशेन? सत्यज्ञानादिवाक्यश्रवणसमनन्तरं निपुणनिरूपितनीति परिशुद्धबुद्धीनामपि विशिष्टवाक्यार्थबोध एव जायते, यथा सगुणब्रह्मादिपरतया भवदभिमतवाक्यश्रवणे; न चैतदपह्नवमर्हति, सर्वेष्वपि वाक्येषु विशिष्टवाक्यार्थबोधापह्नवप्रसङ्गात् , न च तत्साहसिकानां पश्यतोहराणां भवतामपीष्टम् । अतो ऽनन्यथासिद्धानन्तर्यनियमाधिगमादन्यत्रेवात्रापि स्वानन्तरभाविविशिष्टवाक्यार्थबोधं प्रति करणत्वं प्रत्यक्षत एव सिद्धम् । बाधशङ्का तु प्रागेव निरस्तेति । अतस्सिद्धं सखण्डपरं ' तत्त्वमसि ' ' सत्य ' मित्यादि वाक्यमिति ।

इति शतदूषण्यां अखण्डवाक्यार्थखण्डन–
अष्टत्रिंशो वाद ।



---

तिष्ठा यन शाश्वती । " इत्यादिवचनेन ब्रह्मणस्सर्वशब्दवाच्यत्वात् । अपृथक्सिद्धधर्मवाचिना च धर्मिपर्यन्तत्व शुक्लादिशब्देषु दृष्टम् । अतएव ब्राह्मणो यजेतेत्यादिकः प्रयोगश्च मुख्यो भवति । एवञ्चाभिमुखावस्थित जीवमेव श्वेतकेतो इति सम्बोध्य तस्य स्वविशेषणकब्रह्मप्रतिपत्तये अयसमानाधिकरणनिर्देशः । नच त्वशब्दस्सम्बोध्यमात्रवचनः , ब्रह्मणस्सर्वशब्दवाच्यत्वस्मरणात् । तथाच ' एषत आत्मा सर्वान्तर ' इत्यत्र सामान्यतस्सिद्धस्य सर्वान्तरत्वस्य तआत्मे ति विशेषे उपसंहारवत्, इहापि 'सन्मूला' इत्यादिनोक्तस्य सर्वान् प्रत्यात्मत्वस्य विशेषोपसंहारार्थं तत्त्वमसीति सामानाधिकरण्यनिर्देशः ; श्वेतकेतुविशिष्टब्रह्मप्रतिपादने श्वेतकेतुशरीरकत्वस्या-

र्थात् सिद्धे । जीवस्य परमात्मशरीरत्वं तु श्रुतिस्मृतिशतसिद्धम् । शरीरलक्षणं तु जीवेश्वरैक्यभङ्गे द्रष्टव्यम् ।

इति वाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
अखण्डवाक्यार्थभङ्गो नाम

अष्टत्रिंशस्स्कन्धः ।



श्रीरस्तु ।

अथैकोनचत्वारिंशो वादः ।

श्रुतिकिरीटनिरूपणनिर्भरप्रसरयैव धियः परिशोधिताम् ।
सुविमलां पदवीमदवीयसीं भजत माधवभक्तिमयीमिमाम् ॥

भावरूपं यदज्ञानं ये जनाः परिचक्षते ।
तच्चिरे तत्तथाभूतं निश्चिन्वन्ति विपश्चितः ॥

एवं ह्यज्ञानमुपितत्त्वज्ञानैर्विज्ञातं - प्रत्यक्षानुमानागमैर्भावरूप

---

वादार्थं संगृह्णन् प्रामाणिकार्थपरिष्करणहेतुमप्याह भावरूप मिति । यदज्ञानम् — न ज्ञानाभावम्, अहमज्ञ इत्यत्र प्रतीयमानम् । यद्वा यदज्ञान मित्यत्राज्ञानशब्देनाहमज्ञ इत्यत्र प्रतीयमानमित्यर्थो विवक्षितः । श्रुतरीपिहित दृष्टित्वाद्भावत्वमजानन्तो भ्रान्त्या भावरूपमित्याचक्षते । तदि ति । ज्ञाना-भावरूपमज्ञानमित्यर्थः । तथाभूत मिति तथाशब्देन भावरूपपरामर्शिना वृत्तिविषये भावप्रधानेन भावरूपत्वमुच्यते । भवतिश्च प्राप्तिवाची, "भू प्राप्तावि" ति धातुपाठात् ; यथोक्तं प्रमाणभूत आचार्य इत्यत्र कैयटे — "वृत्तिविषये प्रमाणशब्दः प्रमाणत्वे वर्तते" इति, ततश्च तथात्वं भावरूपत्वं प्राप्त मित्यर्थः । भावलक्षणो रूप॰ — धर्मो यस्य तत् भावरूपम् — विद्यमान-मित्यर्थः । यद्यपि 'भावरूपं यदज्ञानमि' त्यत्र भावशब्देनाभावव्यावृत्तभावो गृह्यते, तथापि भावशब्दस्य सत्तामात्रपरत्वमप्यस्तीति तथाशब्देन विद्य-मानत्वपरामर्शो युज्यते । यद्यपि नायमर्थः प्रकृत॰, प्रकृतपरामर्शी च तच्छब्दः, तथापि प्रयुक्तशब्दोपस्थितियोग्यतामात्रात्तथाभूतमित्यनेन तत्परामर्शः । अज्ञानस्य भावत्वकल्पनायामज्ञानमेव हेतुरित्युक्तं भवति । तथाचाज्ञान मूलत्वात् तदुक्तेरनुपादेयतेति हृदयम् । अज्ञाने ति । अज्ञानशब्देनानादि-पापवासना गृह्यते, तस्य तत्त्वज्ञानविरोधित्वस्यानादिपापवासनादूषितेत्यादिना भगवता भाष्यकारेणाभिधानात् ; श्लोके भ्रान्तिहेतुतयोक्तत्वज्ञानाभावस्य दुष्कर्मैव हेतुरित्यनेनोक्तम् । प्रत्यक्षे ति । इदमर्थापत्तेरप्युपलक्षणम् ।

मज्ञानं प्रतीयते । तत्र प्रत्यक्षन्तावदहमज्ञो मामन्यञ्च न जाना मीत्यादिरूपं सर्वसम्मतम् । तत्किं भावरूपमज्ञानं विषयीकरोति उताभावरूपमिति विवेचनीयम् । न तावदभावरूपम्, अभावो हि प्रतियोगिनिरूपणाधीननिरूपण, ततश्च ज्ञानाभावप्रतीतिर्ज्ञान ग्रहणमन्तरेण नोपपद्यते, ज्ञानं विषयनिरूपणाधीननिरूपणमिति

---

प्रत्यक्षं तावदि ति । निरूप्यत इति शेष. । तदेव निरूपयति अहमज्ञ इति । रूप मित्यनन्तरं प्रत्यक्षमित्यनुपज्यते । अथवा– अहमज्ञो मामन्य च न जानामीत्यादिरूप प्रत्यक्ष तावत् सर्वसम्मतमित्यन्वय । भावविषयत्वाभावं विषयत्वविप्रतिपत्तावपि स्वरूपे न विप्रतिपत्तिरित्यभिप्रायेण तावदित्युक्तम् । ज्ञानाऽज्ञानवादेऽहमज्ञ इति मामिति च ब्रह्माज्ञानविषयम्, अन्यमित्येतदवस्था ज्ञानविषयम्, एतच्च त्वदुक्तार्थं न जानामि शास्त्रार्थं न जानामीत्यादेरप्युप लक्षणम् । एकाज्ञानवादे तु सर्वं तद्विषयमेव । मामन्य च न जानामीत्ये तदहमज्ञ इत्येतद्विवरणरूपं वा । नन्वहमज्ञ इति सामान्येन ज्ञानमसिद्ध मेवेत्यत्राह सर्वसम्मत मिति । अनुभवमपह्नुत कथानर्हत्वात्, सर्वन ममायमनुभवो नास्तीति सुशकत्वात्तात्र निवदितव्यमिति भाव । भावरूप मिति । ज्ञानाभावातिरिक्तमित्यर्थ । अभावत्वमपि भावरूपाज्ञानस्यास्त्येवेति पक्षे ज्ञानावस्थाविशेषातिरिक्तमित्यर्थ । अभावज्ञाने प्रतियोगिज्ञानस्यावश्य म्भावात् स्वप्रकाशवादे प्रतियोगिज्ञानस्यापि ज्ञानावश्यकत्वात् अनुव्यवसाय वादेपि *सामग्र्यासत्वेनानुव्यवसायस्यावर्जनीयत्वात् बाधाभावेन भ्रान्तिकल्पना* योगाच्च ज्ञानसामान्याभावप्रहरूपत्वमहमज्ञ इति प्रतीतेर्नोपपद्यत इत्याह अभावोहीति । भावान्तराभाववादेपि अभावत्वेन प्रतीतिदशाया प्रतियोगि निरूपणाधीननिरूपणत्वमस्त्येवेति भाव । न केवल प्रतियोगिज्ञानसत्वान् ज्ञानसामान्याभावग्रहासम्भव, किन्तु प्रतियोगिभूतज्ञानविषयीभूतार्थविषयकज्ञान सत्वाच्चेत्याह ज्ञानमि त्यादिना । यद्वा अस्तु प्रतियोगिभूतज्ञानज्ञानम्, अथापि न दोष, अहमज्ञ इति हि ज्ञानातिरिक्तघटाद्यर्थविषयकज्ञानाभावा

विषयेण सहैव गृह्यते, ततश्च यद्विषयस्य ज्ञानस्याभावो व्यवजि
हीर्षितस्तद्विषय ज्ञानं तदानीमेव सञ्जातमिति कथन्तदभाव

---

गृह्यते, ननु ज्ञानसामान्याभाव इत्याशङ्क्य, घटाद्यर्थविषयकज्ञानमप्यवर्जनीय
मेवेत्याह ज्ञान मिति । द्विक्षणमात्रानुवृत्तोपाध्यवच्छिन्नकाले सांदित्यनिय
मया विषयेण सह गृह्यत इत्युक्तम् । । विषयज्ञानस्य ज्ञानज्ञानकारणत्वा
दभावप्रतियोगिभूतज्ञानज्ञानाव्यवहितपूर्वसमये विषयज्ञानमस्त्येवेत्यर्थः । यद्वा सहैव
गृह्यत इति ज्ञानज्ञानस्यैवार्थविषयत्वं विवक्षितम् । ज्ञानज्ञानस्यैवार्थविषयत्वे
हेतु ज्ञानं विषये णि । यतो ज्ञानं विषयीकुर्वत् ज्ञानमर्थमपि विषयीकरोति अत
एव हि ज्ञानस्य विषयनिरूपणाधीननिरूपणत्वं युज्यते अन्यथा विषयनिरूपणाधीन
निरूपणत्वं कुतस्स्यादिति भावः । ज्ञानज्ञानात् प्रागर्थज्ञानसत्त्वेऽपि तस्य प्रतियोगि
ज्ञानव्यवहिततया अभावज्ञानकालेऽभावेनाभावग्रहणं स्यादिति शङ्कामपाकर्तुं
प्रतियोगिज्ञानस्यैवार्थविषयत्वमुक्तम् । नन्वर्थस्य प्रतियोगिज्ञानविषयत्वाभावेऽपि
ज्ञानाभावग्रहो न सम्भवत्येव, प्रत्यक्षस्य विषयजन्यत्वात्, प्रतियोगिज्ञान
जनकविषयज्ञानस्य च पूर्वं सत्त्वेन पूर्वं ज्ञानाभावाभावादिति चेन्न, — प्रतियोगि
ज्ञानस्य तृतीयक्षणे अभावग्रहणसम्भवात्, विषयज्ञानतृतीयक्षणोत्पन्नप्रतियोगि
ज्ञानादभावग्रहणसम्भवाच्च । नच विषयज्ञानद्वितीयक्षणोत्पन्नप्रतियोगिज्ञान
द्वितीयक्षण एवाहमज्ञ इति ज्ञानमित्यत्र किमपि मानमस्ति? कल्पने च
व्यवसायविषयत्वं यथोपपद्यते तथैव कल्पयितुमुचितम् । ननु ज्ञानापरोक्ष
स्यैव विषयनिरूपणाधीनता, ज्ञानं गुण इत्यादिशब्दात् अर्थेन विनापि
ज्ञानस्य प्रतीतेः, नचात्र ज्ञानज्ञानं प्रत्यक्षम्, किन्तु स्मरणमेव, अतो
नार्थज्ञानमपेक्षत इति चेन्न, — सप्रतियोगिकपदार्थप्रतियोगिकाभावप्रत्यक्षस्य प्रति
योगिविशिष्टप्रतियोगिज्ञानसाध्यत्वनियमात् । अतएव हि घटसंयोगो नास्ति
चन्दनेच्छा नास्ति घटद्वेषो नास्तीत्यादिरूपेणैव प्रत्यक्षं भवति । यद्विष
यस्येति । यदि स्वयं परिगृह्यते । अर्थविषयकज्ञानाभावो हि अहमज्ञ इति
प्रतीतेर्विषय इत्युक्तम्, तत्र च ज्ञाने कथं तदभावग्रह इत्यर्थः । एवं
ज्ञानाज्ञानयोर्विरोधमजानानः स्ववचनविरोधमपि कथं जानीयादित्युपालभते

प्रतीयेत । य॰ प्रतियोगिभूतज्ञानावच्छेदकत्वेन विषय यदा व्यवह्रियते तदैव तद्विषयज्ञानाभाव वदन् स्ववचनविरोधमपि न जानाति । ननु ज्ञानव्यक्तिभेदाददोष, निषिध्यमान ज्ञान मन्यत्तस्य निषेधप्रतियोगिनो निरूपणौपयिक ज्ञान चान्यादिति।

---

य प्रतियोगी ति । नन्वस्तु प्रतियोगिज्ञानम्, भवतुच तन्निरूपकार्थविषय ज्ञानच, तथापि तदानीं विद्यमानज्ञानातिरिक्तज्ञानाभाव एव गृह्यते, नच सामान्याकारेण प्रतियोगिविषयकस्य ज्ञानस्य तदाश्रयकिञ्चित्प्रतियोगिविशेषाभाव विषयत्वासम्भव, घटो भविष्यति घटो ध्वस्त इत्यादिप्रतीतेस्सामान्यत प्रति योगिविषयत्वेऽपि विशेषाभावविषयत्वदर्शनात्, नच प्रतियोगितावच्छेदक-प्रकारकज्ञानाभावे कथमभावज्ञानमिति वाच्यम्, उक्तस्थले व्यभिचारेण तस्याकार णत्वात्, तत्प्रकारकप्रतियोगिज्ञानस्य प्रतियोग्यंशे तत्प्रकारकाभावज्ञान प्रति हेतु स्यात्, ननु भविष्यतीति बुद्धि भाविकालसम्बन्धविषया, न तु प्रागभावविषया, ग न्धानाधारसमयानाधारत्वस्य प्रतियोगिजनकाभावत्वस्य वा तद्बुद्धिविषयत्वा योगादिति चेन्न, — घटो भविष्यतीति बुद्धिर्न भाविकालमात्रसम्बन्धविषया, विद्यमानघटेऽपि घटो भविष्यतीति बुद्ध्यापत्ते, इदानीं घटाभाववान् वेति सन्देहापत्तेश्च, ततश्च प्रागसत्त्वे सत्युत्तरकालसम्बन्धित्व विषय इति वक्त व्यम्, प्रागसत्त्वमेव च प्रागभाव, सत्ताभावत्वेन गृह्यते, ननु भविष्यतीति बुद्धे प्रागभावविषयत्वे पाकान्तरमय रक्तो भविष्यतीति प्रतीत्यनुपपत्ति, घटस्य तदा प्रागभावाभावात्, नच रक्तत्वप्रागभाव एव विषय, विशिष्ट प्रतियोगिकत्वानुभवविरोधादिति चेन्न, — श्यामो ध्वस्त इति वत् 'सविशेषणे हीति' व्यतिरेकत्वप्रागभावविषयत्वात्, न चवमेतेषु तन्तुषु पटो भविष्यतीत्याप्त वाक्यात् तत्तन्तुपटजनकत्वसंशयो निवर्तते, तत्प्रागभावविषयत्वे न स्यात्, प्रागभावमात्रज्ञाने तदयोगादिति चेन्न, प्रागसत्त्वे सत्युत्तरकालसत्त्व तद्विषय इत्युक्तत्वात्, तस्मात् भविष्यतीति बुद्धे प्रागभावविषयत्वात् तस्याश्च सामान्येन प्रतियोगिविषयायास्तदघटप्रागभावविषयत्वदर्शनात् अस्मद इति प्रतीतेर्विशेषविषयत्व सम्भवतीति शङ्कते नन्वि ति । अभावप्रत्यक्षस्य प्रति

नैवम्, ससर्गाभावस्य तज्जातीयसमस्तप्रतियोगिनिरूप्यत्वात्, इह भूतले घटो नास्तीतिवत्। ततश्च सर्वज्ञानप्रतियोगिको निषेध एकयापि ज्ञानव्यक्त्या विरुद्ध एव । नह्येकस्मिन् घटे विद्य

---

योगिनि भासमानधर्मावच्छिन्नयावत्प्रतियोगिकत्वविषयत्वनियमात्, अत्र च ज्ञानविशेषाभावस्य प्रतियोगिनि भासमानज्ञानत्वावच्छिन्नयावत्प्रतियोगिकत्वा भावेन न तस्याहमज्ञ इति प्रत्ययविषयतेत्यभिप्रायेण परिहरति नैव मिति । अयञ्च ससर्ग पदेन प्रतियोग्यादिप्रसङ्गो विवक्षित । तज्जातीये त्यनेन प्रति-योगिनि भासमानधर्मावच्छिन्नत्व विवक्षितम् । प्रतियोगिनिरूप्यत्वम्— प्रतियोगिविशिष्टतया भासमानत्वम्, तत्प्रतियोगिकत्वेन भासमानत्वमिति यावत् । निषेधाधिकरणे प्रतियोगितदवच्छेदका तरारोपपूर्वकप्रतीतिविषयाभावस्य प्रतियोगिनि भासमानधर्मावच्छिन्नयावत्प्रतियोगिकत्वेन भाननियमादित्यर्थ । प्रतीतिविषयाभावस्येत्यस्य प्रतीतेर्विशेषणत्वे तात्पर्यम्, तेन प्रतियोग्यारोप जन्यज्ञानविषयीभवदभाव प्रतियोगिनि भासमानधर्मावच्छिन्नयावत्प्रतियोगि कत्वेनैव भासत इत्यर्थप्रतीत्या प्रतियोग्यारोपजन्यज्ञानस्यैव प्रतियोगिनि भास मानधर्मावच्छिन्नयावत्प्रतियोगिकत्वविषयत्वलाभात् प्रतियोग्यारोपजन्यज्ञानस्य च प्रत्यक्षत्वत् अभावप्रत्यक्ष प्रतियोग्यशे स्वविषयीभवत्प्रकारावच्छिन्नयावत्प्रति योगिकत्वेनाभाव विषयीकरोतीति नियमादहमज्ञ इति प्रतीतेरभावविषयत्वे प्रतियोगिनि भासमानज्ञानत्वावच्छिन्नयावत्प्रतियोगिकत्वविषयत्वावश्यम्भावात् प्रतियोगिज्ञानातिरिक्तज्ञानाभावो नाहमज्ञ इति प्रतीतेर्विषय इत्युक्त भवति । नच घटो भविष्यतीति बुद्धौ व्यभिचार, तस्याप्रत्यक्षत्वात्, कारणसमव धाने सत्येव भविष्यतीति ज्ञानदर्शनात्, कारणसमवधानोन्नेयतया भवि ष्यतीति बुद्धेरप्रत्यक्षत्वात्। अतएव घटो ध्वस्त इति बुद्धावपि न व्यभि चार, कपालादिदर्शने सत्येव ध्वसप्रतीत्या तस्याप्यनुमेयत्वात् । यद्वा ससर्गा भावस्ये त्यस्य ससर्गारोपजन्यज्ञानविषयाभावस्येत्यर्थ । ज्ञानस्य विशेषणत्व विवक्षादि पूर्ववत् । यद्यप्यन्योन्याभावप्रत्यक्षमपि तादृशमेव, तथापि ससर्गा भावस्य प्रकृतत्वादेवमुक्तम् । इह वि ग्रहणात् प्रत्यक्ष एवेय व्याप्तिरभि प्रेतेति सूच्यते । अहमज्ञ इति प्रतीतेरेव विशेषाभावविषयत्वशङ्कापि सम्भ

मानेप्यघटं भूतलमिति व्यवहरन्ति । एतावन्तं कालं न किञ्चिदहमज्ञासिषमिति च प्रतीतिरपि न काञ्चिदपि तदानीं ज्ञानव्यक्तिं क्षमते ।

---

यति, नात्र तच्छङ्कासम्भवोपीत्यभिप्रायेणाह एतावन्त मिति । नचायमनुभवोऽसिद्ध इति वाच्यम्, सुप्तोत्थितस्य एतादृशपरामर्शस्यानुभवसिद्धत्वात् । अयच परामर्शः पूर्वानुभव विना न सम्भवति, सच्च काञ्चिदपि ज्ञान-ज्ञानव्यक्तिं न सहते । नक्षमत इति । स्वमूलभूतानुभवकाल इति शेषः । नन्वेवं भावरूपाज्ञानमपि कथमनुभूयते, तस्यापि विषयनिरूप्यत्वात्, विषय-भाने च तस्यासम्भवादिति वाच्यम्,— विषयस्याज्ञाततया नित्यसाक्ष्यनुभववेद्य-त्वेनाज्ञानस्य सुषुप्तावपि तेनैव विषयव्यावृत्तस्यैवानुभवात् । नच साक्षिणो नित्यत्वेन संस्काराजनकत्वात् कथं परामर्श इति वाच्यम्, अज्ञानाकारविद्यावृत्तेस्सुषुप्त्यवस्थाया विनाशात्तद्विशिष्टप्रकाशस्यापि नाशात्तदुपपत्तेः । नचैवं जागरण इवाहमज्ञो घट न जानामीति प्रत्ययप्रसङ्ग इति वाच्यम्, अभिव्यक्ताहङ्कारतादात्म्यापन्नसाक्षिण एव सविकल्परूपतया सुषुप्तौ च सविकल्पकापादकाहङ्काराभावेन तथाननुभवात् ।

यत्तु — अयं न सौषुप्तिकाज्ञानपरामर्शः, किन्त्वनुमानमिति; तन्न, - तन्न तावदहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वादित्यनुमानम्, अहमर्थमात्रपक्षीकारे जाग्रति तस्मिन् ज्ञानसत्त्वेनांशतो बाधात् । सुषुप्तिकालीनाहमर्थस्य पक्षत्वे सुषुप्तेर्निखिलज्ञानाभावरूपायाः पूर्वमसिद्धत्वात् । यत्किञ्चिज्ज्ञानाभावस्य साध्यत्वे नकिञ्चिदवेदिषमित्यनुभवासम्भवात् । निखिलज्ञानाभावस्य साध्यत्वे व्याप्तिग्रहाभावात् । निखिलज्ञानानामेकत्रैकदाप्यऽप्रसिद्धत्वेन व्यतिरेकव्याप्तेरपि दुर्ग्रहत्वात् । अवस्थाविशेषत्वं च यदि सुषुप्तित्वम्, तदा साध्याविशेषः, निखिलज्ञानाभावरूपत्वात् सुषुप्तेः । यदि जाग्रत्स्वप्नकालातिरिक्तकालत्वम्; तदा कतिपयज्ञानवज्जाग्रत्स्वप्नकालातिरिक्तकालत्वम् निखिलज्ञानाभाववत्त्वग्रहं विना दुर्विज्ञानम् । एतेन सामग्र्यभावेन ज्ञानाभावो ऽनुमीयत इति प्रत्युक्तम्, तत्रापि पक्षस्य दुर्निरूपत्वात् । सामग्र्यभावस्यापि कार्याभावो-

ननु कालभेदेन ज्ञानाज्ञानयोरविरोधः, नहि ज्ञानाभाव प्रतिपत्तिकाल एव ज्ञानाभावेन भवितव्यमिति नियमः; मैवम्, प्रत्यक्षज्ञानस्य वर्तमानग्राहित्वनियमात् । तथा च सूत्रितं भगवता जैमिनिना "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्ष

---

मेयत्वात् । नचेन्द्रियप्रसादेन तदुपरमानुमानात् सामग्र्यभावोऽन्यतीस्सिद्ध्यतीति वाच्यम्, बाह्येन्द्रियोपरमेपि स्वप्ने विषयज्ञानतत्सामग्र्योरभरनात् । शोभन स्वप्नदर्शनादपि मनःप्रसादस्य सत्त्वेनान्यथासिद्धेश्च । नापि तत्तुल्ययोगक्षेमा-रमादौ स्मर्यमाणेपि नियमेन अस्मर्यमाणत्वलिङ्गादनुमितिः, परमते सुषुप्ति-कालीनात्मनां ऽस्मर्यमाणत्वेन विशेषणासिद्धेः । जाग्रत्कालीने आत्मनि ज्ञानस्यास्मर्यमाणत्वासिद्धेश्च । सुषुप्तिकालीनतया अस्मर्यमाणत्व हेतुरिति चेन्न;-असिद्धेः, निखिलविषयज्ञानाभावस्यैव सुषुप्तित्वात् । वेद्यज्ञानवादे अननु भूतस्यापि सम्भवादप्रयोजकत्वात् । जाग्रति तादृशज्ञाने व्यभिचाराच्च । लिङ्गव्याप्त्याद्यनुसन्धानविलम्ब विनापि नावेदिषमिति परामर्शदर्शनात् । घन गर्जितादाविव सहेति तत्प्रतिसन्धानकल्पनेपि अनुमिनोमीत्यनुव्यवसायाभावात् । नचैवं सिद्धान्तेपि कथ सुषुप्तौ ज्ञानाभावनिश्चय इति वाच्यम्, न किं चिदवेदिषमिति परामर्शसिद्धसर्वविषयाज्ञानान्यथानुपपत्त्या तस्य कल्प्यत्वात् । अतएव रागाद्यभावानुमानमपि, तद्विषयज्ञानाभावस्यैव तदनुत्पत्तिव्याप्यत्वात् । नचैवमात्मादिगोचरेच्छाद्यभावो न सिद्ध्येत्, तज्ज्ञानस्य तदानीमपि सत्त्वा-दिति वाच्यम्, — सविकल्पकज्ञानस्यैव तद्धेतुतया तदभावादेव तदभावस्यापि सिद्धत्वात् । किञ्च सुषुप्तौ ज्ञानाभावोपि साक्षिणानुभवितु शक्यत इति । अह मज्ञ इति॰ प्रतीतेः प्राक्कालीनज्ञानसामान्याभावविषयत्वमस्तीति शङ्कते नन्वि ति । नही ति । ततश्चाभावज्ञानकाले प्रतियोगितन्निरूपकार्थज्ञानासत्त्वेपि न दोष इति भावः । मैवमि ति । पूर्ववृत्तित्वमात्रेण कारणत्वपक्षेपि प्रति योगितन्निरूपकार्थज्ञानव्यवधानान्न पूर्वकालीनज्ञानाभावस्य प्रत्यक्षत्वसम्भवः । सत्संप्रयोग इति । "चोदनालक्षणोऽर्थो धर्मः" इत्यत्र धर्मे चोदनैव प्रमाण मित्युक्तम्, तदनुपपन्नम्, प्रत्यक्षस्यापि तत्र सम्भवादित्याशङ्कयोच्यते —

मनिमित्तं विद्यमानोपलम्भनत्वादि " ति । यद्यपि योगीश्वराणां प्रत्यक्षमतीतानागते अपि गृह्णातीति शास्त्रबलादभ्युपगन्तव्यम् , तथाप्यस्मदादिप्रत्यक्षं वर्तमानग्राहीत्येव नियम । अस्तु तर्हि प्रत्यक्षेतरेण प्रमाणेनावर्तमानज्ञानेन ज्ञानाभावप्रतीति. , अस्थाप्समेतावन्तं कालं न किञ्चिदहमज्ञासिषमित्यादिषु कालविशेषस्यैव ज्ञानाभावस्याप्यतीतस्यानुमेयत्वोपपत्तेरिति चेत् ? तन्न, अहमज्ञो मामन्यं च न जानामीत्यत्र वर्तमानतयैवाज्ञानप्रतीते । किमिद जानासीति पृष्टश्च कश्चिन्न जानामीत्युत्तरं दिशति । अत एवात्र प्रमाणान्तरजन्यज्ञानेनापि विरोध. स्थित एव ।

---

" सत्सम्प्रयोग " इति । इन्द्रियाणा सता अर्थेन सम्प्रयोगे सति इन्द्रियैः पुरुषस्य बुद्धिर्जायते, अतो विषयसन्निकर्षे सत्येवेन्द्रियाणा( बुद्धिजनकत्वात् सन्निकर्षस्य च विषयाभावेऽसिद्धेः विद्यमानविषयकज्ञानजनकतया तदानीम विद्यमानविषयविषयकज्ञानजननासामर्थ्यान् तत्साधनत्वमपि प्रत्यक्ष न गृहीतु शक्नोतीति सूत्रार्थः । यद्यपीत्यादि । तत्र इन्द्रियसंयोगानपेक्षत्वात्स विद्यमानोपलम्भनत्वमिति भावः । अहमज्ञ इति प्रतीति परोक्षरूपास्तु, ततश्च कालान्तरीयज्ञानाभावविषयत्वे नानुपपत्तिरिति शङ्कते अस्त्विति । अवर्तमानज्ञानेन -- अवर्तमानविषयत्वयोग्येन । ज्ञानाभावप्रतीतिरिति । ज्ञानाभावविषयीकरणमित्यर्थः । वर्तमानतया प्रतीतेर्न पूर्वकालीनाभावविषयत्व मित्याह तन्नेति । यद्वा अहमज्ञ इति प्रतीतेर्वर्तमानत्वविषयत्वात् प्रत्यक्षत्व मेवेत्याह तन्नेति । यद्यपि शब्दादनुमानाच्च वर्तमानत्वबोधोऽस्त्येव , तथापीह वर्तमानत्वबोधकशब्दाभावात् तत्साधकलिङ्गेन व्याप्तेरग्रहणाच्च प्रत्यक्षेण विना न वर्तमानत्वविषयतामिति भावः । वर्तमानत्वविषये विप्रतिपन्न प्रत्याह किमिदमिति । वर्तमानविषयप्रश्नोत्तराभ्यां तादृशमेव ज्ञानमनुमीयत इति भाव. । पूर्वं प्रतियोगिभूतज्ञानविषयार्थविषयस्मरणेन विरोध उक्त, इदानीं तादृशार्थविषयकानुभवेनापि विरोध इत्याह अतएवेति । अत्र प्रमाणान्तरपदेन प्रत्यक्षस्य विशेषणम् । एतेनानुभवाभावः प्रमा

एतेन ज्ञानाभावगोचरज्ञानेनापि विरोधस्सिद्धः । नहि ज्ञानमुदय मानं तदानीमेव सर्वज्ञानाभावं प्रकाशयितुमलम्, स्वस्यापि ज्ञानत्वाविशेषात्, विद्यमानत्वाच्च । एवमाश्रयज्ञानेनापि विरोधः, नहि यत्किञ्चिदाश्रयप्रतीतिमन्तरेणाभावप्रतिपत्तिमनुमन्यामहे । उक्तं चाभियुक्तैः — "लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते" इति । ननु सामान्यत आश्रयप्रतियोग्यादिज्ञानमुपजीव्य विशेषत स्तत्तद्विषयं ज्ञानं निषिध्यत इति न कश्चिद्विरोध इति; तदपि मन्दम्,

---

ज्ञानाभावो वा विषय इति यदुक्तम् । एतेने त्येतद्विवृणोति नहीति । एतच्च स्वसमकालस्वेतराहित्यमतेनोक्तम् । एवमाश्रये ति । इदञ्च प्रत्यक्षाभिप्रायेणोक्तम्, तस्यैवाधिकरणज्ञानसापेक्षत्वनियमात् । नन्वहमद्य शास्त्रार्थं न जानामि त्वदुक्तार्थं न जानामीत्यादिप्रतीतीनां ज्ञानत्वशास्त्रार्थविषयत्वत्वदुक्तार्थविषयत्वावच्छिन्नप्रतियोगिताकाभावविषयत्वं सिद्धमेव, अभावप्रत्यक्षं प्रतियोगिनि यद्धर्मप्रकारकं तद्धर्मावच्छिन्नाभावप्रतियोगिकत्वविषयमिति यदुक्तं तत्तथैव, किन्त्वदमभावज्ञानं विशेषाकारेणैव प्रतियोग्यादिकं विषयीकरोति, तादृशधर्मावच्छिन्नाभावप्रतियोगिकत्वं च विषयीकरोति, तेन तदनुभूतप्रतियोग्यादिज्ञानन्तु ज्ञानत्वशास्त्रार्थविषयत्वत्वदुक्तार्थविषयत्वादिसामान्यप्रकारकमेव, स एव चान्वयव्यतिरेकाभ्यां विशेषनिषेधहेतुः, नचातिप्रसङ्गः, सामान्यविशेषभावस्य नियामकत्वादिति शङ्कते नन्विति । आश्रये सामान्यमहन्त्वं विशेषो देशातिरिक्तत्वादि, आश्रय सामान्यविशेषज्ञानतदभावयोः प्रतिपादनमहमद्य इति ज्ञानविषयैव, इतरत्र शास्त्रार्थं न जानामीत्यादावभावज्ञानाभावप्रतीतेः, प्रतियोगिभूतज्ञाने सामान्यधर्मं ज्ञानत्वशास्त्रार्थविषयकत्वत्वदुक्तार्थविषयकत्वादि, विशेषधर्मश्च धर्मत्वप्रकारकत्वादिः आदिशब्देनावच्छेदकाभूतविषयो गृह्यते, तत्रच सामान्यं वस्तुत्वशास्त्रार्थत्वत्वदुक्तार्थत्वादि, विशेषश्च धर्मत्वादित्वादि । मन्दमिति । अभावज्ञानस्य विशेषविषयत्वे वक्ष्यमाणागतिरिति का भा स्यात्, सन्तु प्रतीति

निषिद्ध्यमानस्य विशेषज्ञानस्य विषयविशेषाधीन-विशेषत्वेन तत्प्रकाशमन्तरेण प्रकाशायोगात्, तत्प्रकाशे वा विशेषज्ञानस्यापि सिद्धेस्तन्निषेधायोगेन व्याघातस्य स्थितत्वादिति । नच भावरूपे ऽप्यज्ञाने विरोधप्रसङ्गः, भावरूपत्वादेव

---

विरुद्धेति भावः । विषयविशेषप्रकाशमन्तरेण कथं प्रकाशायोगः, विशेषान्तरस्यापि सम्भवादित्यत्राह विषयविशेषाधीनविशेषत्वेनेति । अर्थेनैव विशेषो हि धियामिति भावः । यद्यपि विषयाधीनविशेषमन्तरेण प्रत्यक्षत्वादिविशेषाश्च ज्ञाने सन्त्येव, यद्यपि च प्रत्यक्षाभाव एव विषयं इति वक्तुं शक्यते, प्रत्यक्षं प्रति विषयस्य पूर्ववर्त्तित्वेनैव कारणत्वपक्षे अभावप्रत्यक्षेऽपि न विरोधः, तथापि चन्द्रं न जानामीत्यत्र तदपि न सम्भवत्येव, चन्द्रस्य प्रत्यक्षेण ज्ञातत्वात्, नैवं तत्र देशविशेषस्थत्वं न ज्ञातमिति वाच्यम्, — तस्यापि प्रत्यक्षतो ज्ञातत्वात्, प्रकृष्टप्रकाशत्वस्य च प्रत्यक्षतो ज्ञातत्वात् न तज्ज्ञानाभावोऽपि विषयः, चन्द्र—पदवाच्यत्वमपि चन्द्रश्चन्द्रपदवाच्य इति ज्ञातमेव, अथ चन्द्रपदवाच्य इत्यज्ञानं तु तत्र चन्द्रत्वाज्ञानप्रयुक्तमेव वाच्यम्, तच्च तत्प्रत्यक्षवर्तनात् भावरूपाज्ञानमेव, तच्च तदा प्रत्यक्षस्य सत्तानवधारणत्वात् सतो निवर्त्तते; प्रकृष्टप्रकाशश्चन्द्र इत्युपदेशसहकृतप्रत्यक्षेण तु सत्तावधारणात्त्वा निवर्त्तते । यदुक्तं सामान्येन प्रतियोगिज्ञानमेव विशेषेणाभावज्ञाने कारणम्, सामान्यविशेषभावश्च कार्यकारणभावे नियामक इति, तन्न, प्रमेयत्वेन घटज्ञाने घटो नास्तीति प्रतीत्यापत्तेः, नचेष्टापत्तिः, अनुभवविरोधात् । ननु भावरूपाज्ञानमपि प्रतियोगिनिरूपणाधीननिरूपणमेव, तस्यापि विरोधित्वेन प्रतीतेर्वाच्यत्वात्, अन्यथा तस्य ज्ञानविरोधाऽप्रामाणिकत्वस्यात्, अज्ञानज्ञाने सत्यपि ज्ञानज्ञानप्रसङ्गश्च, ततश्च प्रतियोग्यादिज्ञानव्याघातस्तुल्य एवेत्याशङ्क्याह नचेति । भावरूपत्वादेवेति । अभावस्य हि प्रतियोगिनिरूपणाधीनप्रत्यक्षविषयत्वनियमः, भावस्य तु क्वचिद्विरोधित्वेन ज्ञानस्थले प्रतियोगिज्ञानापेक्षायामपि न प्रत्यक्षमात्रे तदपेक्षा, विरोधित्वं विना स्वरूपेणापि तत्प्रत्यक्षसम्भवादित्यर्थः । यद्यपि भावत्वात् स्वरूपेणापि निरूपणं सम्भवति,

स्वरूपेण निरूपयितुं शक्यत्वात् । अस्ति च स्वरूपेणैव प्रतीतिः मुग्धोऽस्मि मूढोऽस्मीत्यादिका । तस्मादहमज्ञ इत्यत्रापि तदेव

अथाप्यज्ञानस्य विरोधित्वेनैव भासमानत्वात् प्रतियोगिज्ञानापेक्षा स्यादित्यत्राह अस्तिचेति । चकारो भिन्नक्रम, स्वरूपेणैव प्रतीतिश्चास्तीति योजना । विरुद्धत्वेन प्रतीतिप्रकारेण समुच्चीयते । अनच स्वरूपेण निरूपयितु शक्यत्वादित्यनाज्ञानस्य विषयावच्छेदश्च विवक्षितो, ततश्च ज्ञानवदज्ञानस्यापि सविषयत्वात् विषय ज्ञान इव साक्षादेवाज्ञाननिरूपक, ननु प्रतियोगिभूतज्ञानावच्छेदकतयेति भाव । अस्तिच स्वादिना ज्ञानत्वेन प्रतीते रुदाहरण दर्शितम्, विषयानवच्छिन्नाज्ञानप्रतीतिस्तु त्वदुक्तमर्थं न जानामीत्यादिरूपा प्रसिद्धेति भाव । अस्तिचेत्यनेन विषयावच्छिन्नाज्ञानप्रतीतिरेव योदाह्रियते, तदा मुग्धोऽस्मीत्यत्र इव मुग्धोऽस्मीत्यादिप्रतीतौ विवक्षिता । यद्वा वाक्यद्वयेऽपि स्वरूपशब्द अज्ञानत्वपर, मुग्धोऽस्मीत्यादावपि इहेति न विवक्षितम् । ननु अहमज्ञ इत्यादौ क्वचित् स्वरूपेणैव प्रतीति, त्वदुक्तमर्थं न जानामीत्यादौ तु विरोधित्वेन प्रतीतेर्व्याघात एवेति चेत् ? तत्रापि ज्ञानस्य विषयावच्छेद अज्ञानस्य भासते, ननु विरोधित्वम् । ननु विरोधस्याप्रतीतावपि वस्तुतो विरोधोऽस्त्येव, अतस्तदवच्छेदकविषयज्ञाने सति कथं स्यादिति चेन्न, — प्रत्यक्षप्रमाणज्ञानेनैव तस्य विरोधात् । नचैव विरोधभानपक्षेपि प्रत्यक्षविरोधित्व भासत इति वक्तु शक्यम्, न जानामीत्यत्र प्रत्यक्षत्वाप्रतीत्या तदवच्छिन्नाविरोधाप्रतीते, ज्ञानत्वावच्छिन्नविरोधविषयत्वस्य वक्तुमशक्यत्वात् । नच विरोधाप्रतीतौ तस्या प्रामाणिकत्वप्रसङ्ग, ज्ञानान्तरेण तत्प्रतीतिसम्भवात् । ननु तदपि ज्ञान पूर्वमेव विरोधात् कथं ज्ञानविरोधित्वमज्ञाने गृह्णीयादिति चेन्न, — ज्ञानदशायां ज्ञानाभावस्य प्रत्यक्षत्वेन तत्र ज्ञानाभावव्याप्तिग्रहसम्भवात्, तदनन्तरमज्ञाने ज्ञानव्यापकाभावप्रतियोगित्वेन ज्ञानाभावव्याप्यत्वानुमानसम्भवाच्च । व्यतिरेकसहचारेणान्वयव्याप्तिग्रहपक्षे ज्ञानाभावाभावात्मकज्ञानाज्ञानाभावयोस्सहचारग्रहणेन ज्ञानाभावाज्ञानयो व्याप्तिग्रहणसम्भवाच्च । एव विरोधप्रतीतिरेव अस्तिच स्वरूपेणैव प्रतीति रिति चकारेण सूच्यते । नचाज्ञानज्ञानेपि

भावरूपमज्ञानं प्रतीयते। न च वाच्यं नित्यसर्वगतसाक्षिसन्निधाने कथं ज्ञाताज्ञातविभाग इति, ज्ञाततयाऽज्ञाततया वा सर्वस्य साक्षिचैतन्यविषयत्वात्। इदमहं जानामीत्यत्र ज्ञानावच्छेदकतया, इदं न जानामीत्यत्र त्वज्ञानावच्छेदकतयेति विशेषः। न च तत्प्रकाशमात्रेणाज्ञाननिवृत्तिप्रसङ्गः, साक्षिप्रकाश्यस्याज्ञानगोचरभ्रान्तित्वेन

---

ज्ञानग्रहणप्रसङ्गः, यथान्यत्र करादिज्ञानस्य स्थाणुत्वाभावव्याप्यत्वलक्षणविरोधविषयतया स्थाणुत्वादिज्ञानप्रतिबन्धकत्वेऽपि तादृशविरोधाविषयमपि स्थाणुत्वाभावज्ञानमभावत्वविषयत्वेनैव प्रतिबन्धकम्, यथा च तदुभयाविषयत्वाभावेऽपि स्थाणुज्ञानं स्थाणुत्वविषयतयैव तदभावज्ञानं प्रति प्रतिबन्धकम्, तथेहापि फलबलात् स्वरूपेणाज्ञानज्ञानमपि ज्ञानभानप्रतिबन्धकमस्तु। ननु सर्वस्य नित्यसर्वगतसाक्षिवेद्यत्वात् अज्ञानासम्भवात् कथमज्ञानविषयतेत्याशङ्क्याह नचे ति। साक्षिप्रकाशमात्रस्याज्ञानाविरोधित्वात्र दोष इत्याह ज्ञाततयेत्या दि। ज्ञाततयाऽज्ञाततयेत्यर्थः। चक्षुरादिजन्यं घट इत्यादिज्ञानमपि ज्ञातत्वविषयमेव, घटनिष्ठवृत्त्यादिविषयत्वस्य तदभिव्यक्तसाक्षिणा विषयीकरणात्, अन्यथा सर्वो ज्ञात इति व्यवहारायोगादिति भावः। ज्ञाततया विषयत्वं च बाह्यपदार्थं प्रमाणव्यवधानमपेक्ष्य, सुखादौ त्वनावृतसाक्ष्यध्यासादेव, शुक्तिरूप्यादावपि इदमाकारवृत्तिव्यवधानात् व्यभिचारः, तस्याध्यासरवाद्वा न तदाकारप्रमाणापेक्षा, वस्तुशब्देनाज्ञातमेवोच्यते, तेनाज्ञानविषयस्यैव ज्ञाततया विषयत्वे प्रमाणव्यवधानापेक्षा, तेनाज्ञानविषये न सुखादौ व्यभिचारः। लाघवेन प्रकाशमात्रस्यैवाज्ञाननिवर्तकतया साक्षिप्रकाशेनाप्यज्ञानं विरुध्यत एवेत्यत आह नचे ति। साक्षिप्रकाशस्याज्ञाननिवर्तकत्वाभावेऽनुमानमाह साक्षिप्रकाशस्ये ति। इदं पक्षपरम्। अज्ञानविषयविषयकापरोक्षवृत्त्यनभिव्यक्तान्तःकरणावच्छिन्नचैतन्यस्येत्यर्थः। साक्षिमात्रपरत्वेऽपरोक्षवृत्त्यवच्छिन्नचैतन्यस्यापि साक्षिरूपतया तस्यापि पक्षत्वेऽशतो बाधापत्तेः। अज्ञानगोचरभ्रान्तित्वेने ति हेतुर्निर्देशः। अत्र च हेतुद्वयं विवक्षितम् — अज्ञानगोचरत्वादित्येको हेतुः, भ्रान्तित्वादित्यपरः। अत्र प्रमाणज्ञानभिन्नत्वं हेतुतया विवक्षितम्, तेन शुक्तिज्ञान

तन्निवर्तकत्वायोगात् । यथा इदं रजतमिति भ्रान्तेरिदंप्रकाशो न निवर्तकः तद्वदत्रापि अज्ञानावच्छेदकविषयप्रकाशः । प्रमाणभूतज्ञानोदये त्वज्ञाननिवृत्तिः । नच ब्रह्मस्वरूपप्रकाशस्य अज्ञानविरोधित्वम्, तस्य साक्षित्वावस्थायां तद्विषयत्वेन तदविरोधित्वात् । स्वरूपमात्रप्रकाशदशायामप्यज्ञानाभावादेव तन्निवर्तनस्यानपेक्षितत्वात् । नच ब्रह्मविषयज्ञाने सति तदज्ञानाभावः, तद्विषयज्ञानाभावे तु तदवच्छिन्नाज्ञानप्रकाशानुपपत्तिरिति वाच्यम् — स्वप्रकाशतया स्वविषयज्ञानान्तरमन्तरेणापि तदवच्छेदकस्योपपत्तेः ।

---

शुक्त्यज्ञाननिवर्तकः व्यावहारिकविषयतया भ्रान्तिकाले न व्यभिचारः । यदि साक्षी अज्ञानावच्छेदकविषयप्रकाशः स्यात् तदा तद्विषयाज्ञाननिवर्तकः स्यादित्यनाशयोत्तरत्व दर्शयति यथेति । यथा भ्रान्तिसमानविषयत्वेऽपि इदंप्रकाशो भ्रान्तिं न निवर्तयति तथा अज्ञानसमानविषयोऽपि साक्षिप्रकाशः अज्ञानं न निवर्तयति, भ्रान्त्यज्ञानयोस्तु ज्ञानविरोधित्वस्याविशेषेण एकस्य समानप्रकाशमात्रनिवर्त्यता इतरस्य नेति वैषम्यायोगादिति भावः । समानविषयकज्ञानस्याज्ञाननिवर्तकत्वं नास्तीति त्वयोक्तम्, भिन्नविषयस्य तु निवर्तकत्वेतिप्रसङ्गः, ततश्चाज्ञाननिवर्तकमेव दुर्लभमित्यत आह प्रमाणभूत इति । विषयप्रकाशः एवान्तःकरणवृत्तिप्रतिबिम्बिततया प्रमाणभावमनुभवन्नज्ञानं निवर्तयतीत्युक्तम् । ननु भवत्पक्षे साक्षिभास्यत्वात् साक्षी तदनिवर्तकः, शुद्धचैतन्यं तु स्वरूपमात्रप्रकाशत्वात् ब्रह्माज्ञानं निवर्तयेदित्याशङ्क्याह नचेति । किं ब्रह्मप्रकाशस्य साक्षित्वावस्थायां निवर्तकत्वम्, उत तदुत्तीर्णावस्थायामिति विकल्प्याद्यं दूषयति तस्य साक्षित्वावस्थायामिति । द्वितीयं दूषयति स्वरूपेति । मुक्तिदशायामित्यर्थः । अस्तु प्रमाणज्ञानस्यैवाज्ञाननिवर्तकत्वम्, माभूत् स्वरूपप्रकाशस्य निवर्तकत्वम्, तथापि तत्प्रमाणज्ञानमिदं यद्यस्ति तदा निवर्तेतैवाज्ञानम्, नचेत् तदवच्छिन्नाज्ञानप्रतीतिरेव न स्यादित्यत आह नचेति । तदवच्छेदकत्वम् — अज्ञानविषयस्वरूप

तदवच्छेदकज्ञान तद्विरोधित्वे मदन्यदज्ञान ग्रहणानुपपत्तिप्रसङ्गात्। एवं बाह्यविषयेऽपि प्रमाणोदयात् प्रागज्ञानावच्छेदकतया साक्षिणैव तत्तद्विषयप्रकाशो न विरुद्धः। अतस्सिद्धं भावरूपमज्ञानं प्रत्यक्षसिद्धमिति॥

---

प्रकाशोऽप्यज्ञानव्यावर्तकतया स्फुरणम्। प्रमाणोऽज्ञानावच्छेदकत्वेन प्रतीतेश्च न तत्प्रकाशस्याज्ञानविरोधित्वम्, अन्यथा तत्राप्यगतेरित्याह तदवच्छेदके ति। प्रमाज्ञान उक्तं विरोधमितराज्ञानेऽप्यतिदिशति एवंबाह्ये ति। ननु स्वरूपेणैव प्रतीयते न तु ज्ञानविरोधितये ति यदुक्तम्, तन्नोपपद्यते; अज्ञानज्ञाने सत्यपि ज्ञानज्ञानप्रसङ्गात्; लोके ह्यभावज्ञानादेरेव विरोधित्वं दृष्टम्, प्रतिबन्धकान्तरकल्पने गौरवात्; किञ्चाहमज्ञ इति प्रतीत्या अहमर्थस्याज्ञानाश्रयत्वं प्रतीयते, तथाऽज्ञानस्य भावरूपत्वे नोपपद्यते, तस्य शुद्धचिदाश्रयत्वाङ्गीकारात्; त्वदुक्तमर्थं न जानामीति च नोपपद्यते, जडावारकाज्ञानाभावात्; किञ्च सुखं न जानामि शुक्तिरूप्यं न जानामीत्यादिप्रतीतेरपि भाव्यज्ञानविषयत्वप्रसङ्गः; किञ्च परोक्षवृत्तेरज्ञाननिवर्तकत्वमस्ति वा न वा? निवर्तकत्वाभावे परोक्षतो ज्ञातेऽपि न जानामीत्यनुभवप्रसङ्गः; निवर्तकत्वे अविद्याविषयवृत्त्याऽविद्याविषयस्यापि विषयीकरणादविद्या निवर्तेत; अभावत्वस्यानुभवसिद्धत्वाच्च न भावत्वमितीमाः शङ्काः परिहरन्नाह अतस्सिद्धमि ति।

अयम्भावः — न तावत् प्रागभावो विषयः, तस्य सामग्रीकार्यानुमेयतयाऽतीन्द्रियत्वात्; विशेषज्ञानेऽपि ज्ञानव्यक्त्यन्तरप्रागभावमादाय तथानुभवप्रसङ्गात्; यस्मिन् विशेषे कस्यचिदतः परं ज्ञानं न भविष्यति तत्र तस्य न जानामीत्यनुभवाभावप्रसङ्गात्; तत्र ज्ञानात्यन्ताभावविषयत्वे च तस्मिन्मात्रस्य ततः परं ज्ञानोत्पत्तिसम्भवे प्रागभावविषयत्वायोगात्; नापि ध्वंसो विषयः, तस्यापि कार्यानुमेयतयातीन्द्रियत्वात्, ज्ञाने सत्यपि व्यक्त्यन्तरध्वंसमादाय तथाऽनुभवप्रसङ्गाच्च; नाप्यत्यन्ताभावो विषयः, पूर्वोक्तपक्षोदितदोषापातात्, आत्मनि ज्ञानसामान्याभावस्यासम्भवाच्च; यस्येतः परं ज्ञानं भविष्यति तस्यात्यन्ताभावासम्भवात्; पुरुषान्तरीयज्ञानात्यन्ताभावविषयत्वे ईश्वरस्य ज्ञानिनां

प्यज्ञत्वप्रसङ्गात् । अभावविषयत्वे घटो न जानातीति प्रयोगस्यासाधुत्व प्रसङ्गात्; ज्ञानेनाज्ञानं निवृत्तमिति लौकिकानुभवेन "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" इति भगवद्वचनेन च प्रतीतज्ञाननिवर्त्यत्वस्याभावे असम्भवाच्च । एवमभावविषयत्वेऽनुपपत्ते भावत्वस्यावश्यकत्वात् प्रतिबन्धकान्तर कल्पनमपि न दोषः । अस्तु वा विरोधित्वेन भावरूपाज्ञानप्रतीतिः; नचात्रापि प्रतियोग्यादिज्ञानकालीनतया ज्ञानसामान्यविरोधित्वानुभवासम्भवः, वस्तुतो परोक्षवृत्त्यनुगतप्रकाशस्यैव सर्ववृत्त्यधिष्ठानतया तत्र ज्ञानत्वबुद्धिप्रयोजकज्ञान सामान्यभूतस्य निवर्तकतयाज्ञानसामान्यविरोधित्वोपपत्तेः । नच विशेषानुगतस्यैव सामान्यतो निवर्तकत्वकल्पने मानाभावः, अपरोक्षवृत्त्यन्वयव्यतिरेकयोः न जानामीति ज्ञानसामान्यविरोधित्वानुभवस्य च मानत्वात्; अपरोक्षवृत्तिश्चाविद्यानिवृत्तिप्रतिबन्धकावरणनिवृत्तावुपयुज्यते । नच साक्षादेव वृत्तेरज्ञाननिवृत्तावुपयुज्यते, जडत्वेन प्रकाशात्मकचैतन्येनानपेक्षितत्वात् । अहमज्ञ इत्यादिप्रतीतिश्चाज्ञानाश्रयचिदेकत्वाध्यासादुपपद्यते । जडावारकाज्ञानाभावेऽप्यज्ञानावृतचैतन्याभेदाध्यासात् घटं न जानामीत्यादिप्रतीतिश्चोपपद्यते । सुखं न जानामीत्यादिप्रतीतिस्तु स्वीयविद्यमानसुखादौ विशेषतोऽनुभवनियमेनासिद्धैव, परसुखे त्वज्ञानमिष्टमेव । अतीतादिरूपस्याप्यव्याकृतात्मना स्थितस्यावृतचैतन्य एवाध्यासात्तदज्ञानमपीष्टम् । परोक्षवृत्तिश्च नाज्ञाननिवर्तिका, तथाहि — अशोकत्वं नाम काचिद्वृक्षत्वव्याप्या जातिः तद्वानशोकपदार्थ इति व्युत्पत्तिमतोऽस्मिन्वने अशोकोऽस्तीत्याप्तवाक्याद्वनेऽशोकत्वविशिष्टवृक्षसंसर्गविषयसत्तानिश्चयरूपं ज्ञानं जायते, वनाशोकसंसर्गे संशयाद्यभावात्, ततो वनं गतस्य तस्य अशोकं न जानामीति अस्मिन्नशोकत्वमस्ति नवेत्यनुभूयमानावज्ञानसंशयौ परोक्षज्ञानस्याविद्यानिवर्तकत्वेऽनुपपन्नौ भवेताम्, ततः परोक्षज्ञानं सत्तानिश्चयरूपमप्यविद्यानिवृत्त्ययोग्यम् । नचानाशोकस्वरूपे नाज्ञानं नवा संशयः, किन्तु तस्य देशविशेषस्थत्वे इति वाच्यम्, — देशविशेषतत्सम्बन्धयोरपि प्रत्यक्षेण निश्चितत्वात् । अशोकत्वाकारेण देशविशेषस्थत्वानिश्चयस्य तस्मिन्नशोकत्वतद्वैशिष्ट्याज्ञाननिवृत्त्यसम्भवात् । नहि माहिष्मत्यां देवदत्ते प्रत्यक्षेण निर्णीते पाटलीपुत्रे तस्मिन् दृष्टे देवदत्तो-

ऽत्रास्ति नवेति संशयो भवति । अविद्यानिवृत्तिरूपविशेषं विना देवदत्तप्रत्यक्षाशोकत्वपरोक्षनिश्चययोस्तत्त्वानिश्चयरूपत्वे विशेषाभावात् । अतएव वृक्षविशेषेऽशोकत्वसंसर्गः सन्दिह्यत इति परास्तम्, तस्यैव वाक्यजन्यप्रमाविषयत्वात् । नन्वाप्तवाक्यादशोकत्वस्य वृक्षत्वेनैव सामानाधिकरण्यं निश्चितम्, नत्वेतद्वृक्षत्वेनेति चेत्?—न, सामानाधिकरण्यं नाम एकाधिकरणकत्वम्, तच्चैक. प्रत्यक्षतो निश्चितैतद्वृक्षत्वाधिकरणमेव, तथाच रूपवत्त्वेन चक्षुषा दृष्टे घटे त्वचा घटत्वसामानाधिकरण्येन स्पर्शावगतौ यथा तयो रूपस्पर्शयोर्न सामानाधिकरण्यसन्देहः एवमत्रापि स्वरूपाज्ञानाभावे अशोकत्वे तद्वृक्षत्वयोरपि सन्देहो न स्यात् । ननु परोक्षज्ञानमात्रस्याज्ञानानिवर्तकत्वे अयमशोक इत्युपदेशाजन्यज्ञानादपि तदनिवृत्तिस्स्यात्? न, तस्य दशमस्त्वमसीति वाक्यवदिन्द्रियसन्निकृष्टतया प्रमात्रव्यवहितविषयत्वेनापरोक्षजनकत्वात् । इन्द्रियसन्निकृष्टे तत्रैवाशोके अस्मिन्वने अशोकोऽस्तीत्याप्तवाक्यादपि प्रयोक्तुराप्तत्वान्यथानुपपत्त्या यद्यप्यपरोक्षं जायते, तथापीन्द्रियसन्निकृष्टस्य यस्य कस्यचिदशोकत्वेपि तत्प्रयोक्तुराप्तत्वसम्भावनया तदुपदेशस्यान्यथापि प्रामाण्यशङ्कास्कन्दितत्वात् सन्निकृष्टविषये तज्जन्यज्ञानमपरोक्षमपि सत्तानवधारणमेव, दूरस्थस्य तु वस्तुनस्तद्विषयपरोक्षज्ञानोत्पत्तिसमये वर्णितशङ्कानवतारात् तत्तत्र सत्तानिश्चयरूपमेवेति परोक्षज्ञानस्य व्यभिचारान्नाविद्यानिवर्तकता । किञ्च समानविषययोरपि ज्ञानाज्ञानयोर्व्यधिकरणत्वे निवर्त्यनिवर्तकभावानुपपत्तेस्तन्निवर्तकत्वे तत्सामानाधिकरण्यमावश्यकम्, परोक्षवृत्तेश्च निर्गमनाभावेन स्वविषयावच्छिन्नचैतन्यावारकाज्ञानेन सामानाधिकरण्यानुपपत्तेस्तस्य निवर्तकत्वमनुपपन्नम् । परोक्षस्याप्यविद्यानिवर्तकत्वे शाब्दापरोक्षवादे यत्नान्तरेण ब्रह्मसाक्षात्काराभ्युपगमो व्यर्थस्स्यात् । किञ्च अभिव्यक्त विषयावच्छिन्नचैतन्य फलम्, अभिव्यक्तिश्चाविद्यानिवृत्तिरेव, ततश्चापरोक्षार्थ इव परोक्षेप्यविद्यानिवृत्तिरस्ति चेत्तदापि स्पष्टमेवावभासेत, विषयावच्छिन्नस्फुरणस्यैव स्पष्टतारूपत्वात्, ननु घटस्य स्पष्टता अपरोक्षज्ञानविषयत्वमेव, ज्ञानस्यात्मनिष्ठत्वात्तदतिरिक्तविषयताया अनङ्गीकारात्; नचेन्द्रियसन्निकृष्टस्य तत्, अन्यथा रस्यघटेऽपि चाक्षुषात् ज्ञायमाने इन्द्रियसन्निकृष्टे स्पष्टताया अदर्शनात् ;

तस्यातीन्द्रियत्वाच्च। किञ्च परोक्षज्ञानस्याविद्यानिवर्तकत्वे चक्षुषा दृष्टघटादि व्यक्तौ त्वगिन्द्रियेणानुमाननिर्णीतेर्थे शब्देन जिज्ञासाभाव इव शब्दाद्यव- गतेपि श्रीवेङ्कटाचलेशलीलाकमनीयविग्रहादौ प्रत्यक्षेण जिज्ञासाभावस्स्यात्, अज्ञाननिवृत्तेस्तुल्यत्वात्। नन्विष्टविशेषप्रत्यक्षात् सुखविशेषो भवतीति जिज्ञा सार्थवतीति चेत्? सत्यम्, अविद्यानिवृत्तितौल्ये तदेव न सम्भवति, परोक्षापरोक्षवृत्त्योर्निवर्त्याविद्यासामानाधिकरण्यतदभावाभ्यां अज्ञाननिवृत्तितदभावा विति सिद्धान्ते न दोषः। नन्विष्टविषयापरोक्षवृत्तेः प्रत्यक्षज्ञानत्वमेव सुख हेतुत्वप्रयोजकम्, नत्वविद्यानिवर्तकत्वमिति चेत्? न, प्रमेयमिदमिति ज्ञानेपि सुखप्रसङ्गात्। नचेष्टतावच्छेदकप्रकारकज्ञानमेव सुखहेतुरिति वाच्यम्, प्रमेय मिदिति ज्ञानादपि सुखप्रसङ्गात्। नच तत्र व्यावर्तकतया प्रकारो न भातीति वाच्यम्, रजतमिति ज्ञानेपि रजतत्वस्य तथा भानाभावात्। तस्मादविद्यानिवृत्तिरूपविशेषादेव प्रत्यक्षं सुखविशेषकरमिति तदेवाविद्यानिव- र्तकम्। किञ्च यदि परोक्षज्ञानमप्यज्ञाननिवर्तकं तर्हि प्रत्यक्षदृष्टवह्नेरिव पर्वतो वह्निमानित्याप्तवचनावगतवह्नेरपि पुंस इदानीमस्मिन्पर्वते वह्निर्नवेति संशयो न स्यात्, तदभावे इदानीमपि किमस्मिन्पर्वते वह्निर्विद्यते नवेति प्रश्नो न स्यात्, विद्यमानवह्निवैशिष्ट्यस्याप्तवाक्याधिगतत्वात्, तद्विषयाविद्यानिवृत्तौ प्रत्यक्षवह्नेरिव तस्य स्फुटत्वाविशेषाच्च। नचैतत्कालावच्छेदेन पर्वते तद- ज्ञानसम्भवात् संशय इति वाच्यम्, प्रत्यक्षप्रमाया अपि तदविषयत्वात्। नहि चक्षुरादिकं नीरूपं कालं गृहीतुं शक्नोति। नच उपनीतकालवैशिष्ट्य वह्न्यधिकरणे प्रत्यक्षं विषयीकरोतीति वाच्यम्, — अपरोक्षज्ञानमात्रे तन्नियमाभावात्, शब्दाद्यनन्तरभाविनि तदसम्भवात्, पर्वतांशेपि प्रत्यक्षे तत्सम्भवाच्च। वाक्यजन्यं ज्ञानं न तद्विषयीकरोतीति चेन्न, — वर्तमानकालविशिष्टवह्नेर्वैशिष्ट्ये पर्वतस्याज्ञाननिवृत्तौ वाक्य जन्यज्ञानानन्तरमुपनीतकालवह्न्योर्युगपद्विशिष्टज्ञानसम्भवात्, तत्साम्यप्रयास स्त्वात्। तज्ज्ञानं सत्तानिश्चयरूपं न भवतीति चेत्? सत्यम्, तदेव तत्प्राक ट्यविरहरूपाविद्यानिवृत्त्यनङ्गीकारे कुतः? प्रत्यक्षवह्न्याश्रयोपनीतकालवैशिष्ट्य ज्ञानस्यैव परत्रापि प्राकट्ये सति तत्प्रसङ्गात्, अन्यथा प्रत्यक्षमपि तथा न

स्यात्। किञ्च— दूरस्थवृक्षे आप्तवाक्यात् परिमाणविशेषावगमेऽपि तद ज्ञानविपरीतभ्रमौ दृश्येते, तस्यैव चतुष्टयसन्निकर्षेण परिमाणविशेषापरोक्षज्ञाने सति न तदुभयमित्यन्वयव्यतिरेकाभ्यां परोक्षज्ञानं नाविद्यानिवर्तकम्। एवं दिङ्मोहशङ्खपीतिमचन्द्रप्रादेशिकत्वनभोनीलिमादिभ्रमा. परोक्षज्ञानस्याज्ञाननिव र्तकत्वे कथमुपपद्येरन्, परोक्षतस्तत्त्वज्ञानस्य तत्र सत्त्वात्। अभिवदनादिव्यव हारे च नाविद्यानिवृत्तिः कारणम्, भ्रमसंशयाभ्यामपि तद्दृष्टेः। न जानामी त्यनुभवस्तु सुषुप्ताविव सतोऽप्यज्ञानानुभवस्य जानामीति स्फुटतरवह्न्याद्याकार सत्तानिश्चयानुभवेनाभिभूतत्वात् सौरप्रभाभिभूतदीपादिप्रभाया इव स्फुटव्यवहा रयोग्यत्वाभावाच्च भवतीति न तावता तन्निवृत्तिः कल्पयितुं शक्यते। यथाच सौरप्रभायां सत्यां चन्द्रादिप्रभाया अननुभवमानेन निवृत्तत्वभ्रमः, एवं परो क्षज्ञाने सति तदज्ञानस्य स्फुटमननुभवात् अनुमित्या वह्न्यज्ञानं शास्त्रश्रवणे- न धर्माद्यज्ञानं निवृत्तमित्यनुभवो भ्रमः, निवर्तकाभावरूपबाधकयोरुभयत्र तुल्य स्यात्। एवं प्रमाणानुसारात् परोक्षज्ञानस्यानिवर्तकत्वं अनिवर्तकत्वे दोषाभाव श्चोक्तः। निवर्तकत्वेऽपि त्वदुक्तदोषो नास्त्येव, अविद्याविषयवृत्तेस्तदनिवर्त कत्वात्; प्रमाणानां स्वप्रमेयाव्युदासकत्वात्। अहमज्ञ इति प्रतीतिश्चाभाव विषयता असिद्धैव, मयि घटाज्ञानमिति यदज्ञानमात्मविशेष्यमनुभूयते तदेव ह्यज्ञ इति विशेषणतयानुभूयते, तस्मिंश्च ज्ञाने यथातमन्यधर्म. असुखमनिच्छे ति पापदुःखद्वेषादि धर्मादिविरोधित्वेन प्रतीयते तद्वत् ज्ञानविरोधित्वेनैव विषयि दनुभूयते, नत्वभावतया, अभावमात्रे नञन्वितप्रतियोगिवाचकनामपदोऽस्ति बुद्धिप्रयोगयोरभावात्; अन्यथा वायौ पृथिव्यरूपमिति बुद्धेरवारमपि घटा ज्ञानमिति बुद्धिप्रयोगयोरभावप्रसङ्गात्। अत एव न जानामीत्यनुभवोऽपि ज्ञान विरोधित्वमात्रविषयः, तस्याज्ञानमित्यनुभवेनैकविषयत्वात्। अभावत्वमपि भाव रूपाज्ञानस्यास्त्येव, आरोपिताज्ञानभावस्याधिष्ठानचिन्मात्रतया तदभावत्वाप्यारो पिताज्ञानाद्यभावत्वात्। यथ तर्हि धर्मिनिर्णयः? ज्ञानसामान्यविरोधित्वनिर्वाहा य भावधर्मिकल्पनायां लाघवात् भाव एवाज्ञानम्।

ननु विप्रतिपन्नशब्दो यदि विप्रतिपत्तिमात्रपरः तदाऽज्ञो पर्यः, सर्वस्यापि यस्मिंश्चिद्विप्रतिपत्तिविषयत्वात्, प्रकृतविप्रतिपत्तिपरत्वे च दोषैवर्ष्यमित्यादि

अनुमानञ्च–विप्रतिपन्नं मानज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरण स्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावादिति। धारावाहिकद्वितीयादि व्यवच्छेदार्थं विप्रतिपन्नशब्दः। स्वरूपभूतज्ञानव्यावृत्त्यर्थं भ्रान्ति भूतज्ञानव्यावृत्त्यर्थं च मानशब्दः। करणप्रतीतिव्युदासाय ज्ञानशब्दः। स्वप्रागभावस्योत्पादकादृष्टस्योत्पत्तिप्रतिबन्धकादृष्टस्ववेद्यगतवृत्त्यभि-व्यक्तिप्रागभावाः साध्यविशेषणैर्व्यवच्छेद्याः। वस्त्वन्तरशब्दो वैशद्यार्थः। एवं स्वशब्दोऽपि।

---

धारावाहिक इति। विप्रतिपन्नपद अप्रतिपन्नविषयपरम्, विमल मित्यादिवत्, विगतप्रतिपन्नत्व च प्रतिपन्नानपेक्षत्वम्, अस्य च विशेषणे तात्पर्यम्, ततश्च स्वान्यूनविषयजन्यज्ञानजन्यान्यत्व विवक्षितम्, स्वसमानकालीनज्ञानविषयाविषयकत्व वा, तेन घट पटज्ञानाभ्यामुत्पन्नसमूहालम्बनस्य न पक्षत्वापत्तिः। स्वस्वसामग्र्यन्यतरकालीन ज्ञानविषयमात्रविषयकज्ञानान्यसविकल्पकत्व वा, तेनेच्छाव्यवधानेन स्वजनकी भूतज्ञानतृतीयक्षणोत्पन्नज्ञानस्य न पक्षत्वापत्तिः। अथवा विप्रतिपन्नमिति भावे निष्ठा। शेष पूर्ववदेव। अथवा विप्रतिपत्तिपदप्रसिध्यनुसारेण विप्रतिपत्तेर्निरु क्तधर्मवति प्राथमिकज्ञाने दर्शनेन निरुक्तधर्मवतो लक्षणया वोपस्थितिः, प्रमाण ज्ञानस्य विप्रतिपन्नशब्दविवरणरूपत्वे द्वितीयादिज्ञानव्यावृत्त्यर्थविशेषणान्तर वक्त व्यम्, ततो वर प्रयुक्तशब्दस्यैव तादर्थ्यवर्णनमित्यभिप्रेत्याचार्यैरेव व्याख्या तम्। एव प्रथमविशेषणस्य धारावाहिकद्वितीयादिव्यावृत्तिमात्रप्रयोजकत्वात् द्वितीयविशेषणमपि सार्थकमित्याह स्वरूपे ति। ज्ञानपदवैयर्थ्यशङ्का स्पष्टार्थत्वेन परिहरति करणे ति। वस्त्वन्तरशब्द इति। निवर्त्यपूर्वक मित्यस्य निवर्त्यकालीनप्रागभावप्रतियोगित्वार्थकतया तेनैव स्वविषयावरणपदेन च स्वेनार्थान्तरताव्यावृत्तेरिति भावः। एवं स्वशब्द इति। आद्य इति शेषः, स्वोत्पादकादृष्टस्य च क्वचित् प्रतिबन्ध कत्वसम्भवाद्विषयस्यापि घटादेरर्थान्तरावरणत्वसम्भवाच्चिरत्रीपोद्वारा स्वनिवर्त्य

प्रागभावव्यतिरिक्तेत्येतावता प्रथमचतुर्थविशेषणफलसिद्धौ पृथग्विशेषणनिर्देशो व्यवच्छेद्यविशेषव्यञ्जनाय । धारावाहिकद्वितीयादिष्वनैकान्त्यपरिहारायाप्रकाशितार्थशब्दः । आलोकमध्यारोपितदीपव्यवच्छेदायान्धकारोक्तिः । तत्रापि द्वितीयादिप्रभाव्यवच्छेदाय प्रथमोत्पन्नशब्दः । इन्द्रनीलादिप्रभाव्यवच्छेदाय प्रदीपशब्दः । आगमश्च- "अनृतेन हि प्रत्यूढाः, तेषां सत्यानां सतामनृतमपिधानम्" "नासदासीन्नोसदासीत्तदानीन्तम आसीत्तमसा गूढमग्रे प्रकेतम्" "इन्द्रोमायाभिः पुरुरूप ईयते" इत्यादिरिति ॥ तदेतदतीव स्थवीयः ।

---

त्वाच्च स्वजनकादृष्टस्वविषयाभ्यामर्थान्तरतावारणाय द्वितीयस्वपदस्य, स्वप्रतिबन्धकादृष्टस्य येन केनचिन्निवर्त्यतया तेनार्थान्तरतावारणाय तृतीयस्वशब्दस्य चावश्यकत्वात् । स्वशब्दस्य वैशद्यार्थत्वमेवोपपादयति *प्रागभावव्यतिरिक्ते* ति । स्वपदे हि सति प्रथमचरमविशेषणस्याप्यावश्यकतया ताभ्यां व्यवच्छेद्यविशेषप्रतीतिर्भवतीति भावः । आलोके ति । समभिव्याहृतपदेन यद्रूपावच्छिन्नतयोपस्थितेर्थे प्राथम्यमभिधीयते तद्रूपावच्छिन्नसजातीयापेक्षया प्राथम्यं *ह्यवध्युपस्थापकपदाप्रयोगे प्रथमादिपदैः* प्रतीयते, आदिकाव्यमादिकविः प्रथमाभिधानमित्यादौ तथा दर्शनात्, ततश्चेह प्रथमोत्पन्नप्रदीपप्रभावदित्यभिधानात् प्रदीपप्रभापेक्षयैव प्राथम्यलाभात् सौरालोकमध्यारोपितस्यापि प्राथम्यं विरुद्धमिति भावः । तत्रापी ति । अन्धकारस्योपलक्षणस्यैव युक्तत्वादिति भावः । अतिस्थवीय इति । अयमभिप्रायः — *अहमज्ञ इति प्रतीतिरसिद्धैव, यस्या अभावविषयत्वे आश्रयज्ञानादिविरोध* उच्यते । तथाहि— किं न जानामीति प्रतीतिस्सर्वकालीना, उत किंचित्कालीना ? नाद्यः, असिद्धेः । द्वितीयेपि किं राजवृत्तान्तन्न जानासीत्यादिप्रश्नस्थलादौ अहं नजानामीत्युत्तरानुरोधेन यो ऽज्ञानानुभवः कल्प्यते सएव विवक्षितः, उतान्यः ? नान्यः, असिद्धेः । आद्यश्च विशेषज्ञानाभावविषयः, तत्र न जानामीति विशेषज्ञानविषयस्यैव विवक्षितत्वात् ; राजवृत्तान्तं विशिष्य न जानामीति हि तस्य

वाक्यस्यार्थः । किञ्च किं विषयानवच्छिन्नमज्ञानं प्रतीयते, उत तदवच्छिन्नम्? नाद्यः, ज्ञानवत्तस्य विषयनिरूप्यत्वात् । अन्त्येपि सर्वावच्छिन्नं प्रतीयते, उत यत्किंचिद्विषयविशेषावच्छिन्नम्? नाद्यः, सर्वस्याज्ञानाविषयत्वात् । नहि सुखादिकं घटादेश्चाज्ञानविषयः । शरीरादेः तस्य च प्रत्यक्षत्वनियमाच्च । द्वितीयेपि किं न जानामीत्यनवच्छिन्नमज्ञानं प्रतीयते, उत घटाद्यवच्छिन्नविषया ज्ञानम्? नाद्यः, श्रवणादिजन्यज्ञानाभावविषयत्वात् । अन्त्येपि किं मत्व्यतिरिक्तं न जानामीत्यादिरूपेण प्रतीतिः, उत घटं न जानामीत्यादिरूपेण? नाद्यः, शरीरादेर्यस्य कस्यचित् ज्ञानावश्यकत्वेन तथा प्रतीतेरेवासिद्धेः ।

न द्वितीयः, घटं न जानामीत्यादिप्रतीतेः घटज्ञानाभावविषयत्वोपपत्तेः । नन्वहमज्ञ इति प्रतीतेस्सर्वानुभवसिद्धायाः कथमपलापः, कथञ्च तद्व्याख्यानम्? अनुभवमपलपतः कथानर्हत्वात्, आत्मसाक्षिकानुभवव्याख्याने च पदार्थमात्रनिह्नवप्रसङ्गाच्चेति चेन्न, — एवं प्रमाणविरुद्धमनुभवं स्वयमेव परिकल्प्य तदप्रतिक्षेपे कथानधिकारापादने गगनादौ कुसुमाद्यनुभवं परिकल्प्य तत्प्रतिक्षेपे कथानधिकारः कुतो नापाद्येत? प्रत्युत स्वयमेव वञ्चनार्थं परिकल्प्य तत्सिद्ध्यर्थं प्रमाणविरुद्धमनुभवमपि कल्पयतः परमसाहसिकस्य तवैव दुस्तरः कथानधिकारः । यथावस्थितानुभवविषयनिरूपणेपि अनुभवव्याख्याने पदार्थमात्रनिह्नवप्रसङ्ग इत्यापादयन् घटं न जानामीति घटादिकमेव विषयतयाऽवभासयन्तीं प्रतीतिं तदवच्छिन्नचैतन्यविषयत्वेन निरूपयन् कथं व्याचक्षीथाः ।

किञ्च स्वरूपेप्यज्ञानादहङ्कारादेरज्ञानविषयतया कथं किमपि न जानामीति प्रतीतिः? किञ्च अस्मिन् वने कोपि वृक्षो मया विशिष्य ज्ञातो नास्तीत्यनुभवोऽस्ति, अस्ति च तत्कालेपि एतानन्यवृक्षान्विशिष्य न जानामीति विशेषप्रतीतिः, तत्र विशेषज्ञानविशेषाभावस्य ग्राह्यत्वे विशेषविषयत्वाभावस्य तदा वृक्षेषु सत्त्वाद्विशिष्य ज्ञातो वृक्षो नास्तीति विशेषणाभावप्रयुक्तविशिष्टाभावग्रहाद्विशेषणाभावग्रहादेव व्यवहार उपपद्यते । भावरूपाज्ञानपक्षे तु नास्याः प्रतीतेर्विशेषज्ञानविषयत्वविशिष्टवृक्षाभावो विषयः, त्वदुक्तप्रकारेण विशेषज्ञानस्य सत्त्वेन विशिष्टवृक्षस्यापि सत्त्वात्; अत एव न विशेषणाभावोपि विषयः; सिद्धान्तरीत्या विशेषाभावविषयत्वे चाज्ञानासिद्धेरेव । न च वृक्षे अज्ञानविषयत्वं विषयः, इह विशिष्य ज्ञातो वृक्षो नास्तीति प्रतीत्यभावापत्तेः, अधिकरण-

स्याभावान्वयात् । तदानीं हि विशिष्याज्ञानविषयो वृक्ष इहेति स्यात् । नञर्थस्य वृक्षान्वितत्वेन ज्ञानान्वयाप्रतीतेश्च । किञ्च मम शास्त्रार्थज्ञानसामग्री नास्तीत्यपि प्रतीतिः, त्वदुक्तरीत्या च शास्त्रार्थज्ञानस्यान तत्सामग्र्यभाव स्सम्भवति । विशेषज्ञानसामग्रीविरहोऽपि त्वदुक्तव्याघातादेव न गृहीतुं शक्यते। तत्र का गतिं गमिष्यसि । अपिच कश्चित् कञ्चित् पृच्छति — शास्त्रार्थमुपदिशेति, अपर आह अनधिकारी भवान् तुभ्यमुपदेष्टव्य. शास्त्रार्थ इति, उपदिशति च शास्त्रार्थं शास्त्रार्थ इत्येव, विशिष्याप्युपदिशति विशिष्य नोपदेष्टव्य इति, एवं सति यदि तत्र भावरूपो ऽनुपदेशोऽङ्गीक्रियते इहापि भावरूपमङ्गीकर्तव्यम्, अथ तत्रान्तरेणापि भावरूपमनुपदेश स व्यवहार उपपद्यते, इहापि नार्थो भावरूपाज्ञानेन । किञ्च ब्रह्मसूत्रारम्भानुरोधेन जिज्ञासा तावद्दुरपह्नवा, त्वदिशा चासौ, तत्र ज्ञानस्याग्रहणे तदिच्छाया असम्भवात् ज्ञानस्य च विषयनिरूप्यत्वाद्विषयज्ञानाज्ञानयोर्जिज्ञासानुपपत्तिरेव। यदि च विशिष्य जानीयामिति जिज्ञासानुरोधेन ज्ञाने जिज्ञासासम्भवेन विशेषत्वेन ज्ञातैर्विशेषैरेव ज्ञाननिरूपणे जिज्ञासोपपत्तिरिति कल्प्यते, तदा विशिष्य न जानामीति प्रत्ययानुसारेण विशेषत्वेन ज्ञातैर्विशेषैरेवाज्ञाननिरूपणे विशेषज्ञानाभावज्ञानोपपत्तिरिति कल्प्यताम् । यदि च जिज्ञासाविषयज्ञाननिरूपणं साक्षिभास्यैरेव विशेषैः, साक्षिभानं च जिज्ञासाविरोधीति कुदृष्ट्या पश्यसि, तदा अभावप्रतियोगिनिरूपणं साक्षिणैवेति कुतो न पश्यसि । ननु ज्ञाननिरूपकविशेषविषयसाक्ष्यात्मकज्ञाने सति विशेषज्ञानाभावज्ञानं न सम्भवति, जिज्ञासा तु साक्षिरूपविशेषज्ञानस्य तस्या निवर्तकत्वात् सम्भवतीति चेन्,— इच्छा तावदिष्टतावच्छेदकप्रकारकज्ञानसाध्या, तत्र चेष्टतावच्छेदकं नार्थविशेषविषयत्वम्, साक्षिरूपतादृशज्ञानस्य सिद्धत्वात्, इष्टतावच्छेदकावच्छिन्नसिद्धौ तेन रूपेणेच्छाया असम्भवात्, तथाचावधारणत्वमिष्टतावच्छेदकम्, तेन रूपेण ज्ञानेच्छा जिज्ञासेति पर्यवसन्नम्, तथाचाभावपक्षेऽपि अनवधारणात्मकसाक्षिणा विशेषज्ञानेऽपि अवधारणरूपज्ञानाभावविषयत्वमस्त्विति तुल्यम् । यदिचान्यत्रेष्टतावच्छेदकप्रकारकज्ञानस्य कारणत्वेऽपि न जिज्ञासारूपेच्छायां कारणत्वमित्युच्येत, तदा अन्यत्र प्रतियोगितावच्छेदकप्रकारकज्ञानस्य कारणत्वेऽपि ज्ञानाभावे न तथेति क्रिं नेष्यते, अन्यत्र क्लृप्तस्मरणाभावस्यापि तुल्यत्वात् । किञ्चाज्ञानस्य चैतन्याश्रयत्वादन्तःकरणाश्रयत्वाभावात् कथमहमज्ञ इति प्रतीतिस्तद्विषया स्यात् ।

यदुक्तम्— अज्ञानाश्रयचिदैक्याध्यासात्तथा प्रतीत्युपपत्तिरिति ; तन्न, अहं मन्द इति ज्ञानविरोधित्वेनैवाज्ञानं प्रतीयत इत्युक्तम् ; विरोधित्वं ज्ञाननिवर्त्यत्वमिति चोक्तम् ; ततश्चान्तःकरणस्यापि चैतन्याश्रयत्वात् ज्ञाननिवर्त्यत्वाच्च ज्ञाननिवर्त्यान्तःकरणाश्रयचैतन्यैक्याध्यासात् तथा प्रतीत्युपपत्तौ कुतोऽवस्तु पदार्थविषयत्वकल्पना । किञ्चान्तःकरण एव मिथ्यात्वात् ज्ञाननिवर्त्यस्य ज्ञानाभावादेस्सत्वात् तद्विषयैवाहमज्ञ इति प्रतीतिरस्तु । ननु धर्म्यादिज्ञानसत्त्वादन्तःकरणे कथमज्ञानमिति चेन्न;— ज्ञानान्तराभावस्य सत्त्वात् । न च विशेषज्ञाने सत्यपि ज्ञानान्तराभावमादायाज्ञानानुभवप्रसङ्गः, परोक्षस्थल इव समानाधिकारनिश्चयस्य प्रतिबन्धकत्वसम्भवात् । सामान्याज्ञानानुभवे यत्किंचिद्विशेषज्ञानमेव प्रतिबन्धकमस्तु । अथवा इष्टापत्तेर्नायं दोषः, ज्ञाने सत्यप्यहं ज्ञाननिवर्त्यवानिति प्रतीतेः । नहि तथापि पक्षे इतोऽन्याहशोऽज्ञानानुभवः, योऽनाक्षिप्तस्स्यात् । अत एव परोक्षतो ज्ञातेपि अहं ज्ञाननिवर्त्यवानिति प्रतीतेस्सत्वात् परोक्षज्ञानस्थले प्रतिबन्धककल्पनमपि मुधैव । किञ्च त्वन्मते जडविषयाज्ञानाभावात् घटं न जानामीति तद्विषयत्वेन अज्ञानानुभवः कथमभावरूपाज्ञानविषयस्स्यात् । अज्ञानविषयचैतन्याभेदात्तदुपपत्तिरस्त्विति चेन्न ;— शुद्धचैतन्यस्यैव घटाद्यधिष्ठानत्वात् तेनैव घटस्याभेदः प्रतीयते, अज्ञानविषयत्वानवच्छिन्नचैतन्यस्य ततो भेदान्नाज्ञानविषयाभेदप्रतीतिसम्भवतीति ।

नन्वधिष्ठानचैतन्यस्याज्ञानविषयचैतन्येन वस्तुतोऽभेदादज्ञानविषयाभेदप्रतीतिस्सम्भवतीति चेत् ? तर्ह्यज्ञानविषयघटावच्छिन्नचैतन्याभिन्नशुद्धचिदभिन्नतया घटज्ञानदशायामपि घटं न जानामीति प्रतीतिप्रसङ्गः । घटापरोक्षज्ञानमेवाज्ञाताभेदज्ञानप्रतिबन्धकमिति चेत् ? किं तत् ज्ञानं तस्य अज्ञानविषयचैतन्याभेदज्ञानमात्रप्रतिबन्धकम् , उत तदवच्छिन्नचैतन्यविषयाज्ञानविषयचैतन्याभेदज्ञानप्रतिबन्धकम् , उत तद्विशिष्टविषयाज्ञानविषयचैतन्याभेदज्ञानप्रतिबन्धकम् ? नाद्यः, *ननु मतस्थेन वृक्षं न जानामीत्यज्ञानानुभवस्य इदमिति ज्ञानेन प्रतिबन्ध-*प्रसङ्गात् । एतेन तत्प्रकारकज्ञानं तत्प्रकारेणाज्ञानविषयचैतन्याभेदज्ञानप्रतिबन्धकमिति निरस्तम् , इदमिति ज्ञानेपि इदन्त्वेनैवाज्ञानविषयचैतन्याभेदानुभवात् । अत एव न द्वितीयः, इदमवच्छिन्नस्यैव शुक्तित्वावच्छिन्नत्वस्य त्वयैवोक्तत्वात् । किञ्च घटावच्छिन्नचैतन्यविषयाज्ञानविषयचैतन्याभेदमादाय

घटं न जानामीति यत् ज्ञानं तस्य प्रतिबन्धेपि घटावच्छिन्नचैतन्यविषया न विषयचैतन्याभेदमादाय घटं न जानामीति बुद्धिर्घटज्ञानदशायामपि स्यादेव । न तृतीयः, अज्ञानस्य विशिष्टविषयत्वे जडविषयत्वापत्तेः, घटाज्ञानस्य घटविशिष्टविषयत्वाभावेन पूर्वदोषानतिवृत्तेश्च । किञ्च यदि तदवच्छिन्नचैतन्याज्ञानमेव घटं न जानामीति प्रतीतिविषय इत्युच्यते तर्हि शुक्तिं न जानामीतिवद्रजतं न जानामीत्यपि प्रतीतिप्रसङ्गः, अज्ञानविषयीभूतशुक्त्यवच्छिन्नचैतन्याभिन्नत्वाद्रजतस्य ; त्वयैव इदमाकारवृत्तौ सत्यां तदवच्छिन्नचैतन्यैक्ये सति तच्चैतन्यस्यैव शुक्त्यवच्छिन्नतया तदैक्यमपि सिद्धमेवेति तदनवभासायाज्ञानकल्पनमिति, इदमाकारवृत्त्यभिव्यक्तेदमवच्छिन्नचैतन्यस्यैव रजताधिष्ठानतया तत एव तज्ज्ञानाद्वृत्त्यन्तरं न कल्पनीयमिति, चोक्तत्वात् । ततश्च शुक्त्यज्ञानं नाम शुक्तिज्ञानाभावः, स एव विषय इति तद्वदेव घटं न जानामीत्यत्र घटविषयकज्ञानाभाव एव विषयः । अपिच सुखं न जानामि शुक्तिरूप्यं न जानामीत्यादेस्सुखाद्यज्ञानाभावेन ज्ञानाभावविषयत्वमेव वाच्यमित्यन्यत्रापि तथा ।

मदनोक्तम् — स्वस्य विद्यमाने सुखे विशेषतोऽनुभवनियमेन न जानामीत्यनुभवोऽसिद्ध एवेति, तन्न, विशेषतोऽनुभवे सत्यपि अशोकादाविव सुखं न जानामीत्यनुभवस्य तत्सन्देहजिज्ञासाप्रश्नप्रतिवचनानां च दर्शनात् । यत्र सुखप्रातिभासिकादिनिश्चयमेन वाक्यं प्रयुक्तम्, श्रोतुश्च वाक्यादर्थज्ञानं न जातम्, तत्र तस्य त्वदुक्तमर्थं न जानामीत्यनुभवो दुरपह्नवः । स च ज्ञानाभावे नैवोपपाद्यः । किञ्च विद्यमाने सुखे विशेषतोऽनुभवनियमेपि अविद्यमाने न जानामीत्यनुभवस्सम्भवति, तस्य का गतिः ? प्रत्यक्षाद्यभावविषयत्वे त्वदनिष्टप्रतीतिव्याख्यानप्रसङ्गात् । नचातीतादिरूपस्यापि सुखस्याव्याकृतात्मना स्थितस्यावरणमिष्यत इति वाच्यम्, तथा सति सुखादेरनावृतचैतन्याध्यास इति मतभङ्गात् । किञ्चानागतं न जानामीति कथं प्रतीतिः ? तदावारकाज्ञानाभावात् । नच तस्यैवाव्याकृतात्मना विद्यमानस्यावरणसत्त्वान्न जानामीति प्रतीत्युपपत्तिः, व्याकृतावस्थाया एव भावित्वेन तद्विषयाज्ञाना

तथाहि– यदुक्तं 'भावरूपमज्ञानं प्रत्यक्षेण प्रतीयत' इति ; तत्र किं ज्ञानविरोधित्वेनैव भाति, उताविरोधित्वेन ? नाद्यः, पूर्वोक्तसमस्तप्रसङ्गाविशेषात् । विरोधितयापि हि भासमानं प्रतियोगिप्रकाशमन्तरेण न प्रकाशेतैव । ततश्च तद्विषयप्रकाशे सति तद्विरुद्धस्याज्ञानस्य दूरापक्रमणात् कुतस्तद्ग्रहणम् ।

---

नुभवविरोधात् । नचानागतावरणयोग्याज्ञानस्य इदानीं सत्त्वात् तथा प्रतीतिसम्भवः, तथा सति घटज्ञाने सत्यपि उत्तरकाल घटावरणयोग्याज्ञानस्य तदानीं सत्त्वेनाज्ञानानुभवप्रसङ्गात् । एवमेवातीत न जानामीत्यनुभवोपि नोपपद्यते, पूर्वमेव तत्साक्षात्कारैस्तदज्ञानानां नाशात् । केषाञ्चिदज्ञानानां नाशेपि किञ्चिदज्ञानं ब्रह्मसाक्षात्कारपर्यन्तमनुवर्तते, स एव विषय इति चेत् ? यद्वस्तु साक्षात्क्रियमाणमेव नश्यति तत्र विनश्यदवस्थचरमसाक्षात्काराभिवृत्तिप्रसङ्गेन पूर्वमनावारकत्वादनन्तरं च तस्यैवाभावादनावारकत्वात्तादृशाज्ञानाविषयकाज्ञानासिद्धेः । अनेकेष्वज्ञानेषु विद्यमानेषु एकमेवावृणोति, यदा वृणोति तन्निवर्तते, समानविषयकत्वात्, नान्यदिति हि तव सिद्धान्त इति ।

**ज्ञानविरोधित्वेनैव भाती** ति । अज्ञानमिति शेषः । **अविरोधित्वेने** ति । विरोधित्वादन्यदविरोधित्वम्, पर्युदासे नञ्, अविरोधित्वेन – विरोधित्वान्यरूपेण, स्वरूपेणेत्यर्थः । अथवा – तदभाव एव नञ्, अविरोधित्वम् – विरोधित्वाभावः, तच्च स्वरूपेणैव भानविशेषणम्, नतु नियमतया, क्वच विरोधित्वाभावः विषयविषयिभावसंसर्गावच्छिन्नो विवक्षितः, ततश्च विरोधित्व भानविषयो नेति पर्यवसानात् विरोधित्व भासते नवेति विकल्पार्थः । **पूर्वोक्ते** ति । प्रतियोगितदवच्छेदकज्ञानाभ्यां प्रमाणान्तरजन्यज्ञानेनाज्ञानज्ञानेन च विरोधो विवक्षितः । अविशेषादि त्यनेन लेशतोपि वैषम्यशङ्का निरस्यते । **विरोधितये** ति । विरोधस्यापि प्रतियोगिनिरूप्यत्वादिति भावः । इदं चाश्रयज्ञानावच्छेदकज्ञानयोरप्युपलक्षणम् । ननु सामान्यतः प्रतियोग्यादिज्ञानमेव कारणम्, तेन च न विरोधः, किन्तु विशेषज्ञानेनैवेति शङ्कते

ननु गृह्यमाणमिदमज्ञानं सामान्यतः स्वप्रतियोगिनिरूपणं न विरुणद्धि, अपितु विशेषत इति चेत्? अभावरूपाज्ञाने तर्हि कः प्रद्वेषः, सामान्यविशेषरूपेण परिहारस्य समत्वात्। यच्च *निषिध्यमानविशेषज्ञानेऽपि प्रतियोगिविषयापेक्षया विरुद्धत्वमुक्तम्*; तदपि भावरूपेऽपि तुल्यम्। अन्यथा तदविरुद्धत्वप्रसङ्गात्। तत्र सामान्यतः प्रतियोगिविशेषज्ञानमस्तीति चेत्? तदपि तुल्यम्। गौरवं पुनरधिको दोषः।

---

**गृह्यमाणमि** ति। सामान्यविशेषभावस्य नियामकत्वाङ्गीकारेणातिप्रसङ्गपरिहारोऽपि तुल्य इत्याह **सामान्ये** ति। ननु विशेषज्ञानमस्ति नवा? अस्ति चेद्विशेषज्ञानसत्त्वादेव न विशेषज्ञानाभावः; नचेत्तदवच्छिन्नतया ज्ञानाभावप्रतीतिर्न स्यात्, इत्याशङ्क्य– इदमपि भावरूपाज्ञानपक्षेऽपि तुल्यमित्याह यच्च **निषिध्यमाने** ति। *यथा सामान्यतोऽर्थज्ञाननिषेधे निषेधप्रतियोगिभूतार्थसामान्यावच्छिन्नज्ञानज्ञाने सति तदपेक्षितार्थसामान्यस्यापि ज्ञानविरोधः, एवं विशेषज्ञाननिषेधेऽपि निषेधप्रतियोगिभूतार्थविशेषावच्छिन्नज्ञानज्ञाने सति तदपेक्षितार्थविशेषस्यापि ज्ञानाज्ञानविरोध इत्यर्थः।* **प्रतियोगी** – *निरूपकः, विषय इत्यर्थः।* **विषयापेक्षया**– *विषयसापेक्षतया, विषयज्ञानाधीनज्ञानतयेत्यर्थः।* निषिध्यमानस्येत्यादिपूर्वपक्षोक्तानुवदिरूपत्वादयमर्थ इत्यवगम्यते। ननु प्रतियोगिनि विशेषाकारस्याज्ञाने तद्विशेषाभावज्ञानं न सम्भवत्येव, *अभावज्ञाने भासमानधर्मावच्छिन्नप्रतियोगिकत्वनियमस्याभावप्रत्यक्षे उक्तत्वात्, भावरूपाज्ञानस्य तु भावत्वादेव न तन्नियम इति विशेषज्ञानाभावेऽपि सामान्यतः* प्रतियोगिज्ञानादेव विरोधप्रतीतौ को विरोध इत्यत्राह **अन्यथे** ति। *विशेषस्याभाने विशेषज्ञानविरोधित्वमप्रामाणिकं स्यादिति भावः।* वस्तुतस्तु अभाव इव विरोधेऽपि सामान्याकारेण प्रतीतौ तदवच्छिन्नविरोध एव प्रतीयेत, अविशेषादिति भावः। *विरोधपरिहारयोरुभयोरपि साम्ये भावरूपाज्ञानविद्वेषे* किं निबन्धनमित्यत्राह **गौरवमि** ति। किञ्च ज्ञानविरोधित्वं हि ज्ञानाभाव

नहि भावरूपाज्ञानस्य ज्ञानविरुद्धत्वं ज्ञानाभावनिरूपणमन्तरेण घटते । यत्तूक्तमज्ञानावच्छेदकतया प्रतियोगिविषयप्रकाशस्याज्ञान विरोधित्वाभावात् ब्रह्मणोन्यस्य वा अज्ञानावच्छेदकत्वेन प्रकाशो न विरुद्ध इति ; तदभावपक्षेपि किं तथा नाङ्गीक्रियते— अभावप्रतियोगिभूतज्ञानावच्छेदकतया तत्तद्विषयप्रकाशो न विरुद्ध इति । तद्विषयज्ञानस्य तद्विषयज्ञानाभावेन विरुद्धत्वादिति चेन्न; - भावरूपाज्ञानेनापि तद्विषयत्वहेतुकविरोधाविशेषात् । अन्यथा तद्गोचरप्रमाणज्ञानोदयेपि

---

व्याप्यत्वम्, तच्च ज्ञानाभावग्रहणमन्तरेण नोपपद्यते, अभावग्रहे च प्रतियोगि ज्ञानादिव्याघातस्य त्वयैव दर्शितत्वेनाभावग्रहणाभावे तत्साप्यभावरूपाज्ञान ग्रहो दूरोत्सारित एवेत्याह नही ति । अनेन लाघवान्तरं चोक्तं भवति — अभावस्यावश्य ज्ञातव्यत्वेन इतरस्यापि ज्ञानकल्पनाया गौरवमिति । साक्षि- प्रकाशस्याज्ञानगोचरभ्रान्तित्वादज्ञानं तेन न विरुध्यत इति यदुक्तं तदनूद्य दूषयति यत्त्वि ति । प्रतियोगिविषयप्रकाश – प्रतियोगिभूतज्ञानतद्विषययोः प्रकाशः । आश्रयप्रकाशस्याप्युपलक्षणमेतत् । विरोधित्वाभावा दिति । अज्ञानविषयत्वादविरोधित्वमिति भावः । तदि ति । प्रतियोग्यादज्ञानमित्यर्थः । तथा– अविरुद्धमित्यर्थं । अभावप्रतियोगी ति । अभावप्रतियोगिभूतज्ञाना वच्छेदकतया तत्तद्विषयप्रकाशस्यापि ज्ञानाभावविषयत्वान्न विरोध इति कुतो नाङ्गीक्रियत इत्यर्थः । यच्चानुमानम्– अज्ञानविषयविषयकापरोक्षवृत्त्यनभि व्यक्तमन्तःकरणावच्छिन्नचैतन्यं नाज्ञाननिवर्तकम्, तत्साधकत्वात्, यद्यत्सा- धकं न तन्मात्रं तन्निवर्तकम्, यथा घटादिसाधकं ज्ञानमिति, तदप्य सङ्गतम्, चैतन्यस्यप्रकाशस्साधकत्वेपि तन्मात्रस्यैवाज्ञाननिवर्तकत्वेन उक्तज्याते रसिद्धे । नच तत्राविद्यावरणरूपप्रतिबन्धकाभावापेक्षत्वान्न तन्मात्रं तन्निवर्तक मिति वाच्यम्, प्रतिबन्धकाभावस्य त्वया हेतुत्वानभ्युपगमात् । नच प्रमाणानां स्वविषयव्युदासकत्वेतिप्रसङ्गः, समानविषयकज्ञानाज्ञानयोर्विरोधा- ङ्गीकारेतिप्रसङ्गाभावात्। अन्यथेति । साक्षिणो विरोधाभावे । तद्गोचरप्रमाणेति ।

सदज्ञानानिवृत्तिप्रसङ्गात् । प्रमाणत्वादेव तस्य तन्निवर्तकत्वमिति चेन्न;- स्वरूपप्रकाशांशेन प्रमाणत्वस्य साक्षिप्रकाशेऽप्यविशिष्टत्वात् । अन्यथोत्तरस्यापि तदभावप्रसङ्गात् । वस्तुतः प्रामाण्यस्य च उभयत्रापि स्वयानभ्युपगमात् । प्रतियोगिविषयप्रकाशतामात्रेण तद्विरोधित्वे स्वज्ञानसाक्षिप्रकाशस्यापि प्रतियोगिप्रकाशत्वावश्यम्भावेन विरो

---

त्वदभिमतवृत्तिज्ञानरूपप्रमाणोदय इत्यर्थः । साक्षिवत्तद्गोचरप्रमाणस्याप्यविरोधित्वादनिवृत्तिप्रसङ्गः, विरोधनिबन्धनो हि निवर्त्यनिवर्तकभावः, तमःप्रकाशयोरिवेति भावः । किमत्र प्रामाण्यं विवक्षितम् ? किं तत्त्वावेदकत्वम्, उत तद्वति तत्प्रकारकत्वम् ? आद्येऽपि किं स्वरूपप्रकाशांशेन तत्त्वावेदकत्वम्, उत विषयप्रकाशांशेन ? नाद्य इत्याह स्वरूपप्रकाशांशेने ति । अन्यथे ति । स्वरूपांशेन तत्त्वावेदकत्वाभावे । तदभावप्रसङ्गादि ति । विरोधित्वाभावप्रसङ्गादित्यर्थः । द्वितीयं दूषयति वस्तुत इति । वस्तुशब्दो विषयपरः । वस्तुतः प्रामाण्यस्य— विषयनिबन्धनप्रामाण्यस्य, विषयप्रकाशांशेन प्रामाण्यस्येति यावत्; ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वादिति भावः । नान्त्यः, निष्प्रकारकचरमसाक्षात्कारस्यानिवर्तकतापत्तेरिति भावः । यद्वा द्वितीयं दूषयति अन्यथे ति । स्वरूपप्रकाशांशेन तत्त्वावेदकत्वस्य निवर्तकताप्रयोजकत्वमनङ्गीकृत्य विषयप्रकाशांशेन तत्त्वावेदकत्वस्य निवर्तकताप्रयोजकत्वाङ्गीकार इत्यर्थः । ननु साक्षिणो वास्तवं प्रामाण्यं नेत्यत आह वस्तुत इति । उक्तप्रकारेण प्रामाण्यस्य विरोधिताप्रयोजकत्वाभावे सिद्धे प्रतियोगिविषयप्रकाशतामात्रेणैव विरोधस्य वक्तव्यत्वात् साक्षिणोऽपि तदविशिष्टमित्याह प्रतियोगी ति । प्रतियोगिप्रकाशत्वावश्यम्भावेने ति । अज्ञानप्रतीत्यर्थं तन्निरूपकप्रतियोग्यादिविषयत्वस्य त्वयैवोपपादितत्वादिति भावः । यद्वा- ननु वृत्तिज्ञानमेव विरोधि, तच्च न प्रमाणत्वेन विरोधि, किन्तु रूपान्तरेणेत्याशङ्क्य,- किं वृत्तेर्विरोधित्वं विवक्षितम्, उत तदवच्छिन्नज्ञानस्य ? नाद्यः, जडत्वेनानिवर्तकत्वात्; द्वितीयेऽपि किं प्रतियोगिविषयप्रकाशत्वेन निवर्तकता, उत वृत्त्यवच्छिन्नज्ञानत्वेन ? नाद्य इत्याह प्रतियोगिविषये ति । नान्त्यः,

धाविशेषात्। इदम्प्रकाशस्तु शुक्तिरजतसाधारणाकारगोचरत्वेन विरोधाभावान्न रजतभ्रमन्निवर्तयति। नचात्रापि तथेति त्वया वक्तुं शक्यम्, निराकारे तदयोगात्। साकारेतु

---

अज्ञानावच्छेदकप्रतियोग्यादिप्रकाशकत्वमाश्रिणोऽपि वृत्त्यवच्छेदानन्तरभाविस्य पूर्वमेवोत्पादितत्वात्। अन्तःकरणवृत्त्यवच्छिन्नचैतन्य निवर्तक नत्वविद्यावृत्त्यवच्छिन्नचैतन्यमिति वैषम्य निरसिष्यत इति भावः। एतेन अज्ञानगोचरभ्रान्तित्वादित्यत्र भ्रान्तित्वादित्यनेन विवक्षित. प्रमाणान्यत्वरूपो ज्ञाना निवर्तकत्वहेतुश्च निरस्तो वेदितव्यः। एवं समानविषयप्रकारो सत्यज्ञाननिवृत्तिरित्यादेवेति स्थितम्, तर्हि समानविषयकज्ञानस्याज्ञाननिवर्तकत्वे इदम्प्रकाशस्यापि भ्रमनिवर्तकत्वं स्यादिति शङ्का परिहरति इदम्प्रकाशस्त्वि ति। ब्रह्मणो निराकारत्वान्न साक्षिणस्साधारणाकारगोचरतया ब्रह्माज्ञाननिवर्तकत्व सम्भव इत्यभिप्रायेणाह निराकार इति। शास्त्रार्थादिविषयसाक्षिणश्च यदि साधारणाकारगोचरतया न भावरूपाज्ञानविरोधित्वम्, तर्ह्यभावपक्षेपि प्रतियोगि ज्ञानस्य साधारणाकारगोचरत्वादेव न विशेषज्ञानाभावविरोध इत्याह साकारेत्वि ति।

ननु कथमिय प्रतिबन्दी, विरोधित्व हि निवर्त्यत्वमेव, ज्ञानसामान्य विरोधित्व च चैतन्यनिवर्तकत्वमेव, नचैव साक्षिणा निवृत्तिप्रसङ्गः, अपरोक्ष वृत्त्यावरणे प्रतिबन्धके निवृत्त एव चैतन्यस्याज्ञाननिवर्तकत्वादित्युक्तमिति चेन्न;— ज्ञानसामान्यविरोधित्व हि न भावप्रकाशिकापञ्चपादिकाटीकादिरीत्या सर्ववृत्तिषु अधिष्ठानतया ज्ञानत्वानुगतबुद्धिप्रयोजकज्ञानत्वसामान्यात्मकचैतन्यनिवर्तकत्वम्, न जानामीत्यत्र ज्ञानत्वावच्छिन्नविरोधस्यैव प्रतीतेः ज्ञानत्वविरोधित्वस्याननुभवात्, अन्यथा घटो नास्तीत्यादावपि घटत्वादिविरोध एव प्रतीयेत। ननु अद्वैतदीपिकादिरीत्या अपरोक्षवृत्त्यनुगतप्रकाशस्यैव प्रकाशत्व सामान्यरूपेण विरोधः प्रतीयते, यथा न्यायमते वस्तुतः शरीरावच्छिन्न एवात्मा आत्मत्वसामान्यरूपेण सुखादिकारणमित्यभिमतम्, इति चेन्न;—

यद्विरोधज्ञाने प्रतियोगितदभावान्यतरप्रतीतौ तदितरान्यतरप्रतीतिर्न भवति तादृशनिरोध एव हि प्रतीयते, न जानामीति ज्ञानदशाया जानामीति ज्ञानादर्शनात्; नच ज्ञाननिवर्त्यत्व तथा, प्रतिबन्धदशायां तृणवह्न्योरिव एकत्रापि निवर्त्यनिवर्तकयोर्ज्ञानसम्भवात् । किञ्च कथमिम विरोध जानातु लोकः? नहि धर्मिज्ञानेन सहानुभवचिदानीन्तनज्ञानजन्यनिवृत्तिप्रतियोगित्व- मनुभवितुमलम्, कालान्तरीयज्ञानजन्यनिवृत्तिप्रतियोगित्वञ्च मानाभावादेव न ज्ञातु प्रभवति । घटाज्ञानादौ घटज्ञानादिनिवर्त्यत्वदर्शनादनुमिनोतीति चेन्न,- आश्रयासिद्धेः । केनापि रूपेण तस्याज्ञानात् । ज्ञाननिरोधित्वेनैव तत्प्रतीतौ सिद्धसाधनम्; स्वरूपासिद्धिश्च, हेतोस्तत्राज्ञानात् । अज्ञानत्वमेव हेतुरिति चेन्न, तन्निश्चयानिश्चययोस्सिद्धसाधनसाध्यावैशिष्ट्यान्यतरापातात् । व्याप्त्यसि सिद्धिश्च, घटाज्ञानेपि ज्ञाननिवर्त्यत्वादर्शनात्; अज्ञानत्वस्य ज्ञाननिवर्त्यत्वात्म कतया ज्ञाननिवर्त्यत्वग्रहणात् पूर्वं तदाकारेण तस्यानुपस्थितेः । आका रान्तरस्य चाभावात् । साक्षिणा निवर्त्यत्व प्रतीयत इति चेत्? प्रमाण व्यवधानाभावे ऽज्ञानावच्छेदकतया प्रतीतिप्रसङ्गात् । अज्ञानावच्छेदकत्व विनापि प्रकाशे प्रमाणव्यवधानापेक्षाया अभावे सर्वस्य साक्षिणैव तथा भान सम्भवे प्रमाणमात्रविलयापत्तेः । ज्ञानजन्यनिवृत्तिप्रतियोगिमानहमिति व्यव- हारापत्तेश्च । का तर्हि प्रतीतेर्गतिरिति चेत्? अभाव एवेति गृहाण । किञ्च ज्ञानसामान्यनिवर्त्यत्व कथ लोको गृह्णीयात्, न हि लोकानां 'एकमेव ज्ञानम्, तच्च कालान्तरे अज्ञान निवर्तयिष्यती' ति बुद्धिरस्ति, येन ज्ञानत्व सामान्यरूपेण तन्निवृत्तियोग्यता गृह्येत, लौकिकाना ज्ञानभेदस्यैव प्रतीतेः, ततश्च धर्मादिज्ञाने सत्यपि निवृत्त्यदर्शनेन ज्ञानसामान्यनिवर्त्यत्वग्रहो नोप पद्यते । ज्ञाननिवृत्तियोग्यतया चावच्छेदकापरिचये न गृहीतु शक्यते । किंच ज्ञानस्य कारणत्वाकारणत्वसन्देहे कारणत्वाभावनिश्चये च न जानामीति ज्ञान दृश्यते; नच तद्दशाया त्वदुक्तज्ञाननिवर्त्यत्वात्मकविरोधग्रहसम्भवः, तस्मा न्निवर्त्यत्वलक्षणाविरोधस्यासम्भवादन्य एव विरोधो वाच्यः, तत्र च पक्षद्वयेपि तुल्यौ दोषपरिहाराविति कथ न प्रतिबन्दी । किञ्च व्यभिचाराच्चैतन्यं न निवर्तकम्, किन्त्वन्वयव्यतिरेकाभ्या अपरोक्षवृत्तेरेव निवर्तकत्व स्यात् । ननु चैतन्यनिवर्त्यत्वस्य ज्ञानसामान्यविरोधित्वप्रतीतिसिद्धतया उभयोः कारणत्व

कल्पने गौरवात् वृत्त्यन्वयव्यतिरेकौ वृत्तेः प्रतिबन्धकनिराकर्तृत्वेनान्यथा सिद्धाविति चेन्न; — ज्ञानसामान्यनिवर्त्यत्वानुभवासम्भवयोरुक्तत्वात्। किञ्च - अविद्यावरणस्य प्रतिबन्धकत्वकल्पने अपरोक्षवृत्तेरावरणनिवर्तकत्वकल्पने च गौरवम्, तस्मादन्वयव्यतिरेकाभ्यां वृत्तेरेव निवर्तकत्वं न चैतन्यस्य। वस्तुतो ज्ञान सामान्यविरोधित्वप्रतीत्याऽन्वयव्यतिरेकाभ्यां च वृत्तिचैतन्ययोरुभयोरप्यज्ञान निवर्तकत्वम्, नचैवमुभयोः कारणत्वकल्पने गौरवम्, प्रतिबन्धकत्वकल्पने उभयोरेकत्र कारणत्वापेक्षया पृथक् कार्यद्वयकल्पने कार्यतावच्छेदकद्वयकल्पने चातिगौरवात्। किञ्च यदि प्रतिबन्धकमिष्यते, तदा वैपरीत्यं कुतो न स्यात्? ज्ञानसामान्यनिवर्त्यत्वेनावरणमेव प्रतीयते, अविद्या चावरणनिवृत्ति प्रतिबन्धिका — अपरोक्षवृत्तिश्चाज्ञाननिवर्तिकेति नियामकाभावादुभयोरुभयत्र कारणत्वं कुतो न प्रतीपि। नच गौरवम्, त्वन्मते अविद्यानिवृत्तिरात्मैव, आवरणनिवृत्तिरपि स एव, तथा चोभयोरुभयत्र कारणत्वं सिद्धमेव। नच कार्यस्यैकत्वेपि अविद्यानिवृत्तित्वावरणनिवृत्तित्वलक्षणकार्यतावच्छेदकभेदात् कारणद्वयव्यवस्थोपपत्तिः, यस्मिन् सतीत्यादिस्वदभिमतसाध्यत्वपरामर्शे उभयो रप्युभयकार्यतावच्छेदकत्वपर्यवसानात्, नच जडत्वेन वृत्तेरज्ञाननिवर्तकत्वम्, उक्तप्रकारेणावरणनिवर्तकत्वाङ्गीकारे ऽविद्यानिवर्तकत्वस्यापि सिद्धेः, अन्यथा वरणनिवर्तकत्वस्याप्यभावप्रसङ्गाच्च। एकाज्ञानपक्षे च ज्ञानेनाज्ञानं निवृत्त मिति आवरणस्यैव ज्ञाननिवर्त्यत्वानुभवस्य त्वया वक्तव्यतया अहमज्ञ इति ज्ञाननिवर्त्यत्वेन प्रतीयमानमप्यावरणमेवेति युक्तम्। किंच अन्वयव्यतिरेका- भ्यां जडविशेषस्याज्ञाननिवर्तकत्वे को दोषः? अन्यथा घटादिकमपि मिथ्या दण्डमुद्गरादिना न निवर्तेत। ननु तत्र ध्वंसे सत्यपि नात्यन्तिकनिवृत्तिः, कारणात्मनावस्थानात्, अत्र तु आत्यन्तिकनिवृत्तिः प्रार्थ्यत इति चेत्? तर्हि कारणात्मनावस्थाननिवृत्तेरात्यन्तिकनिवृत्तित्वेति नात्र तदर्थं चैतन्यापेक्षा, अविद्यायाः कारणाभावात्। एतेन सूक्ष्मरूपावस्थानिवृत्तिरात्यन्तिकनिवृत्ति रित्यपि प्रत्युक्तम्, तत्र मानाभावाच्च।

यच्च तेन चिदुक्तम्, पदार्थविध्वंससाक्षिज्ञानस्य निर्विकल्पकसमान योगक्षेमतया न तदभावग्रहः, निर्विकल्पकसाक्षिज्ञानस्याज्ञानसाधकत्वात्

तत्प्रतिभासे न प्रतियोगिज्ञानापेक्षा? ज्ञानविरोधित्वप्रकारकाज्ञानप्रतिभासे च तदपेक्षायामपि साक्षिभासस्य तत्प्रतिभासस्य सम्भवेनानुपपत्त्यभावात् ; किञ्च इदमहं न जानामीत्यज्ञानावभासस्त्रिपुटीप्रत्यक्षरूपस्साक्षात्क्रियत एव, आश्रयविषयाज्ञानानां त्रयाणामप्येकेन साक्षिणावभासनात् ; यथा प्राभाकरमते घटमहं जानामीति त्रिपुटीप्रत्यक्षे त्रयावभासेपि न वेद्याद्यवभासस्य पृथक् तद्धेतुत्वम् , त्रयाणामेकवित्तिवेद्यत्वेन एकावभासे इतरावभासस्य हेतुत्वाभावात् , एवमज्ञानाश्रयविषयाणां त्रयाणामपि साक्षिरूपैकवित्तिवेद्यत्वात् अवच्छेदकविषयावभासस्य न पृथक् तद्धेतुत्वम् ; एका भगवती वित्तिश्चेदुभयमावेदयति तदा को विरोध., अनुभवमूलकत्वाद्विरोधकल्पनाया , विषये भासमान एवाज्ञानस्यापि भासमानत्वात् तदभाने ऽभासमानत्वादन्वयव्यतिरेकाभ्यामवच्छेदकविषयभानमज्ञानमानानुग्राहकत्वान्न तद्भानं विरुणद्धि, ज्ञानाभावश्च न प्रत्यक्ष , तस्यानुपलब्धिप्रमाणगम्यत्वात् , साक्षिवेद्यत्वाभावाच्च , अभावज्ञाने तु फलीभूतज्ञानातिरिक्तस्य धर्म्यादिज्ञानस्य कारणत्वं क्लृप्तम् , जन्यविशिष्टज्ञानत्वात् , अज्ञानप्रत्यक्षस्य साक्षिरूपत्वेनाजन्यत्वात , अन्यथा सप्रकारकेश्वरज्ञानेपि विशिष्टज्ञानत्वात् विशेषणज्ञानादिसापेक्षत्वप्रसङ्ग , तस्मादज्ञानावच्छेदकविषयज्ञानाज्ञानाभ्यां नाज्ञानज्ञानानुपपत्ति , नापि विरोधनिरूपकज्ञानस्य ज्ञानाज्ञानाभ्यामज्ञाननिरूपणस्य दुर्घटत्वम् , ज्ञानत्वप्रत्यासत्त्यातीतानागतसकलज्ञानस्यानुभूतत्वेन तस्य चाज्ञानप्रत्यक्षकालेऽसत्त्वेपि अतीतघटस्मरणवत्तत्स्मरणसम्भवात् स्मृततादृशज्ञानविरोधित्वमज्ञाने गृह्यते, बाधकाभावात् , ज्ञानस्यैवाज्ञानविरोधित्वेन तत्स्मरणस्य तद्विरोधित्वाभावात् , तस्मात् भासमानेऽज्ञाने स्मृतज्ञानविरोधित्वग्रहोऽस्तु ; तस्मात् ज्ञानविरोधित्वप्रकारकाज्ञानप्रत्यक्षेपि नानुपपत्तिरिति,– तन्न, निर्विकल्पकसमानयोगक्षेमस्य साक्षिणो विरोधप्रतीतिहेतुत्वे ऽभावप्रतीतावपि किं तथा नाङ्गीक्रियते ? प्रतियोगितावच्छेदकप्रकारकज्ञानस्याभावधीहेतुत्वेन क्लृप्तत्वात् कथं तदभावेऽभावप्रत्यक्षमिति चेन्न,– विरोधित्वग्रहेपि तुल्यत्वात् । तथापि ज्ञानसामान्यविरोधप्रतीत्यनुपपत्तेश्च । सविषयत्वावभासस्य च त्रिपुटीप्रत्यक्षत्वप्रयोजकत्वे इच्छादिप्रत्यक्षेपि तथा प्रसङ्गात् । अनुपपत्त्याऽज्ञानप्रत्यक्षे तथा कल्पने ऽभावप्रत्यक्षेपि किं तथा नाङ्गीक्रियते । अभावप्रत्यक्षे प्रति

योगितावच्छेदकप्रकारकज्ञानस्य कारणत्वेन क्लृप्तत्वात् तदभावे कथमभाव प्रत्यक्षमिति चेत्; विशिष्टज्ञानमात्रे विशेषणज्ञानस्य कारणत्वेन क्लृप्तत्वात् तदभावे कथं विषयविशिष्टाज्ञानभासः? विशिष्टज्ञानमात्रस्य विशेषणज्ञानजन्यत्व नियमाभावेऽपि सम्बन्धिकपदार्थप्रत्यक्षे सम्बन्धिज्ञानस्य कारणत्वात्; ज्ञानसा-मान्यविरोधाद्यनुपपत्तेश्च । यदि चाज्ञानसाधकस्य तदविरोधित्वात् ज्ञानसा-मान्यविरोधित्वमेव नेत्युच्यते, तदा विषयसामान्यावच्छेद[क]प्रतीत्यनुपपत्तिः; ज्ञानविशेषविरोधित्वे च त्वदुक्त एव प्रतीतिव्याख्यानप्रसङ्गः; अनुपलब्धिगम्यत्वे ऽप्येष एव प्रसङ्गः; तस्माद्विशिष्टज्ञाने विशिष्टवैशिष्ट्यज्ञाने ससम्बन्धिकपदार्थज्ञाने वा विशेषणज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानस्य सम्बन्धिज्ञानस्य वा कारणत्वात्साक्षिणाऽज्ञानग्रहे त्रिपुटीप्रत्यक्षकथनं मुधैव । अङ्गीकारे विशेषणज्ञानाद्यभावे विशिष्टज्ञानाद्ययोगात्, अन्यथा इच्छादेरपि तथा प्रसङ्गात् । ज्ञानस्य तु स्वप्रकाशत्वाद्विषयं विषयीकुर्वत् ज्ञानं भास-मानमेवोदेतीति न तत्र प्रतियोगिज्ञानापेक्षा । एवमपि रहस्यं न जानामीत्यादि वाक्यात् यदा अज्ञानं ज्ञायते, तदा रहस्यादिपदैस्तदर्थज्ञानात् उक्तपरिहारासम्भव एव । यदत्रोक्तम् — रहस्यं न जानामीत्यादिवाक्यात् न स्वनिष्ठाज्ञानधीरन्तःकरणवृत्तिरूपा, किन्तु शुक्तिकायामिदं रजतमिति वाक्यादिवाविद्यावृत्तिरेव, भ्रमवदज्ञानस्यापि प्रमाणवृत्तिविरोधित्वात्, इति, तन्न, अभावस्यापि सप्रतियोगिकस्य तथैवाविद्यावृत्तिविषयत्वस्य सुवचत्वात्, अविद्यावृत्तिरपि तद्विषयकाज्ञानज्ञानविरोधिन्येव, अन्यथा शुक्तावपीदं रजतमिति वाक्यादविद्यावृत्तौ सत्यामेव इदं रजतं न जानामीति वाक्यात्तदज्ञानधीप्रसङ्गात् । अज्ञानस्य प्रमाणवृत्तिविरोधित्वे च परोक्षप्रमाणोच्छेदः, परोक्षज्ञानस्याप्यज्ञाननिवर्तकत्वं वा स्यात् । चन्द्रं न जानामीति प्रत्यक्षेण गृह्यमाणविषयकाज्ञानानुमाने च कथमयं परिहारः । तत्र च ज्ञानविशेषाभावविषयत्वे सर्वत्र तथा स्यात् । यच्च 'नापि विरोधनिरूपकज्ञानस्ये' त्यादि; तदप्यसङ्गतम्, ज्ञानस्मरणस्यापि ज्ञानत्वेन ज्ञानसामान्यविरोधप्रतीत्यसम्भवात्; घटस्मरणे सत्यपि घटं न जानामीत्यनुभवाभावात् । यच्च 'अज्ञानस्य नित्यसाक्षिवेद्यत्वान्न प्रतियोगिज्ञानाद्यपेक्षे' ति, तन्न, न जानामीत्यनुभवस्य कादाचित्कत्वप्रतीति

चाह्ये समाधानाविशेषात्। ततश्च वर यथोपलम्भमुभयमङ्गीकार ।

---

विरोधात्, नित्यसाक्षिवेद्यत्वे इदानीमनुभूताज्ञानस्य पश्चात् स्मरणानुपपत्तेश्च। तदर्थमिदानीमविद्यावृत्त्यङ्गीकारे च धर्म्यादिज्ञानापेक्षातादवस्थ्यात् ।

ननु प्रतियोग्यादिज्ञानविरोधपरिहारयोस्तुल्यत्वे कथ ज्ञानाभाव एवाहमज्ञ इति प्रतीतिविषय इत्युच्यत इत्याशङ्क्याह ततश्चेति। एवमुक्तप्रकारेण भाव रूपाज्ञानाङ्गीकारे तद्विषयादिप्रकाशकसाक्ष्यङ्गीकारे चाभावपक्षोक्तदूषणाना तुल्य तया तत्कल्पनादपि अज्ञानस्याभावत्वेनैवोपलम्भात् ज्ञानाना च विनाशितया करणाधीनतयोपलम्भात् भगवतीं संविदमेवानुरुध्य विशेषणज्ञानाभावादिलक्षण स्याज्ञानस्य करणाधीनसामान्यज्ञानस्य चाङ्गीकार श्रेयानिति भाव.। नन्व भावत्वेनानुभवो ऽसिद्ध एव, अधर्म इत्यादाविव विरोधिन एवानुभवात्, अन्यथा वायौ पृथिव्यरूपमिति वत् आत्मनि घटाज्ञानमिति बुद्धिप्रयोगौ न स्यातामित्युक्तमिति चेन, ‒ अद्वेषागमनाभोजनाकरणादिशब्दानामनाभासिध्य दोषानावरणादिशब्दाना च लौकिकै परीक्षकैश्चाभावविषयतयाप्रयोगात्, त्व-यापि कार्यानुत्पादप्रयोजकत्वमित्यादि कथमुच्यते । एवं धात्वर्थयोगिनञ. सर्वत्राभावविषये प्रयोगदर्शनादज्ञानमित्यनुभवव्यवहारयोरभावविषयत्वमेव, अस्तु वान्यत्राभावे प्रयोगाभाव, तथापि नास्ति न करोति नेच्छतीत्यादौ आ ख्यातान्वितनञ. अभाववाचित्वमेव दृश्यते, नास्तीत्यस्यापि विरोधिपरत्वे इन्धने सति वह्निमत्यपि देशे वह्निर्नास्तीति प्रतीत्यापत्ते, वह्निनिवर्त्येन्धनस्य तत्र सत्वात्। यदि च नामान्वितनञो विरोधिपरत्वमेवेति त्वयोच्यते, तदुभयविधप्रयोगस्यापि मयि ज्ञान नास्ति मय्यज्ञानमित्यादौ दर्शनादुभयो रैकार्थ्य वक्तव्ये कस्मिन्नर्थे उभयोरैकार्थ्यमिति विचारे कल्पतवादभाव एवे त्युचितम्। यच्च पृथिव्यरूपमिति प्रयोगापादनम्, तद्वायुत्वस्य रूपविरुद्ध तया ऽज्ञानशब्दस्य विरोधिपरत्वेऽपि तुल्यम्। यच्चोक्तमभावत्वमपि भावरूपा ज्ञानस्यास्त्येव, चैतन्ये कल्पितस्य तदभावात्मकत्वात्, यो यदभाव ॥ तद भाव इति व्याप्तेरिति,‒ तन्न, प्रतियोगितावच्छेदकस्यायोन्याभावात्य ताभावत्वे

प्यन्योन्याभावस्य तदत्यन्ताभावत्वाभावात् । ननु घटान्योन्याभावे घटत्व नास्तीति प्रतीतिविषयतया घटत्वात्यन्ताभावरूपत्वं घटान्योन्याभावस्यास्तीति चेत् ? एवमपि घटान्योन्याभावावच्छिन्नप्रतियोगिकान्योन्याभावस्यात्यन्ताभावो घटान्योन्याभाव , नच तदत्यन्ताभावव्यवहारो घटान्योन्याभावावच्छिन्नान्योन्याभावे, येन तत्स्वरूपस्यैव घटान्योन्याभावात्यन्ताभावरूपता स्यात् , तस्यापि घटान्योन्याभावत्वात् । ननु यो यद्भावप्रतियोगिको ऽभाव स भावस्तदत्यन्ताभाव इति विवक्षितम् , तथा च न व्यभिचार , अन्योन्याभावस्य भाव स्वाभावात् , अविद्या च भावरूपेति स्वाभावात्मकाधिष्ठानाभाव इति चेन्न,— व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगिनि तदत्यन्ताभावत्वाभावेन व्यभिचारात् । य प्रतियोगिविरोधियद्भावप्रतियोगिको ऽभाव स भाव तदभाव इति निरूक्षितम् , विरोधित्व च यद्यपि न प्रतियोग्यनधिकरणाधिकरणत्वम् , व्यधिकरण धर्मावच्छिन्नाभावप्रतियोगिनि व्यभिचारात् , ब्रह्मणि निराश्रये तादृशविरोधित्वस्याभावाच्च , तथापि प्रतियोग्यधिकरणानाधिकरणत्व तद्विवक्षितम् , नचैव सत्याकाशस्य स्वात्यन्ताभावाभावत्वाभावप्रसङ्गो दोष , इष्टत्वात् , केवलान्वयिधर्मलक्षणेपि वृत्तिमत्पद व्यर्थमेव अथवा प्रतियोगिविरोधीति स्थाने प्रतियोगितासमानाधिकरणधर्मावच्छिन्नत्व विवक्षितम् , तेन न कोपि दोष , क्वचित् वृत्तिप्रयोजकसम्बन्धावच्छिन्नाभावविवक्षया च न समवायावच्छिन्नाभावप्रतियोगिनि वाच्यत्वे व्यभिचार , इति चेन,— पटाभावस्य स्वस्मिन् घटाभाव व्यवहारजनकतया घटाभावत्वात्तत्प्रतियोगिनि घटे पटाभावाभावत्वाभावाद्व्यभिचार । अधिकरणान्तरे ऽभावव्यवहारालम्बन यो भावप्रतियोगिकाभाव इति चेद्विवक्षित, न तर्हि ब्रह्माविद्याभाव , अधिकरणान्तरे भावव्यवहारानालम्बन स्यात् । तथाच नाविद्यापि ब्रह्मणो ऽभाव । किञ्च ब्रह्मणो ऽविद्याभावत्वाभावाच्च न तन्मूलमविद्याया ब्रह्माभावत्वम् , अधिष्ठानस्याध्यस्ताभावात्मकत्वस्य निरसिष्यमाणत्वात् । किञ्च यद्यध्यस्तमधिष्ठानाभाव , तर्ह्यन्त करणस्यापि तदध्यस्ततया तस्यैवाज्ञानप्रतीतिविषयत्वप्रसङ्ग , ज्ञानेनाज्ञान निवृत्तमित्यनुभवश्च प्रागभावविषय , तदुपपत्तिश्च वक्ष्यते किञ्च किमध्यस्ततयाधिष्ठानाधिकरणकाभावव्यवहारालम्बनत्वम् , अन्याधिकरणाभावव्यवहारालम्बन

त्तेम्, स्वाधिकरणे ज्ञानव्यवहारालम्बनत्वं वा ? नाद्य, अध्यस्तस्याधिष्ठानाभिन्नतया तदधिकरणत्वाभावेन तादृशव्यवहारविषयत्वासम्भवात् । न द्वितीय, अहमज्ञ इति व्यवहारविषयत्वाभावप्रसङ्गात् । न तृतीय, इदं रजतमिति रजताध्यासदशायामिदमिह नेति प्रतीत्यापत्तेः, इदम्पदार्थस्याधिष्ठानतया तदभावात्मकरजतस्य तत्र सत्त्वात् । नच यदज्ञानादध्यासस्तदवच्छिन्नाभावात्मकत्वमेव तस्य, ततश्च शुक्तिरिह नेति प्रतीतेस्तत्त्वेन रजतस्य शुक्त्यभावात्मत्वेपि न विरोध इति वाच्यम्, प्रकाशाशस्यावरणाभावात्, आवृतानन्दांशस्य चैतत्प्रतीतिविषयत्वासम्भवात् । प्रकाशाशावरणं चानभिमतमेव, अधिष्ठानस्याप्यप्रकाशेनाध्यासस्यैवानुपपत्तेः, अहमिति प्रकाशविरोधाच्च । किञ्च – प्रतियोगितावच्छेदकावच्छिन्नज्ञानमभावज्ञानकारणमिति त्वयैवोक्तम्, ज्ञानाभावत्वेन च प्रतीते ज्ञानत्वं प्रतियोगितावच्छेदकं वक्तव्यम्, प्रतियोगिविषयसाक्षिणोपि ज्ञानत्वात्तस्मिन् सति कथं तदभावः ? स्वयम्प्रकाशतया तस्मिन् प्रतीयमाने च कथं तदभावज्ञानम् । ननु चैतन्यरूपसाक्षिणश्चैतन्यावृत्तेस्तत्र तदभावसम्भवतीति चेन्न,– विरोधितयाभिमतप्रत्यक्षस्यापि चैतन्यरूपतया चैतन्यावृत्तेस्तत्प्रत्यक्षदशायामपि तदभावसत्त्वप्रतीत्योरनिवार्यत्वप्रसङ्गात् । तत्र वृत्त्यवच्छिन्नचैतन्यस्य तद्वृत्तित्वात्तु तदभाव इति चेत् ? तर्हि किं प्रतियोगिज्ञानत्वेनाभिमतस्साक्षी वृत्त्यवच्छिन्न, उततदनवच्छिन्न ? आद्ये पूर्वोक्तदोषानतिवृत्ति । न द्वितीय, तस्य व्यवहारानङ्गस्य निर्विकल्पकतया भावज्ञानहेतुत्वासम्भवात् । तथासति घटमजानतोपि साक्षिरूपज्ञानसत्त्वात् घटो नास्तीति प्रतीत्यापत्ते । नच भावभिन्नाभावस्यैव प्रतियोगितावच्छेदकप्रकारकज्ञानाधीनज्ञानत्वम्, नैवं गौरवम्, घटाभावाभावस्य घटस्य घटाभावं विना ग्रहणाभावप्रसङ्गादिति वाच्यम्, – घटाभाव इति ज्ञानाभावे घटाभावाभावत्वेन ज्ञानाभावेनाभावत्वेन ज्ञाने तादृशस्य कारणत्वकल्पनात् । किञ्च प्रतियोगिनस्स्वाभावाश्रयत्वं नास्तीति वदतस्तव अज्ञानरूपस्वाभावाश्रयत्वकथनं ब्रह्मणो विरुद्धमेव, , यथाचैतत्तथोत्तरत्र वक्ष्यते । अभावत्वे न कथं धर्मिनिर्णय ? ननु ज्ञानसामान्यविरोधित्वनिर्वाहाय भावविषयत्वे लाघवाच्च भाव एवाज्ञानमिति चेत् ? किमहमज्ञ इति ज्ञानसामान्यविरोधित्वं प्रतीयते,

तन्निर्वाहाय भावरूपत्वं कल्प्यत इति विवक्षितम् , उत सामान्याभावत्वादेव तन्निर्वाहाय ज्ञानसामान्यविरोधित्वं वाच्यम् , तन्निर्वाहाय भावरूपत्वमिति ? नाद्यः, धर्मिप्रतियोगिज्ञानयोरसत्त्वेन ज्ञानसामान्यविरोधित्वप्रतीतेरसम्भवात् । त्वदुक्तज्ञाननिवर्त्यत्वाख्यधर्मविरोधश्च निरस्त एव । किञ्च भावरूपाज्ञानस्याहमज्ञ इति ज्ञानविरोधित्वेन प्रतीत्यङ्गीकारे भावरूपाज्ञानमेव ज्ञानाभावात्मनानुभूतम् इति त्वदुक्तिविरोधश्च । नन्वभावत्वप्रतीतिरपि विरोधविषयैव, अन्यथा ऽभावज्ञानस्य प्रतियोगिज्ञानविरोधित्वानुपपत्तेरिति चेन्न,— अभावत्वेन प्रतीतेरेव प्रतियोगिज्ञानविरोधित्वात्, त्वदभिमतविरोधज्ञानस्य प्रतियोगिज्ञानविरोधकत्वेपि नास्त्येव । वैयधिकरण्यात्मकविरोधेपि न नियमेनात्यन्ताभावप्रतीतौ विषयः, वैयधिकरण्यस्य तदधिकरणानधिकरणत्वरूपत्वे तदधिकरणानधिकरणत्वस्यच तदधिकरणाधिकरणात्यन्ताभावात्मकत्वे तदधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वात्मकत्वे च विरोधघटकात्यन्ताभावप्रतीतेरपि तद्विरोधघटकात्यन्ताभावविषयत्वे विरोधात्यन्ताभावानवस्थाप्रसङ्ग । तदधिकरणाधिकरणान्योन्याभावाधिकरणत्वात्मकत्वे च त्वदुक्तन्यायेनान्योन्याभावेपि विरोधभानावश्यकत्वे विरोधान्योन्याभावयोरनवस्थाप्रसङ्ग । वैयधिकरण्यस्य तदनधिकरणाधिकरणत्वात्मकत्वे तदनधिकरणाधिकरणत्वस्य च तदत्यन्ताभावाधिकरणाधिकरणत्वात्मकत्वे ऽभावप्रतीते विरोधविषयत्वोपवर्णनस्य व्यर्थत्वात् । तदभावनद्वृत्तित्वज्ञानस्य हि प्रतियोगिज्ञानविरोधित्वं तस्मिन्नधिकरणे तदभावावगाहनात् स्यात् , तत्सामानाधिकरण्याद्यस्य स्वतो ऽविरुद्धत्वात् , तथाच स्वयं प्रतियोगिज्ञानविरोधासमर्थं कथं स्वघटितस्य कस्यचिद्धर्मस्य तद्विरोधसामर्थ्यमापादयेत् , स्वरक्षणेप्यशक्तस्येति न्यायात्, नहि स्वयमेवान्धः स्वहस्तावलम्बाय प्रभवति । तदनधिकरणाधिकरणत्वस्य च तदधिकरणभिन्नाधिकरणत्वात्मत्वे तदधिकरणभेदप्रतीतेरपि विरोधविषयतया तद्घटकभेदान्तरविषयत्वे विरोधभेदयोरनवस्थाप्रसङ्गात् । न द्वितीय , धर्मिप्रतियोगिज्ञानयोस्सत्त्वेन ज्ञानसामान्याभावत्वासिद्धेः । यच्च ' लाघवादि ' ति, तन्न, अक्लृप्तत्वात् कथं लाघवम् ? विशेषज्ञानाभावस्य चाज्ञानानुभवविषयत्वमुपपन्नम् एव । ननु विशेषतो न जानामीति विशेषस्यापि ज्ञातत्वात् कथं तदिति चेन्न , — अविशेष्यभूतविशेषप्रकारकज्ञानाभावस्य विषयत्वसम्भवात् । यत्र च पूर्वं विदित्वा नाज्ञासिषमिति व्यवहरति, तत्र विशेषप्रकारकज्ञानाभावो विषय , यत्र च सहृदयदशाया न जानामीति व्यवहरति, तत्रावधारणाभावो विषय ।

यदि च परोक्षतो ज्ञातेऽपि न जानामीति व्यवहारः, तदा प्रत्यक्षाभावो
विषयः । स्वदुक्त न जानामीत्यादौ तद्वाक्यजन्यज्ञानाभावो विषयः । शा-
स्त्रार्थे न जानामीत्यत्र तज्जन्यज्ञानाभाव एव विषयः । विषयप्रकारकज्ञाना
भावो वा । एवं यथासम्भवं तत्र तत्र व्यवहारस्य विषयो ग्राह्यः । यथा—घटो
ऽस्तीति व्यवहारस्य क्वचिन्नीलघटो विषयः, क्वचित् पीतघटः, क्वचिदन्यः;
यथा च घटाभावव्यवहारे नीलघटाद्यभावो विषयः, तद्वत् । ननु चन्द्रं न
जानामीत्यत्र विशेषज्ञानाद्यभावाद्यविषयत्वमेव, तत्र का गतिरिति चेन्न; —

यद्यपि चन्द्रस्वरूपं चन्द्रत्वं प्रकृष्टप्रकाशश्च विशकलिता ज्ञाताः, प्रकृष्टप्रकाश
श्चन्द्र इति तु ज्ञानं नोत्पन्नमेव, ततश्च अस्मिन् ज्योतिर्मण्डले प्रकृष्टप्रका
शत्वाप्रकृष्टप्रकाशत्वदिग्विशेषस्थत्वादिधर्मा ये ज्ञाता, तदन्यतरधर्मेण सह चन्द्र
पदवाच्यत्वप्रकारकं चन्द्रविशेष्यकज्ञानं मयि नेति वा, एतस्मिन् ज्योतिर्म
ण्डले ऽन्यतरज्योतिर्विशेष्यकचन्द्रत्वप्रकारकसंशयनिवर्तकज्ञानं मयि नेति वा,
चन्द्रं न जानामीति वाक्यार्थः । किञ्च— यदि तत्र चन्द्रस्वरूपाज्ञानमेव, तदा
प्रकृष्टप्रकाशश्चन्द्र इत्युपदेशसहकृतप्रत्यक्षेणाज्ञाननिवृत्त्यनन्तरं कस्सोमस्सोमं न
जानामीति प्रश्नाज्ञानानुभवयोः का गतिः ? तत्र त्वदभिमतस्वरूपाज्ञानस्य
निवृत्तत्वात् । ननु प्रत्यक्षेण चन्द्रे चन्द्रत्वं प्रकृष्टप्रकाशत्वं च गृहीतमेव, चन्द्र
त्वसामानाधिकरण्येन चन्द्रशब्दवाच्यत्वं च गृहीतम्, ततः चक्षुषा तद्घटत्व
सामानाधिकरण्येन रूपनिश्चये तत्सामानाधिकरण्येनैव त्वचा स्पर्शनिश्चये यथा
रूपस्पर्शयोर्न सामानाधिकरण्यसन्देहः, तत्र तदुभयाज्ञानस्य निवृत्तत्वात्,
तथेहापि चन्द्रत्वाज्ञाननिवृत्तौ प्रकृष्टप्रकाशत्वचन्द्रशब्दवाच्यत्वयोस्सामानाधिकर
ण्यसन्देहो न स्यादिति चेन्न, — तत्र चक्षुरुपनीतस्य स्पार्शनज्ञानविषयतया
सामानाधिकरण्यग्रहादेव न संशयः; अत एव रूपस्पर्शौ समानाधिकरणाविति
व्यवहारश्च; प्रकृष्टप्रकाशत्वचन्द्रपदवाच्यत्वयोरुपनयाभावेन सामानाधिकरण्याग्रहा
देव सामानाधिकरण्यसन्देहः, सामानाधिकरण्यव्यवहाराभावश्च, ज्ञानप्रत्यासत्तेः
फलबलकल्प्यत्वात् । किञ्च- वह्निशब्दस्य व्युत्पत्तिमगृहीतवतः वह्नित्वमिति
काचिज्जातिस्तद्वान्वह्निपदार्थ इति ज्ञातवतश्च दूरालौहित्यादिसाधारणधर्मदर्शने सति
वह्नित्वगुञ्जापुञ्जत्वकोटिसंशयो जायते, तदनन्तरं च समीपं गतवत औष्ण्यरूप
विशेषदर्शने सति वह्निज्ञानमस्ति, तदनन्तरं च पूर्ववत् वह्निगुञ्जापुञ्ज

संशयादर्शनात् पाकादिप्रवृत्तिदर्शनाच्च तदवधारणमेव ; अपरोक्षाव धारणत्वादज्ञाननिवर्तकत्वं च, तत्र च इन्द्रियसन्निकृष्टवह्निव्यक्तौ यथा अयं वह्निशब्दवाच्यो नवेति संशयस्तथेहापि स्यात् । किञ्च मीमांसया तत्तद्धर्मान्तर्येषु निर्णीतेष्वपि अयं वृषशब्दवाच्यो नवेति सन्देहो दृश्यते, स न स्यात्, वृषत्ववान् वृषशब्दवाच्य इति निश्चितत्वात्, तस्य च धर्मत्वात्मकस्य अलौकिकश्रेयस्साधने निश्चितत्वात्; नचालौकिकश्रेयस्साधनं वृषशब्दवाच्यमित्यनिश्चयात् तथा सन्देह इति वाच्यम्, धर्मत्वसामानाधिकरण्येन अलौकिकश्रेयस्साधनत्वस्य वृषशब्दवाच्यत्वस्य च ग्रहात्; एवमात्मन्यपि न्यायानुगृहीतशास्त्रेणात्मनि देहातिरिक्तत्वे निश्चितेपि धर्मशब्दाव्युत्पत्तिदशायां धर्मभिन्नो न वेति संशयोपि न स्यात् । किं बहुना, सर्वत्रापि निर्णीतार्थे तत्तच्छापपदविशेषवाच्यत्वादिरूपेण सन्देहस्य सुलभतयावधारणमात्रोच्छेदः । ततश्चाज्ञाननिवृत्तिरपि लोके दुर्लभा । सर्वशास्त्रप्रवृत्तिश्च व्यर्था । किच– कथं चन्द्रत्वस्यानवधारणम् ? संस्थानरूपत्वे रूप्य [व्रत्र्य] जातिविशेषरूपत्वे च तत्र सन्देहाभावात्, उपदेशसहकृतप्रत्यक्षदशायामिव चन्द्रो नवेति संशय दशायामपि इतरव्यावृत्तमण्डलादिसंस्थानविशेषावधारणस्यानुभवसिद्धत्वात्; अन्यथा इतरव्यावृत्तमण्डलादिसंस्थानविशेषेपि अयं तादृशसंस्थानविशेषवानत्वेत्यपि प्रयोगप्रसङ्गात् । किञ्च चन्द्रत्वस्यानवधारणेऽपि अयं चन्द्रश्चन्द्रपदवाच्यश्चेति व्यवहारप्रसङ्गः, चरमसाक्षात्कारात् प्राक्कालीनेनापि अद्वैत वाक्यजन्यानवधारणेन व्यवहारदर्शनात् । अस्तुवा चन्द्रत्वस्यैव ज्ञानाभावः, चन्द्रो नवेति संशयजनकदोषेण प्रतिबन्धात्; दृश्यते हि व्यक्तिग्राहकसामग्रीग्राह्यस्यापि शुक्तित्वस्थाणुत्वादेर्ग्रहणस्य रजतादिभ्रमजनकेन स्थाणुत्वादिसंशय जनकेन च दोषेण प्रतिबन्धः । किञ्च - चक्षुषा उपदेशसहकृतेन अयमशोक इति निश्चिते त्वचा तस्मिन्नेवाशोके चक्षुरसन्निकर्षाभावेऽयमशोको न वेति सन्देहो दृश्यते, अशोको नवेति न जानामीत्यज्ञानानुभवश्च, तत्र कथं भाव रूपाज्ञान विषयः स्यात्, तस्य निवृत्तत्वात् । ननु यत्र विशेषज्ञान कस्यापि नास्ति तत्र कथं विशेषज्ञानाभावस्य विषयत्वमिति चेन्न, तत्रापि विशेषज्ञानस्य ईश्वरे प्रसिद्धत्वात् । नित्येषु न विशेषत्वेन नाशेषु निगेप

स्वादिसामान्यधर्ममात्रप्रकारकज्ञानविषयत्वाभावमहोऽस्तु, ग्रामविशेषं कदाप्यगत वतस्त ग्रामविशेषन्न गतोऽहमिति वत् । ननु यत्र शुक्तिरूप्यादिप्रातिभासिक विषयमेव वाक्यं प्रयुक्तम्, श्रोतुश्च तद्विशेषज्ञान कदापि न जातम्, तत्र का गतिः, ईश्वरस्य भ्रमाभावादिति चेत् ? स्वात्मानमेव पृच्छ, यस्त्वमज्ञानं नाङ्गीकरोषि, अभावविषयत्वं नेच्छसि, मम तु तत्प्रतिपादितेर्थे ज्ञानविषय त्वाभावस्सुगम एव । किञ्च त्वया व्यधिकरणधर्मावच्छिन्नाभावाङ्गीकाराद्विशेष विषयत्वरूपव्यधिकरणधर्मावच्छिन्नस्वज्ञानाभाव एव तथा प्रतीयताम् । सामान्याभावविषयत्वेपि न काचिदनुपपत्तिः । नच धर्म्यादिज्ञाने सति सामान्याभावाभावात् कथं तत्प्रत्यक्षमिति वाच्यम्, ज्ञानसामान्याभावारोपसम्भवात् । नच धर्मिज्ञानाद्यात्मकप्रतियोगिनि भासमाने तदारोपेपि कथमिति वाच्यम्, पदार्थान्तरकल्पनापेक्षया औपाधिकभ्रमत्वस्य कल्पयितु युक्तत्वात् । स्वया अज्ञानावरणविरोधित्वेनोच्यमानज्ञानव्यक्तिविशेषाभावस्यैवोपाधित्वात् । एवञ्च प्रतियोगिनि भासमानेपि न सामान्याभावानुभवविरोधः, चन्द्रैकत्वे भासमानेऽप्यङ्गुल्यवष्टम्भादिना चन्द्रद्वित्वज्ञानवत् । नच बाधकाभावादभ्रमत्वम्, इदानीन्तयैव बाधकस्योच्यमानत्वात् । यदुक्तम् - प्रागभावादीना विषयत्वं नोपपद्यत इति, तन्न, प्रागभावप्रध्वंसयोरतीन्द्रियत्वस्यासिद्धेः । प्राग भावत्वध्वंसत्वप्रकारकप्रतीतिस्तु सामग्र्यादिज्ञाने कपालाद्यवयवधाज्ञानञ्चापेक्षते, अन्वयव्यतिरेकाभ्यां तथा कल्पनात् । अभावत्वेन प्रतीतौ यथा घटस्य प्रतियोगिज्ञानसापेक्षत्वम् । अस्तु वा तेन रूपेणानुमेयत्वम्, अभावत्वेन प्रतीतिस्त्वपरोक्षैव, तथाच यथा मयि सुखत्वान्नास्तीत्यादौ तत्तत्सुखप्रतियोगिका भावसमुदायस्य विषयता तद्वदत्रापि तत्तज्ज्ञानप्रतियोगिकप्रागभावध्वंसात्यन्ता भावसमुदायो विषयः । ननु तत्तदेकव्यक्तिप्रतियोगिकाना प्रागभावध्वंसा त्यन्ताभावानामिवासम्भवात्कथं तथा न प्रतीतिरिति चेत् ? तर्हि शुक्तिरजत भूतले नास्तीति कथं प्रतीतिः ? नहि त्वया सामान्याभावोऽभ्युपेयते । नचैवं सति तत्रापि शुक्तिरजतप्रतियोगिकत्यावरभावाः प्रत्येतु शक्याः, अनिर्वच नीयप्रतियोग्यनधिकरणस्य प्रतियोगिमानमसत्त्वानिर्वचनीयतदभावाधिकरणतया व्यावहारिकतदभावानधिकरणत्वाद्, अधिष्ठानस्यैव व्यावहारिकतदभावत्वे

स्वीकारात् ।, यदिच तत्र तत्तत्प्रतियोगिकानां यावतामभावानामभावेपि तत्त त्प्रतियोगिकैकैकाभावसत्त्वमात्रेण यावता शुक्तिरजतानां अभावसमुदायविषया शुक्तिरजतं नेति प्रतीतिरुपपद्यते, तर्हि प्रकृतेपि तुल्यम्, उभयत्रापि सर्वासां व्यक्तीनां तत्तिंशाभावप्रतियोगित्वप्रतीतेस्सद्भावात् । एतेन प्रागभावादिविष यत्वे ज्ञानसत्त्वेपि ज्ञानान्तराभावमादायाहमज्ञ इति प्रतीतिप्रसङ्ग इत्यादीनि दूषणान्यपास्तानि, यत्किञ्चित्प्रतियोगिसत्त्वेपि उक्ताभावकूटविषयप्रतीत्यसंभवात् ॥ यच्चाभावविषयत्वे घटो न जानातीति प्रयोगस्साधुस्स्यादिति, अत्र बाढमिति ब्रूमः, अर्थसत्त्वादनुशासनविरोधाभावाच्च । नचाप्रयोगादसाधुत्वं वक्तव्यम्, तच्चार्थाभावादेवेति वाच्यम्, ॥ * ॥ घटो नेच्छति न द्वेष्टि न सुख्यति न दुःख्यति । न गच्छति न जागर्ति न शेते नच भाषते । इत्यादावप्यसाधुत्ववस्त्व भावप्रसङ्गत. ॥ * ॥ यदिच तत्र साधुत्वमर्थाभावश्चेष्यते, एवं तर्हि भाव रूपानिच्छादिस्वीकारः प्रसज्येत ? दृष्यत एव द्वेषादिरिति चेन्न; तस्य नेच्छ तीति प्रतीतिविषयत्वे सुषुप्तौ नेच्छतीत्यप्रयोगप्रसङ्गात् । यदिच निषेधस्य प्रसक्तिपूर्वकत्वात् घटादावपीच्छादेरप्रसङ्गात् साधुत्वेपि नेच्छादिनिषेध इति, तर्हि तत एव न ज्ञाननिषेधोपि । यदि विप्रलब्धः कश्चित् कंचित् पृच्छति किं घटो जानातीति, तत्र प्रयुज्यत एवोत्तरं घटो न जानातीति । किंच त्वत्पक्षे घटो न जानातीति प्रयोगप्रसङ्गो दुर्वारः; नच तत्र भावरूपाज्ञाना भावादेवाप्रयोगः, अन्तःकरणेपि तदभावेनाहं न जानामीत्यप्रयोगप्रसङ्गात् ; यदि चाज्ञानाहङ्कारयोरेकचैतन्याध्यासात्तथा प्रयोगः, तदा घटाज्ञानयोरेक चैतन्याध्यासात् तथा प्रयोगस्स्यात्, इयांस्तु विशेषः, मत्पक्षे प्रसक्त्यभावात् निषेधः, त्वत्पक्षे निषेधरूपत्वाभावात् प्रसङ्गाभावेपि स्यादेवेति । यच्च ज्ञान निवर्त्यत्वासम्भवान्न ज्ञानाभावोऽज्ञानमिति, तन्न, ज्ञानेनाज्ञानं निवृत्तमित्यनु- भवस्य रामेण मुक्तवानितिवत् ज्ञानस्यैव निवृत्तित्वेप्युपपत्तेः । "ज्ञानेन तु तदज्ञानं" मिति स्मृतौ अज्ञानशब्दस्य दुष्कर्ममिथ्याज्ञानपरत्वात् । किंच अस्याः स्मृतेरज्ञाने ज्ञाननिवर्त्यत्वपरत्वेप्यहमज्ञ इति प्रत्यक्षस्य भावरूपाज्ञान विषयत्वं कुतः सिध्येत्? तस्मादभावविषयत्वे न किंचित् बाधकम् ।

स्वप्रागभावव्यतिरिक्तेति वदता त्वयापि अभावरूपमज्ञानं व्यवच्छेद्यतया स्वीकृतम् । नापि द्वितीयः, अनुपलम्भात् । मुग्धोऽस्मीत्यादिरूप उपलम्भ उक्त इति चेन्न; — तस्यापि ज्ञानविरोधमन्तर्भाव्यैव प्रतीतेः । इतरथा ज्ञानविरोधित्वे प्रमाणाभावात् । अतः प्रध्वंसप्रलयविनाशावसानादिशब्दवत्तदर्थगर्भवाक्यार्थव्युत्पन्ना एव मोहादिशब्दाः । नन्वनुपलम्भमात्रेण तु स्वरूपतो निरूप्यत्वभ्रमो बालकानाम् । यच्च सर्वैः प्रमाणैर्ज्ञानाभावप्रतीतिर्न स्यादिति ; तदप्यसत्, तथा सति ज्ञानाभावाभावेन मानज्ञानानां नित्यत्वप्रसङ्गात् । स्वप्रागभावेत्यादि च व्यर्थम्, अज्ञानं च न कदाचिदपि स्यात् । अतस्सिद्धं भावरूपमज्ञानं न प्रत्यक्षसिद्धमिति ।

---

एवं विरोधपरिहारयोस्तुल्यत्वेऽपि अभावत्वेनानुभवबलाद्भाव एवाज्ञानमित्युक्तम्, इदानीं कल्पनालाघवाभ्यां भाव एवाज्ञानमित्याह स्वप्रागभावे ति । अनुपलम्भादि ति । स्वरूपमात्रविषयकस्याज्ञानानुभवस्यानुपलम्भादित्यर्थः । अभावत्वप्रतीतेस्तेनाङ्गीकाराद्विरोधित्वेन न भातीति द्वितीयस्य विकल्पशिरसस्स्वरूपमात्रभानपर्यवसानात् । तेन सिद्धान्ते ज्ञानाभावत्वेन प्रतीतेः विरोधविषयत्वाभावात् विरोधाविषयकोपलम्भानिराकरणमनुपपन्नमिति न चोदनीयम्, स्वरूपेणोपलम्भस्यैव निराकरणात् । ने ति । त्वया प्रमाभावविषयत्वमनङ्गीकुर्वता ऽज्ञानप्रतीतिर्ज्ञानविरोधविषया वक्तव्या, अन्यथा अज्ञानानुभवस्य ज्ञानानुभवविरोधाभावप्रसङ्गात्, इत्यर्थः । नन्वज्ञानं विषयावच्छिन्नमेवानुभूयते, तेन विरोधित्वेन प्रतीत्यभावेऽप्यभावानुभव इवाज्ञानानुभवो ज्ञानानुभवविरोधी स्यादित्यत्राह इतरथे ति । विरोधित्वस्याभाने इत्यर्थः । ननु कथं विरोधता ऽप्रामाणिकत्वम्, ज्ञानदशायामज्ञानाभावस्य गृहीतुं शक्यत्वात्, अज्ञानेऽपि ज्ञानविरोधस्यानुमानादिना ग्रहणसम्भवाच्चेत्युक्तमिति चेन्न; — तदानीं योग्यानुपलब्धिमात्रेणाज्ञानाभावग्रहणासम्भवात् । प्रतियोग्युपलम्भकसामग्रीमन

यथार्न इ योग्यता। नच ज्ञानदशायामियमस्ति, समानाकारसत्ता निश्चयस्यैव तदा प्रतिबन्धकत्वात्। तथा सौम्रभाप्रतिबन्धाच्चान्द्रप्रभेर समानाकार सत्तानिश्चयप्रतिबन्धात् परोक्षस्थले नाज्ञानमवभासत इत्युक्तत्वात्; परोक्षस्थले व्यभिचाराच्च। नच प्रत्यक्षेण व्याप्तिः, चन्द्रप्रत्यक्षे व्यभिचारात्। नच प्रत्यक्षावधारणेन व्याप्तिः, ज्ञानसामान्यविरोधप्रतीत्यनुपपत्तेः। तथा सत्यव धारणाभावस्यैव न जानामीति प्रतीतिविषयत्वापत्तेश्च। अज्ञानज्ञानेपि परोक्ष ज्ञानज्ञानप्रसङ्गश्च। नचात्र व्यतिरेकसहचारग्रहेणापि व्याप्तिग्रहणसम्भवः, तस्यापि ज्ञानाभावात्मकसम्बन्धव्यसन्निकर्षे व्याप्यग्राहकत्वात्। तत्सन्निकर्षस्य च व्यापा तेनासम्भवात्। किञ्चाभावज्ञानविरोधिज्ञानयोरेव लोके प्रतिबन्धकत्वदर्शना त्तदन्यस्य प्रतिबन्धकत्वकल्पनमनुपपन्नम्। नन्वभावविषयत्वस्यासम्भवादज्ञान ज्ञाने ज्ञानज्ञानप्रतिबन्धदर्शनाच्च प्रतिबन्धकान्तरं कल्प्यत इति चेन्न,- विरो धिविषयत्वेनापि प्रतिबन्धकत्वोपपत्तेः। वस्तुतः अभावविषयत्वे उपपत्तिः प्रदर्शितैव।

यदुक्तं सुप्तोत्थितपरामर्शसिद्धसौषुप्तिकप्रत्यक्षविषयो भावरूपाज्ञानमिति; तदसारम्, साक्षिणा विषयव्यावृत्तस्यैवाज्ञानस्य सुषुप्तावनुभवे विषयव्यावृत्तमेव सुप्तोत्थितेन परामृश्येत। स्मर्यते एव न किञ्चिदहमवेदिषमितीति चेन्न;- घटत्वादिविशेषरूपेण प्रतीतेरापादनात्। नन्वत्रापादकाभाव इति चेत्! तदानीं विशेषाकारानुभवस्यावश्यकत्वात्, अन्यथा सुप्तोत्थितस्यापूर्ववस्तुदर्शने सति स्वप्ने इदमहं नावेदिषमिति परामर्शाभावप्रसङ्गात्। यदिचानुमानात्स- ज्ञानम्, तदा इतरज्ञानाभावोपि तथैवानुमीयताम्।

यच्चोक्तम्- अज्ञानाकारविश्राङ्केस्सुषुप्तौ विनाशात् संस्कारसम्भव इति; तन्न, वृत्तिनाशातिरेकेण विशिष्टनाशाभावात्। नच वृत्तिनाश एव हेतुः, घटानुभवात् पटसंस्कारोदयप्रसङ्गात्। नच समानविषयसंस्कारहेतुत्वं वृत्ते रिति वाच्यम्, वृत्तेर्निर्विषयत्वात्। अन्यथा वृत्तेरेव व्यवहारोपपत्तौ तद तिरिक्तप्रकाशकल्पना निरुध्येत।

यच्च- सौषुप्तिकाज्ञानसाक्षिणो धर्म्यादिज्ञाननैरपेक्ष्यमुक्तम्; तदपि न, संस्कारार्थमविद्यावृत्त्यङ्गीकारात्, तस्याश्च जन्यतया धर्म्यादिज्ञानसापेक्षत्वात्।

यच्च– सुषुप्तावज्ञानानुभवेऽपि जागरण इवाहमशो घट न जानामीति नानुभूयते, तदानीमज्ञानसाक्षिण सविकल्पकापादकाहङ्कारस्याभावेन तथानुभवादिति, तदपि न, तथानुभवाभावे हि तथा स्मरणमपि न स्यात् ।

तस्मात् भावरूपाज्ञान सौषुप्तिकप्रत्यक्षविषय । कथ तर्हि सुप्तोत्थितस्य न किञ्चिदहमवेदिषमिति परामर्श ? न कथञ्चिदपि, तस्यानुमानादेव सिद्धे । तथाहि– अह पूर्वं ज्ञानाभाववान् तत्काले सुषुप्तिमत्त्वात्, सम्प्रतिपन्नवत्, इत्यनुमानम् । अत्र यदुक्त – अहमर्थमात्रस्य पक्षत्वे जाग्रत्कालीनाहमर्थे ज्ञानी बाध इति, तन्न, जाग्रत्कालीनस्यैव सुषुप्तिकालीनतया तत्र साध्यसत्त्वे नागतो बाधाभावात् । अन्यथा पर्वते वह्न्यनुमानमपि बाध्येत, कालान्तरे तत्र तदभावसत्त्वात् । यदि च तत्र कालविशेषे वह्न्यभावग्रहो वह्निसम्बन्धमानानुमितौ न प्रतिबन्धक इति मन्यसे, तर्हि जाग्रत्काले तदभावग्रह कालान्तरावच्छेदेन साध्यसिद्धौ न विरोधीति तुल्यम् । यदि च तत्कालीनपर्वतस्यैव पक्षतेत्युच्यते, तदा पर्वते वह्निमत्त्वानुमितावपि इदानीं पर्वते वह्निर्विद्यते नवेति संशयस्य सत्त्वेनाज्ञानावश्यकतया परोक्षज्ञान तन्निवर्तकमिति स्ववचनव्याघात । लौकिकज्ञानाभाव एव साध्य इति न साध्य उक्तदूषणावकाश । नच हेतोरसाध्याविशेष, सुषुप्ते ज्ञानाभावातिरिक्तत्वात् । करणव्यापारोपरमहेतुभूतविकारविशेषो हि निद्रा, निद्रातारतम्यात् करणव्यापारतारतम्यदर्शनात् । उपक्रमावस्थाया किञ्चिद्विषयानुभवेन सहैव निद्राया अनुभूयमानत्वाच्च ज्ञानाभावातिरिक्तैव निद्रा । तद्विशेष एव च सुषुप्ति, तथैव व्यवहारात् । मूर्च्छामरणाद्यवस्थायास्सुषुप्त्यपेक्षया पृथगुपदेशाच्च । मूर्च्छाद्यवस्थायामपि ज्ञानाभावस्य सत्त्वात्, मोक्षस्यापि सुषुप्तित्वप्रसङ्गाच्च । नन्वेवमतिनिद्राया करणव्यापारोपरमे निद्रानुभवस्याप्यसम्भवे सुप्तोत्थितस्य कथ तत्पूर्वकालीननिद्राज्ञानमिति चेन्न,– अङ्गलाघवविशेषादिना तदनुमानात्, यथा स्वानुभवसाक्षिक ज्वरावस्थाविशेषेण ज्वराभावानुमानम् । नन्वेवमपि कथ व्याप्तिग्रह, निद्राङ्गलाघवयोस्सहचाराग्रहादिति चेन्न, – उत्थित प्रति कश्चिदाह त्वमेतावत्कालं निद्रित इति, उत्थितस्तु तत एव जानाति स्वानुभवसिद्धाङ्गलाघवादेर्निद्रोत्तरकालीनत्वव्याप्तिम् । नन्वेवमपि निद्राज्ञानाभावयो कथ व्याप्ति

ग्रहणमितिचेन्न; उपदेशादिना तदुपपत्तेः। नन्वेवं प्रबुद्धस्य सुषुप्तिसाधारणलौकिकज्ञानाभावानुमानेऽपि सुषुप्तिकालीनयावज्ज्ञानाभावानुमानं न सम्भवतीति चेन्न; — लाघवातिशयेनातिशयितनिद्रात्मकसुषुप्त्यनुमानात्, तया यावज्ज्ञानाभावानुमानसिद्धेः। उपदेशादिना चातिशयितनिद्राया ज्ञानाभावव्याप्तिग्रहणम्। यद्वा, निद्रारम्भावस्थायां पञ्चपार्थविषयज्ञानं दृश्यते, तदुत्कटावस्थायां च किंचिज्ज्ञानभ्रंशे त्रिचतुरविषयकज्ञानं दृश्यते, तदुत्कटावस्थायां च द्वित्रविषयकम्, तदुत्कटावस्थायां च एकविषयकम्, निद्रातारतम्येन लाघवतारतम्यं च दृश्यते, तथाच प्रबुद्धस्य उत्कटतरलाघवेन अत्युत्कटनिद्रायामनुमितायाम्, अत्युत्कटनिद्रा पूर्वावस्थायां विद्यमानज्ञानभ्रंशहेतुः, तदवस्थापेक्षया उत्कटनिद्रात्वात्, तत्पूर्वकालीनोत्कटनिद्रावदिति तदानीं विद्यमानज्ञानाभावस्य सिद्धौ, सर्वाभावसिद्धिः। यद्वाङ्गलाघवविशेषस्य ज्ञानाभावव्याप्यत्वग्रहः स्तन्यपानेष्टसाधनत्वग्रहवत् प्राग्भवीयसंस्कारैः प्रवाहतोऽनादिरेव। यद्वा उत्तरीत्याङ्गलाघवेन सुषुप्तौ सिद्धायां जाग्रदवस्थायां सुषुप्त्यभावस्यानुभवात् तदानीं यत्किंचिज्ज्ञानानुभवेन ज्ञानाभावसमुदायाभावस्य ग्रहीतुं शक्यत्वात्; व्यतिरेकसाहचारदर्शने व्यतिरेकव्याप्तिग्रहादन्वयव्याप्तिग्रहाद्वा निखिलज्ञानाभावानुमानमुपपद्यते। यद्वा इन्द्रियप्रसादेन तदुपरमानुमानात् ज्ञानाभावानुमानम्।

यदुक्तम् — शोभनस्वप्नदर्शनादपि मनःप्रसादस्य सम्भवनान्यथासिद्धिरिति; तन्न, स्वप्नदर्शनाजन्यप्रसादविशेषस्य स्वानुभवसाक्षिकस्य लिङ्गत्वात्। बहुव्यापृतस्य हस्तादेरुपरमाधीनप्रसादनियमदर्शनात् तादृशप्रसादेन इन्द्रियोपरमानुमानात्। यद्वा स्मर्तुं योग्यस्यास्मरणात् तत्तुल्ययोगक्षेमात्मादौ स्मर्यमाणे सत्यस्मर्यमाणत्वाद् वा सकलज्ञानाभावानुमितिरस्तु। नच द्वितीयहेतौ विशेषणासिद्धिः, आत्मनः स्मर्यमाणत्वासिद्धेरिति वाच्यम्, — आत्मनस्सुषुप्तावनुभवाङ्गीकारेण स्मरणोपपत्तेः। नच जन्मकाले ज्ञानस्यास्मर्यमाणत्वमसिद्धमिति वाच्यम्, तत्कालीनतया अस्मर्यमाणत्वस्य लिङ्गत्वात्। नच सुषुप्तिकालस्य ग्रहणासम्भवः, पूर्वजागरणोत्तरजागरणमध्यकालस्यानुमानादिना ज्ञानसम्भवात्। नच हेतुद्वयेऽप्यनुभूतस्मरणनियमाभावाद्व्यभिचारः, पथि स्पृष्टतृणादेरनुभवेऽपि तत्तुल्ययोगक्षेमभूम्यादौ स्मर्यमाणेऽपि अस्मरणादिति वाच्यम्, तत्र स्मर्तुं योग्यत्वस्य तत्तुल्ययोगक्षेमत्वस्य चाभावात्। पृथुपरिमाणत्वदर्शनीयत्वभयानकत्वाद्भुतत्वादयो हि यथानुभवं तत्र योग्यता। तुल्ययोगक्षेमत्व

च उक्तधर्मे स्मर्यमाणवैजात्यम् । नन्वेवं सिध्यतु योग्यपर्वतानुभवादिः, ज्ञानाभावमात्रं कुतस्सिध्येदिति चेन्न;— उक्तयोग्यताविशिष्टानां सन्निहितपदार्थानामननुभवे सिद्धे तेनैव क्षुद्रपदार्थाननुभवानुमानसम्भवात् सर्वाज्ञानसिद्धेः । लोकव्यवहारसिद्धं चास्मरणलिङ्गम् । लोके हि केन चित् किमयमर्थस्त्वया दृष्ट इति पृष्टः कश्चित् कञ्चित् कालम्मनःप्रणिधाय नाहं तत्स्मरामि - अतो नानुभूतमित्याह, अतः स्मरणाभावस्य लोकव्यवहारसिद्धमेव लिङ्गत्वम् । किंच नहीदं शास्त्रानुमानम्, किन्तु लौकिकानुमानमेव; न च तस्य व्याप्तिनिर्धारणमात्रादसिद्धिः, तथा सति सौरभ्यविशेषेण मल्लिकाद्यनुमानाभावापातात् । किञ्च — सुप्तोत्थितस्य पूर्ववस्तुदर्शने सति एतावन्तं कालमिदमहं नावेदिषमिति परामर्शो नाज्ञानविषयः, एतद्वस्तुन इदानीं प्रतीयमानविशेषरूपेणाज्ञानावच्छेदकतया साक्षिणा अप्रतीतेः, अन्यथा जन्मप्रभृत्यामरणं यद्विशेषावच्छिन्नवस्त्वनुभवो नास्ति तद्विशेषावच्छिन्नतद्वस्त्ववच्छिन्नतयाऽज्ञानस्य परामर्शापत्तेः । ननु तत्र सर्वविषयाज्ञानेनैव तादृशविशेषज्ञानाभावोऽनुमीयत इति चेन्न; — अज्ञानं हि ज्ञानविरोधित्वेन प्रतीयत इत्युक्तम्, निवर्त्यत्वमेव च विरोधित्वमित्युक्तम्, तच्च निवर्त्यस्य स्वरूपयोग्यतैव, फलोपधानस्य तदानीमभावेनाग्रहणात्; नच ज्ञाननिवर्त्यत्वयोग्यं ज्ञानाभावव्याप्यम्, स्वन्मते ज्ञाननिवर्त्यत्वयोग्याविद्यायामपि प्राथमिकब्रह्मसाक्षात्कारस्य सत्त्वात्; वह्निनिवर्त्यत्वयोग्यतृणे सत्यपि प्रतिबन्धदशायां वह्निमत्त्वाच्च । नच वैयधिकरण्यलक्षणविरोधित्वं प्रतीयत इति वाच्यम्, तद्धि ज्ञानाभावव्याप्यत्वम्, तच्च न सम्भवति, साक्ष्यात्मकप्रतीतेस्सत्त्वात्, ज्ञानसामान्याभावाभावात् । प्रहरपर्यन्तं घटमनुभूतवतस्तदुत्तरक्षणे पटं दृष्टवतः एतावन्तं कालमिमं पटं नावेदिषमिति प्रतीतिर्दृश्यते; तत्र नास्याः प्रतीतेरज्ञानं विषयः, घटानुभवदशायां पटाज्ञानस्य पटत्वात्मकविषयविशेषावच्छिन्नतयाननुभवात्, तथानुभवे च तत्तत्सकलविशेषावच्छिन्नतयाऽज्ञानानुभवव्यवहारयोः प्रसङ्गात् । तदानीं घटज्ञानधारायास्सत्त्वेन सकलज्ञानविरोध्यज्ञानाप्रतीत्या तेनापि पटाद्यज्ञानानुमानस्य दुर्वचत्वात् । तत्र चेत् पटत्वादिविशेषावच्छिन्नाज्ञानप्रतीतिरनुमानेन, अन्यत्रापि तथास्तु । किंच — कञ्चित्कालं घटमनुभूय विस्मृतवतः एतावन्तं कालं घटं नावेदिषमिति ज्ञानमस्ति, नचायमज्ञानपरामर्शः, घटानुभवकाले घटाज्ञाना

नुभवात्; यदिच्छासमर्थमात्मत्वादिना ज्ञानाभावानुमितिर्भ्रान्तिरूपा तद्वन्य थापि तथैवानुमितिरस्तु । परामर्शत्वेपि न क्षतिः, भावरूपाज्ञानवत् छाक्षि णैव ज्ञानाभावानुभवसम्भवात् । यद्वा — आत्मसुखप्रत्यक्षत्वादिवत् ज्ञाना भावोपि मनसैवानुभूयते; न च ज्ञाने विद्यमानेपि ज्ञानसामान्याभावानुभवा सम्भवः, ज्ञानत्वावच्छिन्नप्रतियोगिकाभावत्वेन घटादिज्ञानाभावानामेव ग्रहणात्; जागरणे तु न तावतामभावानां ग्रहणमिति भेदः । आत्मप्रत्यक्षसुखादिव्यति रिक्तज्ञानाभावत्वेन वा ग्रहो ऽस्तु । परामर्शानुसारेण तावन्मात्रे मनोव्यापार कल्पनेपि न दोषः । तस्मात् सुप्तोत्थितपरामर्शानुसारेण न भावरूपाज्ञानसिद्धिः ।

यच्चोक्तमपरोक्षज्ञानस्यैवाज्ञाननिवर्तकत्वम्, नतु परोक्षज्ञानस्येति; तन्न, परोक्षज्ञानादप्यज्ञाननिवृत्तौ बाधकाभावात् । यदुक्त— परोक्षज्ञानेनाज्ञाननिवृत्तौ वने अङ्गीकोऽस्तीत्याप्तवाक्यादशोकन्याज्ञाननिवृत्तौ अशोकाभावानुभवतत्संशयौ न स्यातामिति; तत्, चन्द्रं न जानामीति प्रतीत्युपपादकयुक्तिभिरेव निरस्तम् । यच्चोक्त— परोक्षवृत्तेर्निर्गमनाभावेन विषयावच्छिन्नाज्ञानेनैकाधिकरण्याभावादज्ञाननिव र्तकत्वमिति; तन्न,— 'मूलाज्ञानमेव समानाश्रयविषयम्, शुक्त्याद्यज्ञानं तु अह मिदं न जानामीति तद्भेदानुभवादहमर्थचैतन्याश्रयं शुक्त्याद्यवच्छिन्नचैतन्य विषयं चे'ति पक्षे परोक्षज्ञानादप्यज्ञाननिवृत्तौ न दोषः । 'एकमेवाज्ञानम्, तच्च चिन्मात्राश्रयविषयम्, तदेव रजतादिभ्रमहेतुश्च, तस्य तत्तदाकारवृत्ति संसृष्टचैतन्याविषयत्वभावतया शुक्त्याद्याकारवृत्त्या शुक्त्याद्यवभासोपपत्तिः, वृत्त्या ज्ञानावरणाभिभवश्चाज्ञानस्य तदाकारवृत्त्यवच्छिन्नचैतन्यानावरकत्वमेवे' ति पक्ष तम्; यच्च 'मूलाज्ञानातिरिक्तविषयमेव विषयचैतन्याधारकाज्ञानम्, तदपि समानाश्रय विषयम्, इदमहं न जानामीत्यहमर्थाश्रयतया प्रतीतिस्तु विषयावच्छिन्ना ज्ञानस्य मूलाज्ञानावस्थात्वात् अवस्थावस्थावतोश्चाभेदात् मूलाज्ञानस्य शुद्ध चिदाश्रयत्वात् तत्रैवाहङ्कारतादात्म्याध्यासात् वस्तुतश्चैतन्यैकाश्रये'तिमतम्;— तत्र देवदत्तस्य घटापरोक्षज्ञाने सति तत्र देवदत्तज्ञानेन समानाश्रये एतत्का लीनाज्ञानसम्बन्धानां तत्काले तद्विषयाणामज्ञानानां वा निवृत्तेः यदज्ञानसत्त्वात् घटे यज्ञदत्तापरोक्ष्याभावः तदज्ञानस्यापि समानाश्रयविषयतया देवदत्तज्ञा

देव निवृत्तिप्रसङ्गात् । यदिच यज्ञदत्तापरोक्षवृत्त्यभावात् सदापरोक्ष्याभाव प्रयोजकाज्ञानसम्बन्धनिवृत्तिर्वा ऽज्ञाननिवृत्तिर्वा नेत्युच्यते तर्हि तत एवाति प्रसङ्गवारणे समानाश्रयत्व व्यर्थमेवेति परोक्षज्ञानमप्यज्ञाननिवर्तकमेव ।

यच्च—अविद्या स्वबाधकप्रमाणैर्ज्ञाननिवर्त्यत्वेन सिध्यन्ती लाघवात् स्वसमानाधिकरणज्ञाननिवर्त्यत्वेन सिध्यतीति ; तन्न , एवमपीद विषयावच्छेदेन वृत्ते र्द्वैरयभावेपि वृत्त्यज्ञानयोश्चैतन्याश्रयत्वादुपपद्यते; अज्ञानाश्रयतावच्छेदकविषयावच्छेदेन सामानाधिकरण्य तु गौरवादेव न सिध्यति । किञ्च — सामानाधिकरण्यमपि गौरवादेव न सिध्यति, समानविषयज्ञानेनैवाज्ञानस्य निवर्तत्वसम्भवात् ; नच देवदत्तज्ञानाद्यज्ञदत्ताज्ञाननिवृत्त्यापत्ति , स्वस्पभेपि स्यत्वात्तु । यच्चानुमान— घटावच्छिन्नचैतन्याविद्यानिवृत्ति. प्रतियोगिसमानाश्रयज्ञानजन्या , अविद्यानिवृत्तित्वात् , मूलाज्ञाननिवृत्तिवदिति ; तन्न साध्यविकलो दृष्टान्त , चरमान्त.करणवृत्तेः प्रमातृनिष्ठत्वात् , मूलाज्ञानस्य च शुद्धचिदाश्रयत्वात् । अज्ञानाश्रयस्यैव चिन्मात्रस्य सर्वाधिष्ठानतया वृत्ति प्रत्याश्रयत्वान्नैवमिति चेत्; तर्हि सर्वाधिष्ठानचिन्मात्रस्यैवाज्ञानान्त करणवृत्त्युभयाश्रयत्वेन सिद्धसाधनम् । अध्यस्ताधिकरणत्वमधिष्ठानत्वमज्ञानस्य नास्तीत्यप्युक्तम् । किञ्च ' चैतन्यस्वरूपस्यैवाज्ञाननिवर्तकत्व वृत्तेस्त्वावरणनिवर्तकत्वमेवे' ति पक्षे चैतन्यस्य समानाश्रयत्वाभावात् साध्यविकलो दृष्टान्त , बाधश्च । यच्च परोक्षज्ञानस्याविद्यानिवर्तकत्वे ब्रह्मसाक्षात्काराभ्युपगमो व्यर्थस्स्यादिति, तन्न, दशमस्त्वमसीति वाक्यादिव प्रमातृव्यवहितविषयेऽपरोक्षस्यैवोत्पत्ते प्रथमतश्शब्दात् ब्रह्मपरोक्षज्ञानोत्पत्ति पक्षेपि अपरोक्षज्ञानोत्पत्तिनिक्ष इव प्रतिबन्धकल्पनात् । ततश्च श्रवणाजन्यत्वभाव्यपरोक्षवृत्ते ब्रह्माज्ञाननिवृत्तिप्रतिबन्धकाविद्यावरणनिवर्तकत्व ज्ञानमात्रस्यैवाविद्यानिवर्तकत्व चास्तु, अपरोक्षवृत्तिश्च दर्शनोद्देशेन श्रवणादिविधान सामर्थ्यादङ्गीक्रियते ।

यच्च परोक्षवृत्तेरज्ञाननिवर्तकत्वे परोक्षार्थोपि स्पष्टमवभासेत, अभिव्यक्तविषयावच्छिन्नचैतन्यस्य स्पष्टतारूपत्वात् , अविद्यानिवृत्तेरेव चाभिव्यक्तत्वादिति, तन्न, यद्यविद्यानिवृत्त्यधीना स्पष्टता, तर्हि सुखादेरस्पष्टता न स्यात् ।

नच विषयावच्छिन्नानावृतचैतन्य स्पष्टता, साच घटादावविद्यानिवृत्त्यधीना, मुखादौ त्वनावृतसाक्ष्यभासादेवेति वाच्यम्, — तदानीं तदज्ञानसमानकालीनाया प्रत्यक्षमूलस्मृतौ तदितरपरोक्षज्ञानापेक्षया स्पष्टतया अनुभवसिद्धत्वात्, त्वदुक्तस्पष्टतायाश्च तत्राभावात् ।

अपिच चरमान्तःकरणवृत्त्यापि विषयस्य ब्रह्मण. स्पष्टता न स्यात्, विषयावच्छिन्नस्फुरणाभावात् । किञ्च घटापरोक्षज्ञानोत्तरकालमेव यदा विषयान्तरव्यासङ्ग, तदानीमपि घटस्य स्पष्टताप्रसङ्ग, नच तदानीमेवाज्ञानान्तरेण तस्यावरणाददोष इति वाच्य त्वया, नच मायरूपाज्ञानवादे सकृज्ज्ञातेऽपि त्वदुक्तमर्थं न जानामीत्यनुभवप्रसङ्ग', अज्ञानान्तरस्य तत्र सत्त्वात्, अन्यथा समयान्तरेऽपि तत्र भ्रमाभावप्रसङ्गादिति वाच्यम्, तद्देशादिविशिष्ट विषयाज्ञानसम्भवेपि स्वरूपावरणाज्ञानाभावात् । अन्यथा प्रथममिव तदाप्युपदेशापेक्षाप्रसङ्गः, तस्योपदेशाधीनप्रत्यक्षनिवर्त्यत्वात् । यस्य तु स्वरूपावरणमज्ञानान्तरमप्यस्ति, तेन तत्र जानामीत्यनुभूयत एव, तदेवात्यन्तविस्मरणनाम । देशादिविशिष्टस्वरूपाज्ञानसत्त्वादेव समयान्तरे भ्रम उपपद्यते । अतएव सकृत् ज्ञाते इदानीं तत् कुत्रेति न जानामीत्यनुभव, नतु मायिन तत्र जानामीति, उक्तत्वेन स्वरूपाज्ञानाभावात् । यदि च तत्र स्पष्टताङ्गरेपि तदानीं वृत्त्यभावेन तदीयत्वाभावात् न त प्रति स्पष्टम्, तर्हि परोक्षज्ञानादविद्यानिवृत्तावपि वृत्तेनिर्गमनाभावेन तदीयत्वाभावान्न त प्रति स्पष्टमिति परिहारस्तुल्य एव । किञ्च यज्ञदत्तस्य घटापरोक्षसमये देवदत्तस्य तद्विषयकपरोक्षज्ञाने सति देवदत्त प्रति स्पष्टताभानप्रसङ्ग ; नच तत्पुरुषनिरूपितावरणशून्यविषयावच्छिन्नचैतन्य त प्रति स्पष्टता, देवदत्तनिरूपितावरण च तदानीं वर्तत एवेति वाच्यम्, इद रजतमिति भ्रमदशायामिदमवच्छिन्नचैतन्ये भ्रमहेतोश्शुक्तित्वाज्ञानस्य तत्पुरुषनिरूपितस्यैव सत्त्वेन तत्पुरुषनिरूपितावरणशून्यविषयावच्छिन्नचैतन्यात्मकस्पष्टताया अभावप्रसङ्गात् ; इदमवच्छिन्नचैतन्यस्यैव शुक्तित्वावच्छिन्नत्वात् । ननु तत्पुरुषीयतदवच्छिन्नावरणशून्यविषयावच्छिन्नचैतन्य स्पष्टता, तथाच तत्पुरुषनिरूपितेदमज्ञानावरणाभावात् इदमवच्छिन्नस्फुरण स्पष्टता, शुक्त्यवच्छिन्नाज्ञानसत्त्वाच्च न शुक्त्यवच्छिन्नस्फुरण स्पष्टता, न्वेवमपि शुक्त्य

अनवरतमनुभूयमानेपि दिदृक्षानुपरम: । यत्तु – प्रत्यक्षस्यैव मुख्यहेतुत्वे प्रमेयमिदमिति ज्ञानेपि तत्प्रसङ्ग इत्यादि; तदतिमन्दम् , अविद्यानिवर्तकप्रत्यक्षेपि त्वदुक्तसकलदूषणोपपत्त्या स्वव्याघातात् । यदपि – परोक्षज्ञानस्याप्यविद्यानिवर्तकत्वे प्रत्यक्षदृष्टवह्नेरिव पर्वतो वह्निमानित्याप्तवाक्यावगतवह्नेरपि पुंसः इदानीं पर्वतो वह्निमान्नवेति संशयो न स्यादिति; तदपि मन्दम् , यदि किञ्चित्कालविशेषावच्छेदेन पर्वते वह्निसम्बन्धः परोक्षतो ऽपरोक्षतो वा ऽवगम्यते, तदा सन्देहस्यैवाभावात् । अत एव बहुकालं गुहान्तरस्थापितस्याहोरात्रविभागमजानतः तदा दृष्टवह्नेर्दिवा रात्रौ वा पर्वतो वह्निमानिति संशय. दिवा वह्निमान्न वेति संशय. । तत्रापीदानीं वह्निरस्ति नवेति संशयो नास्तीति चेत् ? किं तत्रापि तत्कालावच्छेदेन पर्वते वह्निवैशिष्ट्यग्रहणात् संशयो नास्तीत्युच्यते, तथाऽग्रहणेऽपि वा ? नाद्य , परोक्षस्थले तज्ज्ञानाभावादेव तदज्ञानानिवृत्त्या संशयोपपत्तेः । न द्वितीय', समानविषयकावधारणाभावेऽज्ञानानिवृत्त्या तत्रापि सन्देहप्रसङ्गात् । ननु प्रत्यक्षस्य नीरूपग्राहकत्वासम्भवादुपनीततत्कालावच्छेदेन वह्निग्राहकत्वं वाच्यम् , इदं च शाब्दादिज्ञानस्थलेपि सम्भवति, शाब्दादिज्ञाने उपनीतभानाभावेपि तदुत्तरमुपनीतकालवैशिष्ट्यस्य शब्दादिना वह्न्यादिमत्तयावगतपर्वतादौ मनसैव ग्रहणसम्भवादित्युक्तमिति चेत् ? तत्र संशयस्यानुभवसिद्धत्वेन तत्कालावच्छेदेन ज्ञानाभावसिद्धौ फलबलकल्प्योपनयात्मकप्रत्यासत्त्यसिद्धेस्सामग्र्या एवाभावात् । उत्पन्नमपि वा ज्ञानमनवधारणमस्तु । ननु तदेवाविद्यानिवृत्त्यङ्गीकारे कुत इत्युक्तमिति चेत् ? माभूत्तस्मादविद्यानिवृत्तिः । यत्तु परोक्षज्ञानमप्यवधारणम् , तस्मादविद्यानिवृत्तिरस्तु । कथमन्यथा तत्रापि इदानीं पर्वतो वह्निमान्नेति संशयः ? परोक्षज्ञानस्याज्ञाननिवर्तकत्वेपि संशयविरोधित्वात् ; अन्यथा पर्वतो वह्निमान्नवेत्यपि संशयप्रसङ्गात् , तत्रास्मदुक्तरीत्या ज्ञानाभावस्य तत्सत्वेप्यनवधारणत्वस्य वा वाच्यत्वात् । यच्चाप्तवाक्याद्वृक्षपरिमाणविशेषावगमेपि तदज्ञानहेतुकभ्रमदर्शनादपरोक्षज्ञाने चादर्शनादन्वयव्यतिरेकाभ्याम परोक्षज्ञानमविद्यानिवर्तकमिति; तदप्यसत्, एवं हि चन्द्रैकत्वप्रत्यक्षे सत्यपि द्विचन्द्रभ्रमदर्शनादपरोक्षज्ञानेनाप्यज्ञाननिवृत्तिर्न स्यात् । तत्राज्ञाननिवृत्तिर्नास्त्येवेति चेत् ? परिमाण

भ्रमस्थलेपि माभूत् । तथैव परोक्षस्थले कुत्रापि निवृत्तिर्न स्यादिति चेत्? तथैवापरोक्षस्थलेपि कुत्रापि निवृत्तिर्न स्यात् । यदि च चन्द्रैकत्वस्थले ऽप्यावरकाज्ञानं निवृत्तम्, अन्यदेव भ्रमहेतुरित्युच्यते, तदपि परोक्षज्ञाने तुल्यम् । किंच परोक्षज्ञानस्याज्ञानानिवर्तकत्वे वह्न्यनुमितावपि वह्निं न जानामीति प्रतीत्यापत्तिः । अत्र यदुक्तं ' सुषुप्ताविव सतोप्यज्ञानानुभवस्ये' त्यादि, तन्न, तत्र हि किमज्ञानस्याभिभवः, उत तदनुभवस्य अभिभवोपि? आद्ये किं तदनुभवः, उत तद्विनाश एव? नाद्यः, सुषुप्ताविवाज्ञानमनुभूयते अभिभूतं चेति व्याघातात् । न द्वितीयः, वह्न्यादिनिश्चयानुभवस्य निश्चयानतिरिक्ततया परोक्षज्ञानस्याज्ञाननिवर्तकत्वसिद्धेः । द्वितीये ऽप्यभिभवोऽननुभवो विनाशो वा? नाद्यः, अज्ञानानुभवाननुभवेपि न जानामीति व्यवहारस्यावर्जनीयत्वात्, अनुभवस्य स्वरूपत्वाच्च तदभावायोगात् । न द्वितीयः, नित्यस्य साक्ष्यनुभवस्य विनाशायोगात् । नच साक्षिरूपाज्ञाननिर्विकल्पके विद्यमानेपि सुषुप्ताविव सविकल्पकाभावापादनम्, जाग्रदवस्थायामभिव्यक्ताहङ्कारसत्त्वेनाभिव्यक्ताहङ्कारतादात्म्यापन्नसाक्ष्यात्मकसविकल्पकस्याभावायोगात् । अज्ञानसविकल्पके च विद्यमाने अविद्यावृत्त्यात्मभावस्याकिंचित्करत्वात् । किंच परोक्षज्ञानेनाज्ञाननिवृत्तेरनुभवसिद्धत्वाच्च न तदपह्नवः शक्यः । नच तस्य भ्रमत्वम्, अपरोक्षस्थल इवात्रापि बाधकाभावस्योपपादितत्वात् । तस्मादहमज्ञ इति प्रत्यक्षस्य भावरूपाज्ञानविषयत्वे ऽनुमित्या वह्न्यज्ञानं निवृत्तमित्यस्यापि तद्विषयत्वस्यावश्यकत्वात् बाधकाभावेन च भ्रमत्वासम्भवात् त्यज वा ऽज्ञानप्रतीतेर्भावरूपाज्ञानविषयत्वम्, स्वीकुरु वा परोक्षज्ञानस्याप्यज्ञाननिवर्तकत्वमिति ।

अत्र किं वृत्तेः पक्षत्वम्, उत चैतन्यस्य, वृत्त्यवच्छिन्नचैतन्यस्य वा? नाद्यः, वृत्तेर्जडत्वेनानिवर्तकतया बाधात्, न द्वितीयः, चैतन्यस्य प्रागभावाधर्मिण्या बाधादेव, अतएव न तृतीयः, किञ्च वृत्तेरुपलक्षणत्वे चैतन्यस्य प्रागभावाधिकरण्या बाधः, विशेषणत्वे जडभूताया वृत्तेर्निवर्तकत्वापत्तिः, तदङ्गीकारे च गौरवेण चैतन्यस्यैवानिवर्तकत्वापत्तिः, साध्ये च स्वविषयावरणत्वस्य तद्विषयज्ञानप्रतिबन्धकत्वरूपतया ऽज्ञानस्य तदङ्गीकारेज्ञानानुत्पत्तिप्रसङ्गेनाज्ञाने आवरणत्वासम्भवात् बाध इति पक्षसाध्ययोर्दूषणं स्फुटत्वादुपेक्ष्य हेतुं दूषयति

या चेयमनुमानजीर्णकन्था; तत्र किमिदमप्रकाशितार्थप्रकाशकत्वादित्यत्र प्रकाशकत्वन्नाम ? किं ज्ञानत्वम् , किं वा ज्ञानकारणत्वम् , अथवा करणानुग्राहकत्वम् , यद्वा ज्ञानहेतुत्वमात्रम् , किं वा प्राकट्यहेतुत्वम् , यद्वा सामान्यतस्साक्षाद्वा परम्परया वा विषयव्यवहारानुगुण्यहेतुत्वमिति ? नाद्यः, दृष्टान्तस्य साधनविकलत्वात् । न द्वितीयः, पक्षे तदभावेन स्वरूपासिद्धिप्रसङ्गात् । दीपस्य च करणभूतेन्द्रियानुग्राहकत्वेन साक्षात्करणत्वासिद्धे । न तृतीयः, पक्षे तदभावात् स्वरूपासिद्धेरेव ! नापि चतुर्थ , इन्द्रियादिष्वनैकान्त्यात्; स्वरूपासिद्धेश्च । न पञ्चम, प्राकट्यमनभ्युपगच्छता स्वरूपासिद्ध्यादेरेव । अभ्युपगच्छतामपि दीपप्रभायास्तद्धेतुत्वाभावेन साधनविकलत्वात् । नापि षष्ठ , इन्द्रियादिभिरनैकान्त्यात् । किञ्च इदमनुमानमप्रकाशितार्थप्रकाशकं नवा ? आद्ये स्वगोचरावरणाज्ञानविवर्तकमनिवर्तकं वा ? निवर्तकत्वे स्वगोचराज्ञानविषयाज्ञानान्तरावश्यम्भावात् तत्प्रकाशेपि तथैवेत्येवं क्रमेणानवस्था । यदि पुनस्तदेवाज्ञानं स्वात्मानमपि तिरस्करोतीति मतम् , तदा तेनैवानुमानेनाज्ञाननिवृत्तिप्रसङ्गः । यत्प्रकाशकं

---

तत्र किमिदमित्यादि । सामान्यत इत्यस्य विवरणं साक्षाद्वेत्यादि । पक्ष इति । अत्र भागासिद्धिर्विवक्षिता । परामर्शादेः ज्ञानकारणस्य सम्भवात् करणत्वासिद्धेरिति । तथाच दृष्टान्तस्य साधनवैकल्यमिति भावः । पक्ष इति । अत्रापि भागासिद्धिर्विवक्षिता , विशेषणशब्दादेः पक्षतावच्छेदकावच्छिन्नस्य करणानुग्राहकत्वस्यापि सम्भवात् । स्वरूपासिद्धेश्चेति । अत्रापि पूर्ववत् भागासिद्धिरेव विवक्षिता । स्वरूपसिध्यादेरिति । आदिशब्देन साधनवैकल्यग्रहः । यत्प्रकाशकमिति । त्वयैव तत्प्रकाशस्य सन्निवर्तकत्वासम्भवात् सन्निवर्तकस्य नाज्ञाननिवर्तकत्वमिति उत्तरग्रन्थेति

यज्ज्ञानं तदेव तदज्ञानस्य निवर्तकमिति च व्याहतमेव । अनिवर्तकत्वे तु निष्प्रयोजनत्वमनुमानत्रुसतिनिर्माणमहाप्रयासस्य । तेनानैकान्तिकत्वप्रसङ्गश्च । तस्यापि पक्षीकारे तस्मिंतंशे बाधः । द्वितीयेऽपि प्रकाशितप्रकाशकत्वं वा विवक्षितम्, अप्रकाशकत्वमेव वा ? पूर्वत्र निष्प्रयोजनत्वम्, येनैवादौ प्रकाशितं तेनैव कृतत्वात् । उत्तरत्राप्रमाणत्वमेवानुत्पत्तिलक्षणमिति ।

---

भावः । अनिवर्तकत्व इति । नच व्यवहार एव प्रयोजनमिति वाच्यम्, अज्ञाननिवृत्त्यभावे तस्यैवासम्भवात् । ब्रह्मस्वरूपभूतज्ञाने सत्यपि हि अज्ञानवशात् अस्ति प्रकाशत इति व्यवहाराभावात् नास्ति न प्रकाशत इति व्यवहारञ्चाङ्गीकरोषि । नन्वज्ञानाभाव एव व्यवहारप्रयोजकः, नतु तन्निवृत्तिः, तेनाज्ञाने तदभावस्य स्वतस्सिद्धत्वादज्ञानानुमित्यापि तद्व्यवहारः स्यादेवेति चेन्न ;— तथापि वह्न्यनुमानात्तद्व्यवहाराभावप्रसङ्गात् । ज्ञानमात्रस्य तत्प्रयोजकत्वे ब्रह्मणोऽपि व्यवहारप्रसङ्गः । वृत्तेरेव व्यवहारप्रयोजकत्वमित्याशा तु निर्मूलैव ; तस्मात् सर्वथा वह्न्यादावज्ञाननिवृत्तेरेवेष्टव्या, ततो व्यभिचारात् सर्वत्राज्ञाननिवृत्तेरेव प्रयोजकत्वं वक्तव्यम् । ननु लाघवादज्ञानाभाव एव प्रयोजकः, नतु तद्विरोधिनिवृत्तिः, अतोऽज्ञानाभावत्वेन निवृत्तिर्वह्न्यादौ व्यवहारप्रयोजिका, अज्ञानादौ तु स्वतस्सिद्धोऽज्ञानाभाव एवेति चेन्न,— तत्राप्यनुमानात् प्रागेतावन्तं कालं भावरूपाज्ञानं नाज्ञासिषमित्यनुभवानुरोधेनाज्ञानस्यावश्यंतया तन्निवृत्त्यभावे व्यवहारो न स्यादेव । नच संशयनिवृत्तिः प्रयोजनम्, अज्ञाननिवृत्त्यभावे तदसिद्धेः । अज्ञानाभावस्य प्रयोजकत्वे च वह्निसंशयानुच्छेदप्रसङ्गात् । ज्ञानमात्रस्य संशयनिवर्तकत्वे ब्रह्मणि संशयाभावप्रसङ्गात् । समानविषयावधारणस्य निवर्तकत्वे स एव दोषः । एककोटिकावधारणं च निरस्तमेव । यदि च समानप्रकारकावधारणं निवर्तकम्, ब्रह्मस्वरूपज्ञानं तु निष्प्रकारकमित्युच्यते, तर्ह्यद्वैतसाक्षात्कारात् संशयानिवृत्तेस्तदर्थजिज्ञासानुपपत्तिः । तस्मादज्ञाननिवृत्तिः प्रयोजनमेव । अनुत्पत्ताविति । ज्ञानानुत्पादकत्वलक्षणमित्यर्थः ।

केचित्तु — अत्रानुमाने सुखादिप्रमायां बाध, तस्यासाक्षिरूपत्वात्; वृत्ते पक्षत्वे परोक्षवृत्तौ बाध, अपरोक्षवृत्ते पक्षत्वे परोक्षवृत्तौ व्यभिचार; तद्व्यावृत्त्यर्थं हेतुविशेषणे अप्रयोजकत्वम्, धारावाहिकद्वितीयादिज्ञाने बाध, असिद्धिश्च, साध्ये ऽप्यायविशेषण व्यर्थम्, स्वस्य स्वप्रागभावनिवृत्तिरूपतया तदनिवर्तकत्वात्, द्वितीय चायुक्तम्, चितोऽज्ञानादिसाक्षितया प्रकाशमानत्वेनावरणायोगात्, स्वोत्पादकादृष्टव्यावृत्तेरावरणपदेनैव सिद्ध्या शेषवैयर्थ्याच्च, तृतीय चायुक्तम्, वृत्तिश्चिदुपरागार्थेति मते घटाकारवृत्त्या तत्प्रतिबिम्बित चैतन्येन वा ऽभिव्यक्त घटाधिष्ठान चैतन्य घटप्रकाशकमिति मते च घटप्रकाशकज्ञानस्य घटाज्ञाननिवर्तकत्वात्, घटाकारवृत्ति तत्प्रतिबिम्बितचैतन्य वा घटप्रकाशकमिति मतस्य चाध्यासिकसम्बन्धस्यातन्त्रत्वापातेनायोगात्, चरम साक्षात्कारोत्पत्तिप्रतिबन्धकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वासिद्ध्या स्वनिवर्त्यपदेन तद्व्यावृत्त्यसिद्धेश्च, अज्ञातत्वस्य तद्विषयकज्ञानाभावरूपत्वे आद्यविशेषणे नैव व्यावृत्तिसिद्धे, अविद्याविषयकत्वरूपत्वे चाविद्यासिद्ध्या चतुर्थं च व्यर्थम्, हेतौ च प्रकाशकत्व ज्ञानत्व वा, ज्ञानहेतुत्व वा, साक्षात्परम्परया व्यवहारहेतुत्व मात्र वा, तमोनिवर्तकत्व वा, आवरणनिवर्तकत्व वा, अज्ञानान्धकारान्यतर निवर्तकत्व वा, प्रकाशकशब्दवाच्यत्वमात्रमेव वा ? नाद्य, दृष्टान्तेऽभावात्, न द्वितीय, असिद्धे, इन्द्रियादौ व्यभिचाराच्च, अतएव न तृतीय, न चतुर्थ, अज्ञानान्धकारानुगततमस्त्वाभावात्, साध्यावैशिष्ट्याच्च, अत एव न पञ्चम, कुद्दालादौ व्यभिचाराच्च, न षष्ठ, साध्यावैशिष्ट्यादेव, न सप्तम, शब्दसाम्येन एकसाध्यसाधने पृथिव्यादेरपि गोत्वेन शृङ्गित्वसाधनापातात्, किञ्च— अनया अनुमितेरप्रकाशितप्रकाशकत्वाभावे प्रकाशितप्रकाशकत्व वा ऽप्रकाशकत्व वा स्यात्, उभयथाचानुमितिर्व्यर्था, तत्प्रकाशकत्वे घात्रैव बाधो व्यभिचारो वा, अस्या स्वविषयावरणानिवर्तकत्वात्, अज्ञानावरणाद्यानाभावात्, दृष्टान्तेपि द्वितीयादिप्रमाया अन्धकारानुत्पन्नत्वेन प्रथमपद व्यर्थमित्याहु ।

अत्र कश्चिदाह — जागराद्यपरोक्षवृत्तित्व पक्षतावच्छेदकम्, तेन सुखादिप्रमाया धारावाहिकद्वितीयादिप्रमाया परोक्षवृत्तौ च न बाध, किञ्च — पक्ष १

तावच्छेदकावच्छेदेन साध्यसिद्धिविरोधिज्ञान न बाधः, किन्तु सामानाधिकरण्येन साध्यसिद्धिविरोधिज्ञानम्, तथाच वृत्तिमात्रे साध्याभावेपि कस्याश्चिद्वृत्तौ साध्यसत्त्वात् यथाश्रुतेपि पक्षे नोक्तबाधावतारः; साध्ये च स्वप्रागभावातिरिक्तेति विशेषण न व्यर्थम्, प्रतियोगिनः प्रागभावनिवृत्तिरूपत्वे प्रतियोगिध्वंसे सति प्रागभावोन्मज्जनप्रसङ्गात् प्रतियोग्यतिरिक्तैव हि प्रागभावनिवृत्तिः; नच निवृत्त्यानन्त्य प्रागभावानन्त्य च स्यादिति वाच्यम्, घटप्रागभावानन्ययघटितत्वात्; अतः स्वप्रागभावनिवर्तकतयार्थान्तरवारकं सार्थकमेव तत्; नापि द्वितीयविशेषण व्यर्थम्, रजोत्पादकादृष्टमादायार्थान्तरवारकत्वात्; अज्ञानादिसाक्षितया प्रकाशमानेपि चैतन्ये आवरणमुपपद्यते, प्रकाशमानेपि सूर्यादौ मेघादेरावरणत्वदर्शनात्; आवरणत्व च प्रतिबन्धकत्वम्, तस्य च केवलान्वयित्वेनाव्यावर्तकतया स्वविषयावरणेत्यप्यावश्यकम्, तृतीयमपि विशेषण साधु, वृत्तिश्चिदुपरागार्थेति मते आवरणाभिभवस्य नान्तरीयकत्वात् आवरणाभिभवकाले च चिदुपरागस्य नान्तरीयकत्वात् उभयसत्त्वेपि कस्यचित् प्राधान्येन कस्यचिदुपसर्जनत्वोपादाने मतद्वयोत्थानात्, अन्यथा प्रदीपादौ विषयोपरागकाले आवरणाभिभवो न स्यात्, अन्वयव्यतिरेकाभ्या ज्ञानेनाज्ञाननिवृत्तिदर्शनाच्च न बाधः; प्रतिबन्धकनिवृत्तावेव चरमसाक्षात्कार इति न स प्रतिबन्धकादृष्टनिवर्तकः, प्रतिबन्धकस्य कार्यनिवर्त्यत्वे प्रतिबन्धकत्वायोगात्; तस्यातीतघटवन्मिथ्यात्वोपपत्तेश्च; चतुर्थमपि युक्तम्, विषयगताज्ञातत्वव्युदासार्थत्वात्; हेतावपि न विकल्पावकाशः, प्रसिद्धानुमानेपि एतद्देशैतत्कालीनधूमवत्त्वतद्देशीयतत्कालीनधूमवत्त्वादिविकल्पेन साधनवैकल्यस्वरूपासिद्ध्यादिना दूषणप्रसङ्गात्, उभयानुगतसामान्यस्य तत्र हेतुत्वे अत्राप्यावरणसामान्यनिवर्तकत्वेन प्रत्यक्षसिद्धप्रकाशसामान्यस्य हेतुत्वसम्भवात्; नच पृथिव्या गोत्वेन शृङ्गित्वानुमानम्, विपक्षे बाधकाभावेनाप्रयोजकत्वात्, अत्र चावरणसामान्यनिवर्तकतया प्रत्यक्षसिद्धत्वेनानुकूलतर्कसत्त्वात्, नचास्या अनुमितेः प्रकाशितप्रकाशकत्वे वैयर्थ्यम्, असिद्धिशङ्कानिरासार्थत्वात्; नच दृष्टान्तेपि दोषः, अन्धकारस्य विशेषणत्वासम्भवेन उपलक्षणत्वे वाच्ये द्वितीयादिप्रमाया अपि तदुत्पन्नत्वेन तन्निराशकप्रथमपदसार्थक्यात्, तस्मादनवद्यमिदमनुमानमिति ।

अत्र ब्रूमः — एवमप्यनवधारणात्मकजागराद्यचन्द्रादिप्रत्यक्षस्यापि पक्षतया तत्र बाधः; अवधारणत्वविवक्षायां जागरादौ दैवादद्वैतवाक्यस्मरणानन्तरमुत्पन्ने भेदवासनादिप्रतिबन्धकार्ये अनवधारणात्मकेऽद्वैतसाक्षात्कारे बाधः; तद्व्यावृत्त्यर्थं पक्षविशेषणे तत्रैव व्यभिचारः, जलेऽधोग्रत्वभ्रमपूर्वभाविनि वृक्षोर्ध्वाग्रत्वज्ञाने च जागराद्ये बाधः; तत्र भ्रमानुसारेणाज्ञानस्यावश्यकत्वात्; क्वचित् स्वरूपाज्ञानस्य निवृत्तौ पुनस्स्वरूपेण न जानामीत्यनुभवादर्शनेन तदज्ञानं नास्तीति युष्माभिरुक्तत्वेन तद्विषयजागराद्यापरोक्षे बाधः, तत्र स्वरूपाज्ञानसत्त्वे प्रथममिव तदाप्युपदेशापेक्षाप्रसङ्गात्। यच्च 'किञ्च पक्षतावच्छेदके' त्यादि, तदपि न, अज्ञातो बाधेनानुमितिप्रतिबन्धाभावेऽपि साध्याभाववतः पक्षीकरणं प्रयोगस्य दोष एव, अन्यथा प्रतिज्ञाविषये सर्वत्र धर्मिणि बाधेऽपि दैवादबाधितपक्षान्तरे व्याप्यवत्तयोपस्थिते तत्रानुमितेरबाधात् प्रयोगस्याऽदुष्टत्वापत्तेर्वादी न निगृह्येत। यदि च स्वाभिमतपक्षतावच्छेदकसामानाधिकरण्येन साध्यासिद्धेर्निगृह्यते, तर्हि पक्षतावच्छेदकयावदधिकरणे साध्यासिद्धावपि वादी निगृह्यत एव, तथैव कथकसम्प्रदायात्। अत एव हि पूर्वे निबन्धारः बाधितेतरपक्षपरिग्रहे महान्तं यत्नमास्थिताः। कथमन्यथा प्रमाणपदमपि तत्र सङ्गच्छते। किञ्च — विवादाध्यासितमित्येतावता पक्षपरिग्रहे दोषवैयर्थ्यात् तस्य तद्विवरणरूपता वाच्या, तद्विवरणत्वं च विवादपदमात्रनिर्देश एव स्यादिति तत्सिद्ध्यै बाधितव्यावृत्तिः कार्यैव। यदपि साध्ये च स्वप्रागभावेत्यादि, तदप्यसाधु, तथा सति त्वदभिमतमोक्षदशायां घटध्वंसे निवृत्ते घटोन्मज्जनापत्तेः। ननु तत्राविद्यालक्षणकारणाभावान्न घटोन्मज्जनमिति चेत्? हन्त तर्हीदानीं किं घटध्वंसकाले घटप्रागभावस्य कारणं पश्यसि, येन प्रागभावोन्मज्जनमापादयसि। ननु सर्वस्यापि प्रतियोगितदभावयोरन्यतरवत्त्वनियमात् प्रागभावाभावध्वंसे प्रागभावः स्यादिति चेत्? तर्हि घटप्रागभावदशायां ध्वंसस्स्यात्, ध्वंसप्रागभावात्मकघटस्याभावात्। किञ्च — घटात्यन्ताभावस्य घटप्रागभावाधिकरणेऽभावात् घटः स्यात्। अत्रापि ध्वंसप्रागभावौ घटात्यन्ताभावात्यन्ताभावोऽपि प्रतियोगिनोऽन्य एवेति चेन्न,— गौरवात्, लाघवेन घटध्वंसयोः प्रागभावप्रतियोगिरूपतायाः घटतत्प्रागभावयोः

ध्वंसप्रतियोगिरूपतया घटतद्ध्वंसप्रागभावानामत्यन्ताभावाभाववत्त्वस्य च कल्पनात् । किंच प्रागभावनिवृत्ते: घटजन्यतया घटस्य द्वितीयक्षण एवोत्पत्तेः घटोत्पत्तिक्षणे प्रागभावस्स्यादेव, तच्चानुपपन्नम् , प्रतियोग्यभावयोर्विरोधात् । अन्त्यशब्दस्य क्षणिकत्वपक्षे तस्य प्रागभावनिरोध एव न स्यात् , लिङ्गादि द्वितीयक्षणेऽनुमित्याद्यापत्तिश्च, रूपतत्प्रागभावयोर्युगपत् साक्षात्कारश्च स्यात् , धर्मिप्रतियोग्यादिज्ञानसमये तत्प्रागभावस्य सत्त्वात् , ज्ञानान्तराभावस्यापि सत्त्वात् , ज्ञानाभावसमुदायस्य ग्रहसम्भवादहमज्ञ इति प्रत्यक्षस्य भावरूपाज्ञानविषयत्वोक्तिविरोधश्च स्यात् । अस्तु वा प्रागभावनिवृत्तिरन्यैव, तथापि तत्र न प्रतियोगिनो जनकत्वसम्भव , मानाभावादुक्तविरोधाच्च । तत्सामग्र्या एव जनकत्वसम्भवात् , प्रागभावभेदेन च सामग्रीभेदात् कार्यभेदोपपत्ते । यदपि ' *नापि द्वितीये* ' *त्यादि, तदप्यसत् , न हि सूर्यस्येव नित्यचैतन्यस्य* प्रतिबन्धसम्भव , तत्र हि बहुलालोकनिस्सरणप्रतिबन्धो वा भूयोवयवेन्द्रियसन्निकर्षप्रतिबन्धो वाऽऽवरणम् । किञ्च न घटादिप्रतिबन्धकत्व अज्ञानस्य तमसोवेति साध्यो व्याप्यत्वासिद्धिश्च । तज्ज्ञानप्रतिबन्धकत्वविवक्षायामपि ज्ञानप्रागभावात्यन्ताभावयो प्रतिबन्धकत्वाभावेनादिमान्तिमविशेषणवैयर्थ्यात् । ज्ञानस्य प्रतिबन्धकत्वाभावेन बाधश्च, तन्निवर्त्यस्य तत्प्रतिबन्धकता नास्तीति त्वयोक्तत्वात् । स्वविषयकयत्किञ्चिज्ज्ञानप्रतिबन्धकत्वविवक्षायामपरोक्षस्वार्थानादिज्ञानाप्रतिबन्धकत्वेन दृष्टान्ते साध्यवैकल्यम् । यत्किञ्चिज्ज्ञानप्रतिबन्धकत्वविवक्षायामपि विषयसाकल्यविवक्षाया सकलस्वविषयविषयकयत्किञ्चिज्ज्ञानप्रतिबन्धकत्वमित्यर्थलाभे प्रदीपादे क्षुद्रालोकस्य सकलस्वविषयविषयकज्ञानसम्भवेन तत्प्रतिबन्धकनिवर्तकत्वेऽपि महालोके व्यभिचार , सूर्यालोकविषयसकलज्ञानाभावात् । क्षुद्रालोकेऽपि व्यभिचार एव, तत्तत्प्रतियोगिकानन्ताभावाना स्वविषयत्वात् तावज्ज्ञानस्य चा सम्भवात् । ईश्वरज्ञानस्य तादृशत्वेऽपि तत्प्रतिबन्धासम्भवात् । यत्किञ्चित्स्वविषयविषयकयत्किञ्चिज्ज्ञानविवक्षाया यत्र प्रथमदर्शनानन्तरं अनुमित्सा ततोऽनुमिति. ततस्तत्र प्रत्यक्ष तत्र विरोधिगुणतया स्वविषयविषयकप्रत्यक्षप्रतिबन्धकानुमित्सानिवर्तकत्वेनानुमितेर्यथाश्रुतमेव पक्षतावच्छेदकत्वमिति पक्षे त्वदुक्तरीत्या पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धे. सिद्धसाधनम्

साध्यं विशेषणीयम्; तदभावे तु पक्षो वा विशेषणीयः, पक्षतावच्छेदकावच्छेदेन साध्यसाधनं फलमिति वा ऽङ्गीकार्यम्, तत्र चोक्त एवासतो बाधः। संशयोत्तरप्रत्यक्षतमानविषयसंशयप्रतिबन्धकविशेषदर्शननिवर्तकत्वेन तस्मिन् प्रत्यक्षे सिद्धसाधनम्, साक्षात्कारप्रतिबन्धकदुरदृष्टनिवर्तकं यत् सेतुदर्शनं तत्रादृष्ट प्रतिबन्धकनिवर्तकसाक्षात्कारद्वयस्यापि सत्तादिविषयत्वात् सिद्धसाधनम्। नापि ज्ञानोत्पादकादृष्टस्य कश्चित्प्रतिबन्धकत्वे मानमस्ति। यच्च – 'तृतीयमपी' त्यादि, तदपि, न; श्रुतेश्चितुपरामार्थत्वे आवरणकल्पनाया मानाभावेनावरणानिवर्तकत्वात्। यच्च– "अन्यथे" त्यादिनोक्तम्; तदपि न, प्रदीपादेस्तमोनिवर्तकत्वं हि प्रत्यक्षसिद्धं नापह्नवमर्हति, तमसि, चक्षुर्विषयसन्निकर्षेपि ज्ञानादर्शनात्तस्य विषयावारकत्वमपि, प्रकृते ज्ञानेनाज्ञानं निवृत्तमित्यन्वयव्यतिरेकयोः प्रागभावविषयत्वेनाप्युपपत्तेः। चरमसाक्षात्कारोत्पत्तिप्रतिबन्धकादृष्टं च तन्निवर्त्यमेव, अन्यथा मिथ्यात्वानुपपत्तेः, ध्वस्तस्यापि प्रतिबन्धकस्य सूक्ष्मरूपेणावस्थितस्य पुनर्निवृत्तेर्युष्माभिरङ्गीकारात्, अतीतघटादावपि तथैवाङ्गीकारात्। यदपि – "चतुर्थमपी" त्यादि, तदप्यसङ्गतम्, विषयगताज्ञातत्वस्य विषयगतज्ञानाभावरूपत्वे ज्ञानविषयत्वाभावरूपत्वे च स्वनिवर्त्यपदेन तद्व्यावृत्तिसिद्धेः, अविद्याविषयत्वस्य चाविद्यासिद्धेः पूर्वमसिद्धेः। यच्च "द्वितीयमपी" त्यादि, तन्न, पक्षदृष्टान्तानुगतं प्रकाशत्वं न विद्यते, शब्दसाम्येन चेत्! 'पृथिव्या गोत्वाच्छृङ्ग समाप्तेदि' त्यनेनैव दत्तोत्तरत्वात्। अनुकूलतर्काभावस्य चोपपादयिष्यमाणत्वात्। यच्च – 'नचास्या अनुमितेरि' त्यादि, तदपि न, असिद्धत्वशङ्कानिरासः किमनुमितेरसिद्धस्याभावविषयत्वात्, निरुक्तसाध्यविषयत्वाद्वा? नाद्यः, तस्य साध्याप्रवेशात्, न द्वितीयः, अस्या अनुमितेः प्रकाशितप्रकाशकत्वे पूर्वप्रकाशेनैवासिद्धत्वशङ्काया निरासेन एतद्वैयर्थ्यात्; सिद्धसाधनाच्च। अप्रकाशितार्थप्रकाशकत्वे व्यभिचारः। किञ्च पूर्वं प्रकाशाभावादप्रकाशितार्थप्रकाशकत्वव्यभिचार, नच तस्यैव तत्प्रकाशः, तस्य स्वप्रागभावेत्यादिनिरुक्तसाध्याविषयत्वात्। यदपि 'नच दृष्टान्तेपी' त्यादि; तदपि न, अन्धकारस्य विशेषणत्वस्यैव सम्भवात्, उत्तरस्यैव दीपस्यान्धकारनिवर्तकत्वात्। तस्माद्व्यासतीर्थोक्तं दूषणं तुच्छमेव।

किंच दीपप्रभाया निर्विषयत्वात् साध्यवैकल्यम् । नच तद्विषयकज्ञान जनकत्वं तद्विषयत्वम्, पक्षे असिद्धेः । नच साक्षात्परम्परया वा तज्जन्य व्यवहारविषयत्व तत्, अभीष्टार्थविशेषविषयकसाक्षात्कारप्रतिबन्धकादृष्टस्य सेतुदर्शनादिना बहुपापनिवर्तकतया श्रुतेन विनाशसम्भवात् ! परम्परया सदर्थविशेषविषयव्यवहारजनकत्वेन तद्विषयत्वात् तद्विषयज्ञानोत्पत्तिप्रतिबन्धक दुरदृष्टनिवर्तकतया सिद्धसाधनात् । हेतावप्यप्रकाशितत्व यद्यज्ञानविषयत्वम्, तदा हेत्वसिद्धिः, यदि ज्ञानाविषयत्वम्, तदाधिष्ठानप्रकाशेन सर्वस्य प्रकाश मानत्वात् पुनरप्यसिद्धिः । यदि वृत्तिज्ञानाविषयत्वम्, तदा समानविषय स्मृत्यनुमित्याद्यनन्तरकालीनजागराद्यपरोक्षे असिद्धिः, तस्यापि पक्षत्वात् । अपरोक्षवृत्त्यविषयीकृतत्वविवक्षायामतीतजागरप्रत्यक्षविषयार्थप्रत्यक्षे असिद्धिः । एतज्जागरणकालीनप्रत्यक्षाविषयत्वञ्चेत्तद्विषयपरकीयज्ञानस्य पूर्वक्षणे सम्भवादसिद्धिः । ज्ञानानुत्पत्तिस्थलीयद्वितीयादिप्रभाया व्यभिचारः । प्रकाशाविषयी कृतत्व चेत् ? दीपप्रभाया सुप्तोत्थितस्य जागराद्यप्रत्यक्षेऽसिद्धिः, त्वया तस्यापि प्रकाशत्वाभिधानात् । समानाधिकरणत्वेन प्रकाशविशेषणे एतज्जागरसमयवर्तितदीयप्रत्यक्षस्य एतज्जागराद्यपरोक्षात् पूर्वमभावात् प्रकाशि ताथसिद्ध्या हेत्वसिद्धिः । एतज्जागरणकालीनसमानाधिकरणप्रत्यक्षध्वंसा समानकालीनतज्जागरणकालीनप्रकाशत्वमेव हेतुरिति चेत् ? आलोकस्य समा नाधिकरणप्रत्यक्षासिद्धेः । समानाधिकरणप्रकाशध्वंसासमानकालीनत्वमेव प्रका शविशेषणमिति चेन्न ; – एतज्जागरणकालीनत्वस्य व्याप्तिग्रहानुपयुक्ततया व्यर्थ त्वात्, द्वितीयादिप्रभाया अपि प्राथमिकप्रकाशनाशासमकालीनत्वाच्च व्यभिचारात् । समानाधिकरणप्रकाशासमकालीनत्वमेव प्रकाशविशेषणमिति चेन्न ,- हेत्वसिद्धेः, प्रकाशमानस्य स्वात्मरूपप्रकाशसमानकालीनत्वात् । अभेदे सामा नाधिकरण्यं नेति चेन्न,– यत्र जागरे एकमेव प्रत्यक्ष तस्मिन्नाद्यप्रत्यक्षेऽसिद्धेः, जागराद्यप्राक्प्रकाशितप्राथमिकप्रत्यक्षे असिद्धेश्च. परोक्षज्ञानस्यापि प्रकाशत्वेन तदुत्तरभाविजागराद्यपरोक्षे ऽसिद्धेश्च; परोक्षज्ञानव्यावृत्तस्य प्रत्यक्षालोकानु- गतस्य प्रकाशत्वस्य निर्वक्तुमशक्यत्वात् । परोक्षज्ञानभिन्नत्वेन विशेषणे व्यर्थत्वं, व्याप्तिग्रह ऽनुपयोगादिति ।

अत्र नवीन. — जन्यसविकल्पकाजन्यज्ञानानुपदस्थप्रमाणाज्ञान पक्ष, अतो न सुखादिप्रमादिषु पूर्वोक्तबाध । ननु घटज्ञानाजन्यस्य तदुत्तरक्षणजन्म नोऽपि घटज्ञानस्य उक्तपक्षतावच्छेदकाक्रान्तत्वात् तत्र च स्वसमानाधिकरण-त्यादिना वक्ष्यमाणस्यापहेतोरभावात् भागासिद्धिरिति वाच्यम्, सविकल्पका जन्येत्यनेन स्वपूर्वसविकल्पकत्वमनागमग्रीवान्यसमये च पूर्जन्यत्वस्य विवक्षित स्यात् । अन्धकारानिवृत्त्यव्यवहितोत्तरकालीनचाक्षुषज्ञान वा पक्ष, स्वविषयावरण स्वनिवर्त्यवस्त्वन्तरपूर्वकमित्येक साध्यम्, स्वविषयावरणत्व च स्वजननायो-ग्यत्वम्, स्वनिवर्त्यत्व स्वजन्यध्वंसप्रतियोगित्वम् । वस्तुपद च स्वपरम् । तदन्तर — तदन्यत्, अनेन स्वस्य स्वाधिकरणक्षणोत्तरक्षणे सत्त्वेन स्वपूर्वत्व मस्तीत्यर्थान्तरता निरस्ता । इद च साध्य प्रागभावनिवृत्ति प्रतियोग्यति रिक्तेति मते, तेन स्वनिवर्त्येतीच्छाप्रागभावादिनार्थान्तरवारणम् । स्वविषया वरणेति स्वप्रागभावादिनार्थान्तरस्य वारितम् । स्वप्रागभावव्यतिरिक्तस्वनिवर्त्य स्वदेशगतवस्त्वन्तरपूर्वकमित्यपर साध्यम् । इदन्तु प्रतियोग्येव प्रागभाव निवृत्तिरिति मते । अत्र च स्वसमानाधिकरण प्रागभावस्स्वप्रागभाव, तेने च्छाप्रागभावादिभिर्नार्थान्तरत्वम् । आत्मत्वादिनार्थान्तरवारणाय स्वनिवर्त्येति ।

स्वदेशगतत्व च स्वसमानाधिकरणत्वे सति प्रत्यक्षत्वम्, तेन स्वजनकादृष्टादि भिर्नार्थान्तरता । अथवैकमेव साध्यम्, अत्र स्वप्रागभावव्यतिरिक्तेत्यादीना पूर्वोक्त एवार्थ. । स्वदेशगतेत्यत्र तु स्वाश्रये वर्तमानत्वमेव विवक्षितम् । अत्र च इच्छादिप्रागभाव स्वजनकादृष्टमात्मत्वादिक चिकीर्षादिद्वारा स्वज न्यतन्तुसयोगघटादिकार्यप्रागभावश्च क्रमाद्व्यवच्छेद्या. । अभावान्यत्वात् स्वप्रा गभावान्यत्वमन्यदेवेति न वैयर्थ्यमपि । अथवा स्वप्रतियोगिक प्रागभाव स्स्वप्रागभाव, स्वविषयावरणत्व स्वविषयसशयादिजननयोग्यत्वम्, स्वसत्ता क्षणनियतध्वसप्रतियोगित्व स्वनिवर्त्यत्वम्, ततश्च प्रागभावोऽपि परमते विशेष दर्शनतया सशयादिजनक इति स्वप्रागभावस्वजनकादृष्टा धकारादिव्यावृत्तये स्वप्रागभावेत्यादि विशेषणम् । परमते मनस्सयोगपूर्वकत्वेनार्थान्तरतानिवृत्तये स्वनिवर्त्येति । अथवा पराभिमतप्रागभावान्यत्वज्ञानसमानविषयज्ञाननिवर्त्यत्व ज्ञानसमानाश्रयत्वविशिष्टज्ञानसिध्यर्थं तानि विशेषणानीति न कस्यापि वैयर्थ्यम्, एकेनापि पदेन विना उद्देश्यसाध्यासिद्धे । येन विशे

पणेन विना स्वाभिमतार्थो न सिध्यति तस्यैव साध्यविशेषणत्वात् । स्वसमानाधिकरणविशिष्टज्ञानध्वंसोत्पत्तिसमयानाधारस्थितिकचाक्षुषसविकल्पकान्धकारनिवर्तकालोकान्यत्वादिति हेतुः । असिद्धिसाधनवैकल्यपरिहाराय निर्विकल्पके व्यभिचारवारणाय च सविकल्पकेत्यादि । सुखप्रत्यक्षे व्यभिचारवारणाय चाक्षुषेति । यद्वा— एतज्ज्ञानविषयदेशीयान्धकारस्थितिसमयास्थितिकप्रत्यक्षत्वे सति एतज्ज्ञानोत्पत्तिसमये एतद्विषयसम्बन्धित्वादिति हेतुः । देशान्तरीयद्वितीयादिप्रभायां व्यभिचारवारणाय एतद्विषयसम्बन्धित्वादिति । धारागतद्वितीयादिज्ञानव्यावृत्तये एतज्ज्ञानोत्पत्तिसमय इति । एतद्धेतुनिर्विकल्पकनिवृत्तये प्रत्यक्षेति । एतद्विषयपरकीयानुमित्यादौ व्यभिचारवारणाय अन्धकारस्थितिसमयास्थितिकेति । तच्च अन्धकारस्थितिसमयस्थित्यभावप्रयोजकरूपवत्त्वं विवक्षितम् । तच्चालोके आलोकत्वं ज्ञाने चाक्षुषत्वमस्ति, अनुमितौ तु न किञ्चिदिति न परानुमितौ व्यभिचारः । पक्षीकृतज्ञानस्यापि देशान्तरीयान्धकारसमकालीनत्वादसिद्धिवारणाय एतज्ज्ञानविषयदेशीयेति । यदा द्वितीयसाध्यं प्रति उक्तहेत्वोः प्रयोगः तदा तयोर्धाराव्यावर्तकविशेषणमनुपादेयम्, तेन विनापि तत्र पूर्वज्ञाननिवर्तकतया तत्साध्यस्य सत्त्वेन व्यभिचाराभावात् । यद्वा एतद्विषयमात्रावारकनिवर्तकत्वे सति आवारकान्यत्वं हेतुः । मानपदमीश्वरादौ व्यभिचारवारणाय, तेषामेतज्ज्ञानाविषयत्वसाधारणं सत्त्वपि निवर्तकत्वात् । आवारकं च तद्विषये नास्तीत्यादिव्यवहारप्रयोजकमुच्यते । नच वर्णितसाध्यसिद्धेः पूर्वमेतज्ज्ञानं न सम्भवतीति वाच्यम्, रूपादिचाक्षुषज्ञानाभावे तस्मिन् संशयादिजनकतद्ज्ञानरूपावरणस्य तत्सत्त्वे तदभावस्य चानुभवसिद्धत्वेन भावरूपाज्ञानात्मकावरणनिवर्तकत्वज्ञानाभावेपि सामान्यतस्सिद्धत्वात् । तद्विषयावरणसमयावृत्तित्वे सति तदावरणनिवर्तकत्वं वा हेतुः । एतत्सिद्धिः पूर्ववदेव । नचाप्रयोजकमत्वं, प्राथमिकज्ञानविषये उभयवादिसम्मतस्याज्ञातत्वस्य भावरूपाज्ञानानङ्गीकारे कथमपि निर्वक्तुमशक्यत्वात्, लाघवेनाप्रकाशशब्दस्य भावरूपाप्रकाशविषयत्वौचित्याच्च । भावरूपाज्ञानाख्यावरणादन्यस्य प्रागभावादेर्निवर्त्यत्वासम्भवेनावरणनिवर्तकत्वरूपहेतूच्छित्तिश्च विपक्षे बाधिका । एवं "देवदत्तप्रमा तत्स्थप्रमाभावाति

रेकिणः । अनादिर्ध्वंसिनी मत्तादेवदत्तप्रमा यथे" ति चित्सुखोक्तानुमानमप्यत्र प्रमाणम् । न च सुखादिप्रमाया परोक्षवृत्तौ द्वितीयादिप्रत्यक्षप्रमाया च बाध इति वाच्यम्, जन्यसविकल्पकाजन्यदेवदत्तघटचाक्षुषप्रमाया पक्षत्वेन विवक्षितत्वात् । न च धारावाहिकद्वितीयादिबुद्धौ व्यभिचारः, तत्रापि पक्षप्रमाप्रागभावातिरिक्तप्रागभावानिवर्तकतया साध्यसत्त्वात् । देवदत्तगतत्व च नानादिविशेषणम्, यज्ञदत्तप्रमाया साध्याप्रसिध्या व्याप्तिग्रहायोगात्, किन्तु मात्रविशेषणम् । प्रागभावनिवृत्ति प्रतियोग्यतिरिक्तेति मते इदं साध्यम्, तेन न प्रागभावातिरिक्तेत्यस्य वैयर्थ्यम्, नवा दृष्टान्ते साध्यवैकल्यम्, नवा इच्छादिप्रागभावनिवर्तकतयार्थान्तरता । न च साध्ये प्रमापदवैयर्थ्यम्, प्रागभावातिरिक्तेत्यत्र सामान्याभावस्य विवक्षिततया देवदत्तसुखादिप्रागभावातिरिक्तत्वाभावानिवर्तकत्वेनार्थान्तरतापरिहारार्थत्वात् । नन्वेवमपि घटप्रमाप्रागभावातिरिक्तस्वप्रागभावनिवर्तकत्वेनार्थान्तरता, प्रमापदेन पक्षीभूतप्रमाया एव ग्रहणात् । न च तत्रापि पक्षीभूतघटप्रमान्तरप्रागभावातिरिक्तस्वाभावनिवर्तकत्वात् पक्षीभूतप्रमाभावस्यार्थान्तरता शङ्कनीया, प्रमाव्यक्तीनां प्रत्येकमेव पक्षत्वात् । नन्वेवं देवदत्तगतत्वविशेषणं व्यर्थम्, पक्षीकृतप्रमाया अधिष्ठानरूपस्वप्रागभावातिरिक्तान्तःकरणगतप्रागभावानिवर्तकत्वेनार्थान्तरतापरिहारार्थत्वात् । अथवा जन्येत्यादि निरुक्तमेव पक्षतावच्छेदकम् । साध्ये प्रागभावातिरिक्तेत्यत्र सामान्याभाव एव विवक्षितः । नन्वेवं प्रमापदवैयर्थ्यम्, देवदत्तप्रमानिवर्त्यांशाने देवदत्तगतत्वस्यानन्वयकत्वात् तस्य चाज्ञानस्य स्वावच्छिन्नप्रागभावरूपत्वाच्च पक्षीकृतप्रमाया देवदत्तगतप्रागभावातिरिक्तनिवर्तकत्वस्य बाधितत्वेन प्रमापदस्य तत्परिहारार्थत्वात् । न चाप्रयोजकता, तर्काणामुपन्यस्तत्वात् । अनुमानान्तराण्यपि तत्र प्रमाणानि । इच्छाद्वेषप्रयत्नासमानकालीनसामग्रीजन्यप्रत्यक्षभावधर्माजनकस्वसामग्रीकालीनजन्याविशिष्टज्ञानाविषयविषयकघटादिप्रत्यक्षप्रमा ज्ञानातिरिक्तप्रत्यक्षनिवर्तिका, स्वसामग्रीकालीनजन्याविशिष्टज्ञानाविषयविषयकबाह्यविषयजन्यप्रमात्वात्, स्वविषयप्रत्यक्षजनकप्रतियोगिप्रत्ययवत् । पक्षे परोक्षप्रमावारणाय प्रत्यक्षेति पदम् । स्वमते शब्दजनिताहमाकारपरोक्षवृत्तौ बाधवारणाय घटादीति । धारावाहिकद्वितीयादिज्ञानव्यावृत्तये स्वसामग्रीकालीनेत्यादि ।

इच्छादिप्रागभावनिवर्तकतयार्थान्तरताव्यावृत्तये धर्माजनकेति । संस्कारजनकतया ऽसम्भववारणाय प्रत्यक्षेति । स्वध्वंसजनकतया ऽसम्भवो माभूदिति मात्रपदम् । जिज्ञासाद्यनन्तरभाविघटादिप्रमायास्तन्निवर्तकतयार्थान्तरता माभूदिति इच्छेत्यादि । साध्ये संस्कारप्रागभावेनार्थान्तरता माभूदिति प्रत्यक्षेति । स्वनिवर्तकतया विशेषणज्ञानादिनिवर्तकतया चार्थान्तरता माभूत् इति ज्ञानातिरिक्तेति । हेतौ परोक्षप्रमायामुक्ताहमाकारवृत्तौ द्वितीयादिज्ञाने च व्यभिचारवारणाय स्वसामग्रीत्यादिविशेषणम्, बाह्यपदं विषयजन्यपदं च । यद्वा— इच्छाद्वेषप्रयत्नसमानकालीनेत्येतद्धर्मावच्छिन्नैव पक्षः; तत्र च पक्षविशेषणप्रयोजनानि पूर्वोक्तान्येव । कार्यत्वसमानाधिकरणातिरिक्तप्रत्यक्षनिवर्तकमिति साध्यम्, पूर्वोक्तमेवात्रापि प्रत्यक्षपदकृत्यम् । उत्तरसाध्येष्वप्येवं द्रष्टव्यम् । ज्ञानेच्छादिनिवर्तकत्वेनार्थान्तरतावारणाय समानाधिकरणेति । अज्ञानस्यापि स्वसमानाधिकरणतया बाधवारणाय कार्येति । यद्वा — कार्यत्वानधिकरणप्रत्यक्षनिवर्तकमिति साध्यम् । अत्र च परमतानुसारेण घटादिप्रागभावनिवर्तकमृदादिप्रत्यक्षं दृष्टान्तः । इच्छादिनिवर्तकत्वेनार्थान्तरतावारणाय कार्यत्वेति विशेषणम् । यद्वा जन्यज्ञानासहकृतसामग्रीजन्यध्वंसप्रतियोगिजातीयातिरिक्तज्ञानान्यप्रत्यक्षनिवर्तकमिति साध्यम् । अत्र जन्येत्यादिकं ज्ञानान्यत्वं च प्रत्यक्षविशेषणम् । स्वत्वजनकविशेषणज्ञाननिवर्तकतयार्थान्तरता माभूदिति ज्ञानान्यपदम् । इच्छादिनार्थान्तरतावारणाय ध्वंसप्रतियोगीत्यादि । तावन्मात्रोक्ते ऽज्ञानस्यापि विनाशित्वात् बाधस्स्यादिति जन्यज्ञानेत्यादिप्रतीकम् । नच साध्यवैकल्यम्, घटस्यापि सत्तादिना तादृशध्वंसप्रतियोगिजातीयत्वादिति वाच्यम्; — ध्वंसप्रतियोगिजातीयपदेन तादृशध्वंसप्रतियोगिवृत्तियावद्वृत्तिजातिमत्त्वस्य विवक्षितत्वात् । जातिरहितप्रागभावनिवर्तकमृदादिज्ञानं वात्रापि दृष्टान्तः । जन्यज्ञानाजन्यध्वंसप्रतियोगिजातीयातिरिक्तज्ञानान्यप्रत्यक्षनिवर्तकमिति वा साध्यम् । दृष्टान्ते साध्यवैकल्योद्धारः पूर्ववदेव । स्वेनार्थान्तरतानिरसनाय ज्ञानान्येति । पूर्ववदेव ध्वंसप्रतियोगीत्यादेर्जन्यज्ञानेत्यादेश्च प्रयोजनम् । नचात्र साध्यद्वयेपि बाह्यावृत्तिजातिमद्भिन्नप्रत्यक्षनिवर्तकमित्येतावताभीष्टसिद्धेः शेषवैयर्थ्यम्, विशिष्टाभावस्यान्यत्वात् ।

गुणत्वानधिकरणप्रत्यक्षानिवर्तकत्वं वा साध्यम्, गुणत्वेत्यादिकमिच्छादिनार्थान्तरतावारणार्थम् ; यद्वा स्वस्थितिक्षणनियतस्वविनाशसामग्रीमद्भिन्नप्रत्यक्षनिवृत्तौ चरमकारणत्वं साध्यम् । इच्छादिनार्थान्तरतां व्यावर्तयितुं स्वस्थितीत्यादि । सिद्धान्ते यावत्कारणनाशं वृत्तिज्ञानस्य स्थायित्वात् स्वनिवर्तकतयार्थान्तरतावारणाय चरमकारणत्वपर्यन्तम् । अत्र सर्वत्रापि पूर्वानुमानोक्त एव हेतुः । यथासम्भवं तत्र तत्रोक्त एव दृष्टान्तः । यद्वा चेष्टानपेक्षज्ञानाजन्यप्रत्यक्षनिवर्तकम्, चेष्टाजन्यान्यकार्यातिरिक्तप्रत्यक्षानिवर्तकम्, चेष्टानिमित्तजातीयातिरिक्तप्रत्यक्षनिवर्तकम्, अहमनुभवविषयधर्मातिरिक्तनिवर्तकमित्येवमादि साध्यान्तरं द्रष्टव्यम् । एवमविद्या महाविद्याभिरपि सिध्यति । अयं घटः एतद्घटाज्ञानान्यान्यभावान्यः, मेयत्वात्, पटवत् । एतद्घटाज्ञानाभ्यां यदन्यत् पटादि सर्वं ततो ऽन्यः एतद्घटः अज्ञानं च, तादृशभावादन्यत्वं च एतद्घटरूपभावान्यत्वस्य तत्र बाधितत्वात् अज्ञानस्य भावत्वमादाय सिध्यति । घटान्यत्वमादाय पक्षातिरिक्ते साध्यसिद्धिः । अज्ञानं स्वस्वेतरवृत्तित्वरहितभाववृत्तिधर्माधिकरणम्, मेयत्वात्, घटवत् । अज्ञानतदितरवृत्तित्वरहितो धर्मः अज्ञानमात्रवृत्तिर्वा तदितरवृत्तिर्वा स्यात् ; तत्र तदितरमात्रवृत्तिभाववृत्तिधर्माधिकरणत्वसाधने बाधात् स्वमात्रवृत्तिं भाववृत्तिधर्ममादाय साध्यसिद्धावज्ञानस्य भावत्वसिद्धिः । अज्ञानान्यत्वादिकमादाय सर्वत्र भावे स्वभावेषु च साध्यसिद्धिः । अज्ञानत्वं स्वस्वेतरवृत्तित्वरहितभाववृत्तिवृत्तिधर्माधिकरणम्, मेयत्वात्, घटवत् । अज्ञानत्वेतरमात्रवृत्तिधर्मस्याज्ञानत्वे बाधितत्वात् अज्ञानत्वमात्रवृत्तिं भाववृत्तिं धर्ममादाय साध्यपर्यवसाने अज्ञानस्य भावत्वसिद्धिः । अज्ञानत्वान्यत्वस्य भाववृत्तिमेयत्वादिभाववृत्तित्वात् तदाश्रयत्वात् सर्वत्रापि सपक्षे साध्यसिद्धिः । भावत्वं स्वस्वेतरवृत्तित्वानधिकरणाज्ञानवृत्तिवृत्तिधर्मवत्, मेयत्वात्, घटवत् । भावत्वेतरमात्रवृत्तिधर्मस्य भावत्वे बाधात् भावत्वमात्रवृत्तिमज्ञानवृत्तिवृत्तिधर्ममादाय साध्ये बाध्ये ऽज्ञानस्य भावत्वसिद्धिः । अज्ञानवृत्तिमेयत्वादिवृत्तिभावत्वान्यत्वमादाय सपक्षे साध्यसिद्धिः । नचाप्रयोजकत्वम्, घटाद्यज्ञानाभावे तद्विषये वल्मीकभ्रमानुत्पादप्रसङ्गात् ; न जानामीति ज्ञानसामान्यविरोध्यनुभवप्रसङ्गाच्च । घटध्वंसाजनकघटापरोक्षप्रमाणज्ञाने घटं न जानामीत्यनुभवविषय

निवर्तकम्, घटापरोक्षप्रमाणज्ञानत्वात्, घटध्वंसजनकघटप्रत्यक्षवत्, नच प्रागभावेनार्थान्तरता, तस्य ज्ञानानिवर्त्यत्वात्, निवर्तकत्वयोग्यता साध्येति न धाराद्वितीयादिज्ञाने बाधो व्यभिचारो वा । यद्वा— स्वसामग्रीकाले स्वसमानाधिकरणज्ञानाभिन्नविषयत्व पक्षे जन्यसविकल्पकाजन्यत्व च हेतौ विशेषणमस्तु । मूलाज्ञाने तु प्रयुज्यते— ब्रह्मसाक्षात्कार स्वसमानविषयभावरूपाज्ञाननिवर्तक, अज्ञातविषयसाक्षात्कारत्वात्, घटादिविषयसाक्षात्कारवत्; नचाप्रयोजकत्वम्, मूलाज्ञानानङ्गीकारे मोक्षशास्त्रानर्थक्यप्रसङ्गात् । दुःखध्वंसस्यापुरुषार्थत्वात्, तत्वज्ञान विनापि प्रागभावक्षयादेवोपपत्तेश्च । धर्माधर्मादिरूपबन्धहेतोरसत्यत्वे ज्ञानानिवर्त्यत्वप्रसङ्गात् । भोगादेव कर्मणां क्षय इति चेन्न,— तथापि ज्ञानवैयर्थ्यप्रसङ्गात् । अनन्तकर्मणा युगपद्भोगासम्भवात् क्रमेण भोगे कर्मप्रवाहस्यानुच्छेदप्रसङ्गात् । आनन्दस्यापि जन्यस्यामृतत्वायोगात् । मुक्तौ शरीराद्यभावेन तदुत्पत्त्यसम्भवाच्च । नित्यानन्दाभिव्यक्तिर्मोक्ष इत्यत्रापि अभिव्यक्तिज्ञान तत्प्रागस्ति, नवा? अन्ते तस्य कार्यत्वादनित्यत्वापत्ति. । पश्चाच्च शरीराद्यभावान्नोत्पत्तिरिति मुक्तेरनित्यत्वप्रसङ्ग । प्रथमे चानावृतस्य तस्यदानीं सत्त्वेनुपलम्भो न स्यात्, आवरणस्य च स्वरूपभूते स्वधर्मे वा आनन्दे वास्तवस्यासम्भवात् । नहि प्रकाशमानता प्रकाशमानत्वे युगपदेकस्य वस्तुनस्सम्भवत । नचेदानीमानन्दस्सङ्कुचितो भाति, मुक्तौ तु विस्तृत इति वाच्यम्, —— निरवयवे आनन्दे वास्तवसङ्कोचादेरसम्भवात् । लिङ्गशरीरनिवृत्तिरिति च न साधु, तन्मात्रस्यापुरुषार्थत्वात् । तस्मादानन्दरूपावारकाविद्यानिवृत्तिर्मोक्ष इत्यवश्याभ्युपगन्तव्य शास्त्रार्थवत्त्वाय । उपादानत्व अनादिज्ञाननिवर्त्यवृत्ति, कारणत्वावान्तरधर्मत्वात्, निमित्तत्ववत् । असमवायित्वस्यासिद्धेर्न तत्र व्यभिचार । अनाश्रितवृत्तिकारणविभाजकधर्मत्वादिति वा हेतु । नचाप्रयोजकत्वम्, सर्गाद्यकार्यस्योपादानान्तरानिरूपणात् । निरवयवाणूना संयोगासम्भवात् तत्रप्रमाणाभावाच्च नोपादानत्वम्, आत्मनस्तु निरवयवस्य न परिणाम, विवर्तस्तु असत्यरूपान्तरापत्तिरूप असत्यप्रपञ्चसमानस्वभावाविद्या विना न सम्भवति सत्यस्य ब्रह्मण । स्वतन्त्रा तु पराभिमता प्रकृतिर्नाम्त्येव, मानाभावादिति नोपादानम् । पर

तन्त्रा च साऽविद्यैव, तस्या अनादित्वात्, ज्ञाननिवर्त्यत्वाच्च। ज्ञाननिवर्त्यत्वं च तस्या श्रुतिसिद्धम्। मृद्घट इत्यादिनानुभूयमानभाताज्ञातभेदस्य विरोधेन वास्तवत्वासम्भवात् अनिर्वचनीयस्य तादृशा विद्या विना ऽसम्भवाच्च। अत एव उपादानत्वमनादिज्ञाननिवर्त्यवृत्ति न भवति, निमित्तत्वातिरिक्तकारणत्वावान्तरधर्मत्वात्, असमवायित्ववदिति प्रत्यनुमाने निमित्तत्वेन सोपाधिकस्य च परास्तम्, तदभावेनास्य दुर्वचत्वात्, साध्याव्यापकत्वाच्च। प्रपञ्चस्य सत्यकारणकत्वे सत्यत्वापत्तेस्तद्भेदस्यापि तथात्वात्, तस्य सर्वात्मत्वाद्वितीयत्वादिपरानेकश्रुतिबाधप्रसङ्गेन कारणान्तरस्य बाधितत्वाच्च। तस्मादनादिज्ञाननिवर्त्योपादनं नाज्ञानादन्यदबाधितमिति तत्सिद्धिः।

एवमपीतरम्यमानकालीनः श्यामघट पीतघटोपादानजडोपादानकः, घटत्वात्, पीतघटवत्। अनापीतघटेत्यादि पक्षविशेषण पीतघटावयवैरेव कालान्तरे श्यामघटारम्भसम्भवादर्थान्तरतावारणाय। नचाप्रयोजकत्वम्, अन्यथा अनुगतघटाकारिमकत्वप्रसङ्गात्। अविद्यातिरिक्तघटत्वे प्रमाणाभावात्। एवं अनादिभावत्व ज्ञाननिवर्त्यवृत्ति, अनात्मवृत्तित्वात्, घटत्ववत्, अनादित्व ज्ञाननिवर्त्यभावत्ववृत्ति, जडभाववृत्तित्वात्, घटत्ववत्, भावत्व अनादिज्ञाननिवर्त्यवृत्ति, अनादिजडवृत्तित्वात्, प्रागभावत्ववदित्याद्यूह्यम्। सर्गाद्यकालीन कार्यं जडोपादानकम्, कार्यत्वात्, घटवत्। तच्च लाघवादेकम्, सर्गाद्यकार्योपादानत्वादनादि, उपादानत्वाच्च भावरूपमेवेति — अनादि एकं भावरूप जडोपादान सिद्धम्, तदेवाज्ञानम्।

अत्रोच्यते — यत्तावज्ज्ञानमित्यादि पक्षतावच्छेदकमुक्तम्, तदनुपपन्नम्। तथाहि — यदि चिच्छक्तिरित्यस्य ध्वंससामग्र्या आद्यत्वे सर्वदा सम्भवादाश्रयासिद्धिः। नच सर्गाद्यकालीनचाक्षुषज्ञाने तत्सिद्धिः, चाक्षुषज्ञानस्याद्यत्वे हि तथा स्यात्; तत्र च न मानमस्ति, स्पार्शज्ञानस्यापि पूर्वं सम्भवेन तद्ध्वंससामग्र्या आद्यचाक्षुषज्ञानोत्पत्तिसमयेसम्भवात्। नच समानाधिकरणेति सविकल्पकविशेषणम्, जन्यपदवैयर्थ्यात्। भ्रमस्याप्यधिष्ठानादिसन्निकर्षजन्यत्वमस्ति, नवा? आद्ये प्रथमविशेषणेनैव तद्व्यावृत्तिसिद्धेः

द्वितीये शुक्तिगतरूपादिविषयतया तदज्ञाननिवर्तकत्वेन साध्यसत्त्वात् प्रमाणपदवैयर्थ्यम् । प्रमाणज्ञानत्वमपि यदि तद्वति तत्प्रकारकज्ञानत्वम् , तदा त्वन्मते प्रमाणपदेन न भ्रमव्यावृत्तिः; यद्यबाधितार्थविषयत्वम् , तदा त्वन्मते असिद्धिः । अधिष्ठानांशमादायाबाधितार्थत्वं तु भ्रमप्रमयोस्तुल्यम् । अन्तःकरणवृत्त्यादिरूपत्वे ऽस्मन्मतेनाश्रयासिद्धिः । अन्धकारनिवृत्तीत्यादि पक्षतावच्छेदकान्तरमप्ययुक्तम् ; द्वितीयस्यापि देशान्तरीययत्किञ्चिदन्धकारनिवृत्त्यव्यवहितोत्तरकालत्वेन तत्र बाधात् । स्वविषयावारकत्वविवक्षायामपि अन्धकारस्थघटे प्रदेशान्तरानीते चक्षुषा गृह्यमाणे द्वितीयादिज्ञानात् प्रागेवान्धकारनाशे तज्ज्ञाने बाधः । स्वोत्पत्त्यव्यवहितपूर्वद्वितीयक्षणे स्वविषयावारकत्वविवक्षायामपि द्वितीयादिबुद्धौ बाध एव, स्वविषयीभूतघटत्वाद्यावारकान्धकारस्य तत्पूर्वद्वितीयक्षणे देशान्तरे निवृत्तिसम्भवात् । स्वोत्पत्त्यव्यवहितपूर्वद्वितीयक्षणे यावत्स्वविषयावरणान्धकारनिवृत्त्युत्तरकालीनत्वं वा यद्देशस्थतया स्वविषयं गृह्णाति तद्देशस्थान्धकारनिवृत्त्यव्यवहितोत्तरकालीनत्वं वा विवक्षितमिति चेन्न; — बाधान्धकारदशायां च वा घटाभावे गृहीते अन्धकारनाशोत्तरक्षणे बाध्यावेव चक्षुषा घटाभावज्ञाने बाधात् , तस्य स्वजन्यज्ञानसमानमात्रविषयत्वेनाज्ञाननिवर्तकत्वात् । स्वविषयावरणेत्याद्युक्तसाध्यं चायुक्तम् , प्रागभावनिवृत्तेः प्रतियोग्यतिरेकपक्षेऽपि न तस्य प्रतियोगिसाध्यत्वम् , प्रागभावप्रतियोगिनोरेककालत्वविरोधादेः पूर्वमेवोक्तत्वेन प्रतियोगिसामग्र्यैव निवृत्तेः । तथाच इच्छाप्रागभावस्यापि ज्ञाननिवर्त्यत्वान्न स्वनिवर्त्यपदेन तद्व्यावृत्तिः । स्वप्रागभावेत्यादिद्वितीयसाध्येऽपि स्वजनकादृष्टेनार्थान्तरता, तस्याप्यलौकिकप्रत्यक्षविषयत्वात् ; लौकिकप्रत्यक्षविवक्षायामज्ञानस्य लौकिकप्रत्यक्षत्वाभावात् लौकिकप्रत्यासत्तिजन्यत्वरूपलौकिकत्वस्य नित्येऽज्ञानसाक्षिण्यभावात् । अलौकिकप्रत्यासत्त्यजन्यप्रत्यक्षविवक्षायामीश्वरप्रत्यक्षविषयत्वात् स्वजनकादृष्टमादायार्थान्तरतैव । जन्यत्वेन तद्विशेषणे ऽज्ञानसाक्षिणो नित्यत्वात् बाधः । अज्ञानाकाराविद्यावृत्तिमादाय जन्यत्वोपपादने चाज्ञानावच्छेदकतया ऽदृष्टस्यापि भानात् सैवार्थान्तरता । जन्येति स्थाने ऽस्मदादीति विशेषणेऽप्ययमेव दोषः । साध्यद्वयेऽपि कश्चित्घटत्वनिर्विकल्पकानन्तरं पटादिवस्त्वन्तरविषयेच्छा, ततो

घटत्वविशिष्टसविकल्पकस्य सम्भवात् तत्रार्थान्तरता; विरोधिगुणतया घटचाक्षुष ज्ञानस्य पटादिविषयेच्छानिवर्तकत्वात् । नच निर्विकल्पकानन्तरमविलम्बेन सविकल्पकस्यैवोत्पत्तेरन्तरा नेच्छादिसम्भव इत्यादि वाच्यम्, तथासति पट ज्ञानानन्तरोत्पन्नघटज्ञाने जायहेत्वसिद्धिवारणाय सविकल्पकाजन्येत्यनेन सविकल्पक ध्वंससामग्रीशून्यसमये चक्षुर्जन्यत्वमभिप्रेतमिति तव विवक्षानुपपत्तेः ; तत्र घटत्वनिर्विकल्पकानन्तरं पटाद्यर्थान्तरज्ञानं अनन्तरं घटसविकल्पकमिति वक्त व्यत्वात् । यदि च पटज्ञानानन्तरं घटनिर्विकल्पकं अनन्तरं घटसविकल्पकं तनेति स्यात्, तदा पटसविकल्पकध्वंसोत्पत्तिसमयोत्पत्तिकतया घटसविकल्पकस्य तत्स- मयानाधारस्थितिकत्वस्य सत्त्वेन मागासिध्यभावात् तस्य पक्षबहिर्भावार्थं पक्ष विवक्षानुपपत्तेः । नच स्मरणाद्यात्मकमेव तत्र घटत्वविशेषणज्ञानं तदनन्तरं पटज्ञानं तदनन्तरं घटसविकल्पकमिति वाच्यम्, जन्यसविकल्पकाजन्येत्यनेनैव तस्य पक्षबहि र्भावे सिद्धे विवक्षानुपपत्तितादवस्थ्यात् । एतेन तृतीयसाध्यमपि निरस्तम् ; विषयत्वेन जन्यप्रत्यक्षत्वेन च सामान्यतः कार्यकारणभावात् । इच्छाप्राग भावादिव्यावर्तकस्वप्रागभावादिपदवैयर्थ्यं च । चतुर्थसाध्यमप्ययुक्तम् ; स्वस मानविषयसंशयजननयोग्यातीतकालीनसाधारणधर्मदर्शनमादायार्थान्तरत्वात् ; पक्षी भूतज्ञानसत्ताक्षणे तद्ध्वंसस्य सत्त्वात् । स्वसत्ताक्षणनियतध्वंसप्रतियोगीत्यत्र नियत पदं च व्यर्थम् । ननु स्वसत्ताक्षणवर्तिध्वंसप्रतियोगीत्युक्ते क्वचित् स्वसत्ताक्षणे स्वजनकमनस्संयोगध्वंसस्य सम्भवात् अर्थान्तरतादवस्थ्यमिति चेत् ? नियतत्व विशेषणेऽपि तत्तादवस्थ्यात्, तस्य ध्वंसविशेषस्य पक्षीभूततज्ज्ञानव्यक्तिसत्ता क्षणनियतत्वात् । ननु यद्धर्माश्रयप्रतियोगिकध्वंसत्वं जन्यसविकल्पकाजन्य चाक्षुषघटज्ञानस्थितित्वावच्छिन्ननिरूपितव्यापकतावच्छेदकं तद्धर्मावच्छिन्नपूर्वकत्वं विवक्षितम्, तन्मनस्संयोगविशेषध्वंसत्वं च न तथा, स्वजनकमनस्संयोगध्वंसश्च न स्वसत्ताक्षणे नियत इति नियतत्वेन विशेषणे प्रागिव नार्थान्तरतेति चेन्न ; — एवमपि यत्किञ्चिदात्ममनस्संयोगध्वंसस्य स्वसत्ताक्षणे आवश्यकत्वात् सर्वत्रा त्ममनस्संयोगमादायार्थान्तरता दुर्वारैव । उद्देश्यसिद्धये विशेषणानीत्यपि पक्षो न युक्तः; स्वविषयावारकनिवर्तकत्वादिति हेत्वसिद्धिं परिहरता त्वया 'स्वविष यावारकत्वादिकं सिद्धमेव, भावत्वमात्रे विप्रतिपत्त्यानुमानप्रवृत्तिरि' त्युक्तत्वेन स्वसमानविषयकत्वादीनां सिद्धत्वेनानुद्देश्यत्वात् । ननु भावत्वेन सहासिद्ध- त्वात् स्वविषयावरणवादीनामुद्देश्यत्वेति चेत् ? तर्हि प्रमेयत्वादीनामपि

ग्राह्यत्वादिनिरुक्तधर्मैस्सहाभिन्नत्वात् तेषामपि साधनप्रसङ्गात् । तैर्विनाप्यज्ञानसिद्धेर्न तेषामुद्देश्यतेति चेत् ? तर्हि प्रागभावव्यतिरिक्तस्वविषयावरणपूर्वकमित्येतावता स्वेष्टसिद्धेश्शेषवैयर्थ्यात् । नच तमोऽन्यावृत्त्यर्थत्वान्न व्यर्थतेति वाच्यम् , स्वनिवर्त्यस्वदेशगतेत्युक्तयोरन्यतरणैव तद्व्यावृत्तिसिद्धावन्यतरवैयर्थ्यात् । आद्यहेतोरिच्छादिव्यवहितघटज्ञानविनाशकालोत्पन्नतद्घटविषयज्ञाने व्यभिचारः । विजातीयाव्यवधानेन चक्षुस्सन्निकर्षजन्यत्व विवक्षितमिति चेन्न,— किं व्यवधानाव्यवधाने पूर्वोत्तरज्ञानयोः, उत सन्निकर्षज्ञानयोः ? नाद्यः, इच्छाव्यवहितनिर्विकल्पकजन्यसविकल्पके भागासिद्धेः । न द्वितीयः, अव्यवधानविवक्षयापि पूर्वोक्तव्यभिचारानुद्धारात् । नहीच्छा सन्निकर्षस्य तत्र द्वार भवति । विजातीयापूर्वकत्वमात्रविवक्षायामपि आत्मादिपूर्वकत्वात् , जन्यविजातीयापूर्वकत्वविवक्षायामपि घटादिपूर्वकत्वात् , चक्षुस्सन्निकर्षजन्यत्वविवक्षायामपि यत्किञ्चिच्चक्षुस्सन्निकर्षध्वंसादिपूर्वकत्वादसिद्धिः । स्वजनकसन्निकर्षजन्यविजातीयापूर्वकत्वविवक्षाया घटज्ञानानन्तरतद्विषयेच्छाव्यवहितघटज्ञानान्तरे तदिच्छायाः परम्परया तत्सन्निकर्षजन्यत्वेन तद्व्यवधानाद्व्यभिचारपरिहारेऽपि घटज्ञानानन्तर तत्सन्निकर्षाजन्यपटाद्यर्थान्तरेच्छाव्यवहितघटज्ञानान्तरे व्यभिचारात् । यत्र च सच्चक्षुस्सन्निकर्षजन्यसविकल्पकाद्द्वितीयक्षण इच्छाविनाशक्षणे प्रयत्नस्तदनन्तर ततएव सन्निकर्षान्निर्विकल्पकपुरस्सर सविकल्पकं जायते तत्र भागासिद्धिश्च । अपिच यत्र वाय्वादौ त्वचा घटाभावो गृहीतः द्वितीयक्षणे चान्धकारादिनिवृत्तौ तृतीयक्षणे चक्षुषा तत्रैव घटाभावग्रहः , तत्र पूर्वज्ञानानधिकस्वविषये तस्मिन्व्यभिचारः । द्वितीये हेतोरपि उक्तपक्षतावच्छेदकावच्छिन्नज्ञानस्य द्वितीयालोकेनापि सम्भवात् द्वितीयालोके व्यभिचारः । प्रथमालोकजन्यज्ञानमेव पक्षः, तदुत्पत्तिसमय एव तज्ज्ञानोत्पत्तिसमयशब्देनापि विवक्षित इति चेन्न;— प्रथमद्वितीयालोकाभ्यां क्वचित्पक्षीभूतज्ञानोत्पत्तिसम्भवेन तत्र द्वितीयालोके व्यभिचारात् । प्रथमालोकमात्रजन्यत्व पक्षविशेषणमिति चेन्न;— जालसूर्यमरीचिकामात्रजन्यानिरुक्तपक्षतावच्छेदकाक्रान्तत्रसरेणुप्रत्यक्षकालीने तन्मरीचिकानन्तरभाविनि प्रदीपालोके व्यभिचारात् । किंच एतज्ज्ञानोत्पत्तिसमये एतद्विषयसम्बन्धिपरकीयद्वितीयादिज्ञाने व्यभिचार । यदत्रोक्त तदीयप्रथमज्ञानस्यापि पक्षत्वेन तदुत्पत्तिकाले परकीयद्वितीयादिज्ञानस्य तद्विषयसम्बन्धित्वाभावान्न व्यभिचार इति, तत्तुच्छम् , परकीयप्रथमज्ञानोत्पत्तिसमये एत

द्विषयसम्बन्धित्वाभावेपि एतदीयप्रथमज्ञानोत्पत्तिसमये एतद्विषयसम्बन्धित्वसत्त्वेन तत्र हेतुसत्त्वात्, अन्यसविकल्पकाजन्यचाक्षुषघटज्ञानस्य पक्षीकृतस्यैव एतत्पदेनाभिधानात् । यदि च पक्षीकृतयत्किञ्चिज्ज्ञानोत्पत्तिसमये तद्विषयसम्बन्धित्वेपि तादृशज्ञानान्तरोत्पत्तिसमये तद्विषयसम्बन्धित्वाभावेन हेत्वभाव उच्येत, तर्हि स्वरूपासिद्धिरेव । नहि कस्यापि ज्ञानस्य तादृशसर्वज्ञानोत्पत्तिसमये तद्विषयसम्बन्धित्वमस्ति । अपि च एतद्विषयसम्बन्धित्वं किमेतद्विषयविषयकत्वम्? एतद्विषयसम्बन्धमात्रं वा? नाद्यः, साधनवैकल्यात्; आलोकस्य निर्विषयत्वात् । द्वितीये तु अन्धकारसामान्याभावे व्यभिचारः । किञ्च– एतज्ज्ञानसमानकालीनैतत्समानविषयपरकीयानुमितिविशेषे व्यभिचारः । नन्वन्धकारस्थितिसमयस्थित्यभावप्रयोजकरूपवत्त्वमत्र विवक्षितमिति चेन्न; – प्रयोजकत्वं हि न व्याप्यत्वादन्यत् सम्भवति । तच्च उक्तानुमितिविशेषेपि चाक्षुषज्ञानसमकालोत्पत्तिकत्वरूपमस्त्येव । किञ्च– एतद्विषयदेशीयान्धकारस्थितिसमयस्थित्यभावप्रयोजकरूपवत्त्वमात्रं विवक्षितम्? उत एतद्विषयदेशे एतद्विषयदेशीयान्धकारस्थितिसमयस्थित्यभावप्रयोजकरूपवत्त्वं वा? नाद्य, एतद्विषयदेशीयान्धकारस्थितिसमये देशान्तरे आलोकस्य सत्त्वेन आलोकस्य तत्समयास्थितिकत्वप्रयोजकत्वाभावात् । न द्वितीयः, ज्ञानस्य एतद्विषयदेशे घटादावसत्त्वेन ज्ञानत्वस्यैव तत्प्रयोजकतया पूर्वोक्तपरकीयानुमितेरपि तादृशत्वेन व्यभिचारानिस्तारात् । किंच – जन्यसविकल्पकाजन्यचाक्षुषघटज्ञानविषयदेशीयान्धकारस्थितिसमयास्थितिकमप्रसिद्धमेव, एतच्छब्देन पक्षीकृतज्ञानाभिधानात् । पूर्वोक्तरीत्या यायौ चाक्षुषघटाभावग्रहे व्यभिचारश्च, तस्य त्वाचघटाभावज्ञानजन्यत्वेपि सविकल्पकाजन्येत्यनेन समानाधिकरणसविकल्पकध्वंससामग्रीशून्यसमये चक्षुर्जन्यत्वस्य विवक्षिततया उक्तचाक्षुषघटाभावज्ञानस्य च त्वाचघटाभावज्ञानस्थितिक्षणे तमोनिवृत्तेः तद्वितीयक्षणे एवोत्पन्नतया तद्ध्वससामग्रीशून्यसमये चक्षुर्जन्यत्वाद्धेतुमतेन एतज्ज्ञानपदेनाभिधानसम्भवात् । अन्धकारप्रत्यक्षे च पक्षीभूते भागासिद्धिः, तस्यान्धकारस्थितिसमयस्थितिकत्वात् । तृतीयहेतुरपि स्वरूपासिद्धः । न च अज्ञाने अभावत्वविप्रतिपत्तावपि ज्ञानेनाज्ञान निवृत्त-

मित्यनुवादज्ञानदशायां तद्विषयसंशयदर्शनाच्च ज्ञानस्याज्ञाननिवर्तकत्वमज्ञानस्यावरणत्वं च सिद्धमिति वाच्यम्, ज्ञानेनाज्ञानं नष्टमित्यनुभवस्यैवासिद्धेः । इदानीमज्ञानं नष्टं ज्ञानं जातमित्येव ह्यनुभूयते ; न तु तयोस्साध्यसाधनभावानुभवः । ईश्वरादौ व्यभिचारश्च, स्वजननाद्यप्रसिद्ध्या स्वजननस्वसामानाधिकरण्यादिघटितसाध्यस्य तत्राभावात् । यदुक्तम्—रूपाद्यावारकनिवर्तकत्वात् तन्मात्रावारकनिवर्तकत्वं नास्तीति ; तन्न, रूपाद्यावारकस्य तन्मात्रावारकत्वात् ; अन्यथा हेत्वसिद्ध्यापातात् । पक्षीभूतज्ञानजनकद्वितीयालोके व्यभिचारश्च, ज्ञानप्रागभावस्य नास्ति न प्रकाशत इति व्यवहारप्रयोजकत्वेन तदावारकत्वात्, द्वितीयालोकस्य च तन्निवर्तकत्वात्, तस्य च प्रागभावस्यालोकसामानाधिकरण्याभावेनालोके साध्याभावात् । एतेन तुरीयहेतुरपि निरस्तः । किंच— पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरनुमानफलत्वे द्वितीयादिज्ञाने बाधवारणाय पक्षविशेषणमनर्थकम् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरनुमानफलत्वे इच्छाप्रागभावादिनिवर्तकज्ञानेष्वंशतस्सिद्धसाधनवारणार्थमाद्यसाध्यप्रभृतिषु स्वनिवर्त्येत्यादि विशेषणमनर्थकम् । इदं च यथासम्भवमुत्तरानुमानेष्वपि दूषणं द्रष्टव्यम् । किंच— सकृज्ज्ञातेऽर्थे पश्चात् स्वरूपावारकाज्ञानाभावस्य त्वयोक्तत्वात् तादृशस्वरूपविषये पक्षीभूतज्ञाने बाधः । इदमपि दूषणमनुमानान्तरेऽपि द्रष्टव्यम् । तस्मात् साध्वनुगृहीतमाचार्यैरनुमानजीर्णकन्थेति ।

अप्रयोजकाश्च हेतवः । तथा हि—न तावदाद्यस्तर्कः, देवदत्तज्ञानविषयत्वात्यन्ताभावस्यैव त प्रत्यज्ञातत्वरूपत्वात् ; देवदत्तीययावत्प्रतियोगिकविषयविषयिभावसंसर्गावच्छिन्नाभावकूटो वा तत्संसर्गावच्छिन्नतत्प्रतियोगिकसामान्याभावो वाऽज्ञातत्वमस्तु । द्वितीयादिज्ञानदशायां च त्रिविधमप्यज्ञातत्वं नास्त्येव । न च प्रमेयत्वेन ज्ञाते ऽज्ञातताभावप्रसङ्गः, अहमज्ञ इति प्रतीतिविषयसमर्थनेनैव तन्निरासात् । किंच यादृशज्ञानसत्त्वात् ज्ञात इति व्यवहारः, तादृशज्ञानविषयाभावादेवाज्ञातत्वव्यवहारोऽस्तु, त्वदुक्तन्यायेनैव प्रमेयत्वादिना ज्ञानेऽपि मया घटो ज्ञात इति व्यवहाराभावेन ज्ञानविशेषस्यैव तत्प्रयोजकत्वस्य वाच्यत्वात् । नापि द्वितीयस्तर्कः, अज्ञातशब्दस्य वाक्यतया लोकव्युत्पत्त्यनुसारेण पद-

द्वयार्थसङ्गपरतया ज्ञानाभावपरत्वस्य युक्तत्वेन लाघवानवतारात्; प्रत्युत कल्पस्वेनाभावपरस्य एव लाघवात् । किञ्चाभावस्य च गौरवं न तुल्याग्राह्यम्, किन्तु नियमतः प्रतियोगिनिरूपणाधीननिरूपणत्वेनैव, तच्च विरोधितया भासमाने भावरूपाज्ञानेपि तुल्यमिति कुतो लाघवम् । किंच– अज्ञानशब्दस्य ज्ञानजन्यनिवृत्तिप्रतियोगित्वात्मकविरोधित्वपरत्वे निवृत्तिरूपाभावविशेषणस्य जन्यत्वादेश्च प्रवेशेनातिगौरवम् । नापि तृतीयस्तर्कः, हेत्वसिद्धेरुक्तत्वेन इष्टप्रसङ्गत्वात् । त्वदुक्तरीत्या प्रागभावनिवृत्तिः प्रतियोग्यतिरिक्तेति मते तन्नियतंकत्वसम्भवाच्च । मतान्तरेपि अन्यत्र प्रागभावनिवृत्तेः प्रतियोगिरूपत्वेपि अनेनानुमानेन ज्ञानप्रागभावस्य प्रतियोग्यतिरिक्तनिवृत्तिमादाय साध्यसिद्धौ भावरूपाज्ञानं विना हेतूच्छित्तेरभावात् । चित्सुखानुमानमप्ययुक्तम्, प्रागभावनिवृत्तेः प्रतियोग्यतिरिक्तत्वेपि प्रतियोगिसाध्यता नास्ति, किन्तु प्रतियोगिसामग्रीसाध्यत्वमेवेत्युक्तत्वेन साध्ये प्रागभावातिरिक्तपदवैयर्थ्यात्; दृष्टान्ते साध्यवैकल्याच्च; इच्छाप्रागभावादिभिरर्थान्तराच्च । प्रमाव्यक्तिविशेषस्यैव पक्षत्वेन साध्येपि प्रमापदस्य तत्परत्वेन दृष्टान्ते साध्यविरहेण देवदत्तगतपदवैयर्थ्याच्च । नचाधिष्ठानात्मकस्वप्रागभावातिरिक्तस्वान्तःकरणवृत्तिप्रागभावेनार्थान्तरवारणार्थं तदिति वाच्यम्, – अधिष्ठानस्य प्रागभावत्वे मानाभावात् । स्वसमानकालीनस्य स्वप्रागभावत्वासम्भवाच्च । वृत्तिमत्त्वभागमात्रेणाधिष्ठानव्युदासे सिद्धे देवदत्तपदवैयर्थ्याच्च । अप्रमाजन्येत्यादीत्यपि न, धारावाहिक द्वितीयादिज्ञाने व्यभिचारात् । प्रमापदेन पूर्ववत् पक्षीभूतप्रमाविवक्षाया पूर्ववद्देवदत्तपदवैयर्थ्यात् । देवदत्तपदरक्षार्थं साध्ये प्रमापदेन जन्यसविकल्पकाजन्यचाक्षुषघटप्रमाज्ञानमात्रस्य परामर्शेपि यज्ञदत्तीयघटज्ञानस्य दृष्टान्तत्वसम्भवात्, घटपदपरित्यागे स्पार्शनज्ञानस्य तत्सम्भवात्, चाक्षुषपदस्यापि त्यागेपि तदीयद्वितीयादिज्ञानस्य दृष्टान्तत्वसम्भवात्, देवदत्तपदं साध्ये व्यर्थमेव । अप्रयोजकत्वाच्च त्वदभिमततर्काभासानान्निरस्तत्वात् ।

यानि च प्राचीननिजगुरुजनमचतुरं मन्यमानेन आहोपुरुषिकाभारमन्थरचेतसा नवीनेन चिरं विचिन्त्य परिहृतनिखिलापायानि स्वाभिलषितसाधनक्षमाणीति गाढं विश्वसता कानिचिदनुमानानि ग्रथितानि, तान्यपि

याचेयमनुमानजीर्णकन्थे त्याचार्यवचने जीर्णपदमार्थन्तत्वाथैव केवलं प्रकम्पते। तथाहि – तत्र तावत् प्रथमानुमाने पक्षे इच्छाऽसमानकालीनेत्यादि प्रथमविशेषणमयुक्तम्, व्यधिकरणेच्छादिसमानकालीनसामग्रीजन्यत्वेनासिद्धिप्रसङ्गात्। तादृशप्रत्यक्ष सर्गाद्यकालीनं सम्भवतीति चेत्? तर्हि स्वसामग्रीकालीनेत्यादिविशेषणवैयर्थ्यम्। द्वितीयमप्ययुक्तम्, प्रत्यक्षस्मृतिजनकत्वेनासम्भवतादवस्थ्यात्। स्मृत्यजनकमेव ज्ञानं पक्षोऽस्त्विति चेन्न;— संस्काराजनकस्य पक्षत्वसम्भवे प्रत्यक्षपदवैयर्थ्यप्रसङ्गात्। संस्काराजनकानुभवो नास्त्येवेति चेत्? अनुभूततृणादिविषयकस्मृत्यभावेपि तद्विषयसंस्कारोऽस्तीत्यत्र मानाभावात् तृणादिसम्बन्धदर्शनेपि तृणादेरस्मरणमर्थक्षुद्रत्वादिप्रयुक्तं वक्तव्यम्, तस्य च न स्मृतिप्रतिबन्धकत्वम्, प्रतीतेपि तादृशार्थे स्मृत्यदर्शनात्; तस्मात् संस्कारे प्रतिबन्धकत्वं वाच्यम्। नचैवमपि अतीतक्षुद्रविषयकानुभवेन कथं स्मरणम्? तत्र संस्कारोत्पत्त्यप्रतिबन्धादिति वाच्यम्, अनुभवे क्षुद्रविषयकत्वस्यैव प्रतिबन्धकत्वात्। तृतीयविशेषणमप्ययुक्तम्, शब्दादिना प्रमेयत्वादिरूपेण तद्विषयकज्ञानसम्भवादसिद्धेः। प्रत्यक्षाविवक्षायामपि प्रमेयत्वप्रत्यासत्तिजन्यपरकीयज्ञानविषयत्वसम्भवादसिद्धिः। लौकिकप्रत्यक्षविवक्षायामनुमित्युपनीतवह्निवैशिष्ट्यविषयप्रत्यक्षस्यापि पक्षत्वादंशतो बाधः, परामर्शेनैव पर्वततद्ग्राह्यज्ञानाना निवृत्तत्वात्। चक्षुषा चन्दनज्ञानानन्तरमुपनीतसौरभ्यविशिष्टप्रत्यक्षे चांशतो बाधः। साध्ये च संस्कारप्रागभावनिवर्त्तकत्वेनार्थान्तरता। लौकिकप्रत्यक्षविवक्षायामज्ञानस्य लौकिकप्रत्यक्षत्वाभावात् बाधः। अलौकिकप्रत्यासत्तिजन्यप्रत्यक्षविवक्षायामीश्वरज्ञानमादायार्थान्तरतैव। अलौकिकप्रत्यासत्त्यजन्यजन्यप्रत्यक्षविवक्षायामज्ञानसाक्षिणो नित्यत्वात् बाधः। अज्ञानाकाराविद्यावृत्तिमादाय जन्यत्वोपपादने चाज्ञानावच्छेदकतया संस्कारप्रागभावस्यापि भानात् पुनस्सैवार्थान्तरता। भावरूपप्रत्यक्षधर्माजनकेति विशेषणे भावपदवैयर्थ्यप्रसङ्गश्च, अभावप्रत्यक्षमात्रस्य प्रतियोग्यंशेऽलौकिकप्रत्यक्षत्वात्। किञ्च – निवर्त्तकत्वं निवृत्तिजनकत्वम्, तथा च स्वनिवृत्तेरपि स्वप्रागभावनिवृत्तितया तज्जनकत्वेनार्थान्तरता। हेतौ च निर्विकल्पके व्यभिचारः, विद्यमानार्थविषयकत्वविशेष्यावृत्तिप्रकारकत्वादे॰ तत्रापि सत्त्वात्। तद्वति तत्प्रकारकत्वस्य तु भ्रमेपि सत्त्वेन प्रमापदवैयर्थ्यात्। पूर्वोक्तरीत्या स्वसामग्री-

कालीनज्ञानविषयत्वादेरसिद्धिश्च। स्वसामग्रीकालीनप्रत्यक्षविवक्षायां पूर्वोक्तरीत्या उपनीतवह्निविषयप्रत्यक्षे व्यभिचारः। किञ्च — घटपटोभयसन्निकर्षेऽपि यत्र पटज्ञानमन्यत्रासक्तत्वादजातं घटज्ञानधारा च जायते, तत्र मध्ये तमोनिवृत्तौ धारान्तःपात्येव यद्घटज्ञानं पटनिर्विकल्पकात्मकमपि जायते तत्र व्यभिचारः। किंच — जन्यज्ञानमात्रस्य शरीरजन्यत्वात् परोक्षज्ञाने व्यभिचारः। विषयत्वेन जनकत्वविवक्षाया बाह्यपदं व्यर्थम्, शब्दस्यैवाहमाकारवृत्तौ करणतया विषयसन्निकर्षाजन्यत्वात्। द्वितीयानुमानेऽप्युक्तमेव पक्षदूषणम्। साध्ये च प्रत्यक्षविशेषणे दूषणं दत्तमेव। किंच स्वसमानाधिकरणपदमत्र व्यर्थम्। नच उपादानप्रत्यक्षस्य कार्यहेतुत्वानभ्युपगमपक्षे तस्य दृष्टान्तत्वासम्भवात् ध्वंसजनकप्रतियोगिप्रत्यक्षे दृष्टान्ते वाच्ये तत्र साध्यलाभार्थं समानाधिकरणपदमिति वाच्यम्, इच्छाप्रागभावनिवर्तकेष्टज्ञानद्विष्टजनकापेक्षाबुद्ध्यनुमितिजनकपरामर्शादेरांशविषयप्रत्यक्षमात्रस्य यत्किंचित्कार्यजनकस्य दृष्टान्तत्वसम्भवात्। द्वितीयसाध्यमपि प्रत्यक्षविशेषणदूषणेन स्वनिवृत्तिरूपस्य प्रागभावनिवृत्तिजनकतया प्रतियोग्यतिरिक्तप्रागभावनिवृत्तिजनकतया प्रतियोग्यतिरिक्तप्रागभावनिवृत्तिभिन्ना चार्थान्तरत्वेन च दूषितम्। अत एव उत्तरसाध्यानि निरस्तानि। चेष्टानपेक्षेत्यादिसाध्यद्वयेऽपि ध्वंजन्यप्रत्यक्षानिवर्तक कार्यातिरिक्तप्रत्यक्षानिवर्तकमित्येतावता साध्यसिद्धौ शेषवैयर्थ्यम्। न च एवं सति ध्वंसजनकप्रतियोगिप्रत्यक्षस्य कथं दृष्टान्तता घटत इति वाच्यम्, उपादानप्रत्यक्षस्य दृष्टान्तत्वसम्भवात्। तस्य उपादेयकारणत्वानभ्युपगमपक्षेऽपि अनुमित्यादिप्रागभावनिवर्तकपरामर्शादे पूर्वोक्तन्यायेन दृष्टान्तत्वसम्भवाच्च। चेष्टासापेक्षविशेषणज्ञानजन्ये चेष्टाप्रत्यक्षे स्वनिवर्तकत्वेनार्थान्तरता च। चेष्टाप्रत्यक्षस्य चेष्टाजन्यतया चेष्टाजन्यान्यकार्यातिरिक्ततया तस्य स्वनिवर्तकत्वेन द्वितीयसाध्येऽप्यर्थान्तरता। चेष्टानिमित्तेत्यादि साध्यमप्ययुक्तम्, यथाकथंचित्तज्जातीयत्वविवक्षाया घटादेरपि तादृशतया साध्यवैकल्यात्। कारणतावच्छेदकरूपेण साजात्यविवक्षाया द्वेषस्यापि तज्जातीयातिरिक्ततया तन्निवर्तकत्वेनार्थान्तरत्वात्। शत्रुहननार्थचेष्टाया अपि समानविषयकेच्छैव हेतुः, न तु द्वेषः,तस्य प्रवृत्त्यजनकत्वेन चेष्टायामजनकत्वात्। निर्विकल्पकस्य चेष्टानिमित्तजातीयातिरिक्ततया तन्निवर्तकत्वेनार्थान्तरताच्च। इष्टतावच्छेदकप्रकारकज्ञानस्यैवेच्छाहेतुत्वात्। अहमनुभवेत्यादि साध्यमप्यु-

युक्तम्, आत्मनोप्यहमनुभवविषयतयाऽविद्यायास्तद्धर्मत्वात् बाधात्। युक्त्यादिशान युक्त्याद्यवच्छिन्नचैतन्यगतमिति पक्षे परशरीरप्रत्यक्षे बाधो व्यभिचारश्च, परशरीरावच्छिन्नचैतन्यस्यैव तदीयान्तःकरणावच्छिन्नतया अहमनुभवविषयत्वात्। अहमनुभवविषयान्तःकरणधर्मता तथापि नास्तीति चेत्; तत् किमहमनुभवविषययावद्धर्मत्वं विवक्षितम्? तथात्वेच्छादेरपि अहमनुभवविषयदेहधर्मत्वाभावादर्थान्तरता स्थिरैव। महाविद्याश्चाप्रयोजकतया निरस्ताः। न च भावरूपाज्ञानानभ्युपगमे घटे वल्मीकभ्रमानुपपत्तिः, दुष्टेन्द्रियाधिष्ठानसन्निकर्षादेवोपपत्तेः। विस्तरस्तु अनिर्वचनीयख्यातिभङ्गे द्रष्टव्यः। न च न जानामीत्यननुभवप्रसङ्गो बाधकस्तर्कः, यथास्याः प्रतीतेरुपपत्तिस्तथा प्रागेवोपपादितत्वात्। यच्च घटध्वंसाजनकेत्यनुमानान्तरम्, तत्र घटध्वंसाजनकेति पक्षविशेषणं व्यर्थम्, तद्धि विषयनिवर्त्तकतया अर्थान्तरतापरिहाराय, नचैतद्विशेषणे दत्तेऽप्यर्थान्तरतापरिहारः, निवर्त्तकत्वयोग्यताया एव साध्यतया तस्याः फलानुपहितेऽपि सत्त्वेनार्थान्तरतादवस्थ्यात्। घटध्वंसाजनकेत्यत्र स्वरूपायोग्यत्वविवक्षायामाश्रयासिद्धेः, प्रतियोगिप्रत्यक्षस्य ध्वंसहेतुत्वात्। घटं न जानामीत्यादि साध्यमप्यनुपपन्नम्, योग्यतायास्साध्यत्वे विषयनिवर्त्तकत्वेनार्थान्तरत्वात्। फलोपधानस्य साध्यत्वे धारावाहिकद्वितीयादिप्रमाया बाधाद्व्यभिचाराद्वा स्वनिवर्त्तकतयार्थान्तरत्वाच्च। न जानामीति ज्ञानविरोधित्वेन प्रतीयत इति स्वयोक्तत्वेन विरोधनिरूपकज्ञानस्य विषयत्वात्। यदि च न जानामीत्यत्र विरोधनिरूपकं चैतन्यसामान्यमेव न त्वपरोक्षज्ञानमित्युच्येत, तदा बाध एव, अपरोक्षप्रमाणज्ञानस्य पक्षीकृतत्वात्। घटापरोक्षेत्यादिहेतुरप्यनुपपन्नः, इदानीं प्रागभावस्य घटं न जानामीत्यनुभवविषयत्वसन्देहात्, घटज्ञानस्य विरोधिगुणतया घटज्ञानप्रागभावध्वंसात्मकघटज्ञानध्वंसे जनकतया सन्दिग्धव्यभिचारकत्वेन तद्वारकस्य घटविशेषणस्य सन्दिग्धव्यर्थविशेषणत्वात्। घटविशिष्टघटप्रत्यक्षे अज्ञानतया सन्दिह्यमानघटज्ञानप्रागभावध्वंसात्मके घटज्ञानस्य विशेषणज्ञानतया कारणत्वेन सन्दिग्धव्यर्थविशेषणत्वाच्च। घटज्ञानस्य विरोधिगुणतया घटं न जानामीति प्रतीतिविषयघटज्ञाननिवर्त्तकत्वात् साध्यसत्त्वेन व्यभिचाराभावाच्च। अपरोक्षविशेषणं च सन्दिग्धव्यर्थविशेषणमेव, परोक्षघटज्ञानस्यापि घटविशिष्टप्रत्यक्षे घटन्नजानामीत्यनुभवविषयतया सन्दिह्यमानघटज्ञानप्रागभावनिवृत्त्यात्मके विशेषण-

ज्ञानतया जनकत्वात् । घटध्वंसेत्यादिदृष्टान्तोऽप्यनुपपन्नः, योग्यतारूपसाध्यस्य घटप्रत्यक्षमाने निश्चितत्वेन घटध्वंसजनकविशेषणवैयर्थ्यात् । यच्च– धारावाहिकद्वितीयादिज्ञानव्यावृत्त्यर्थं अथवा स्वसामग्रीत्यादिना पक्षविशेषणम्; तदप्ययुक्तम्, योग्यतायास्साध्यत्वे उक्तविशेषणवैयर्थ्यात् । फलोपधानस्य साध्यत्वेऽपि न जन्मामीत्यनुभवविषयस्वनिवर्तकत्वेनार्थान्तरत्वात् । किञ्च– यत्र प्रथमं घटसन्निकर्षात्तन्मात्रज्ञानम्, अनन्तरक्षणे तदुभयविषयकमेकं ज्ञानं घटपटसन्निकर्षात् जायते तत्र बाधः । यत्र च प्रथमं त्वचा घटज्ञानं अनन्तरं चक्षुषा रूपादिविशिष्टतद्विषयकम्, तत्राप्युक्तसाध्याभावात् बाधः । हेतौ च द्वितीयादिज्ञानव्यावृत्त्यर्थं जन्यसविकल्पकेत्यादि यद्विशेषणम्; तदप्यसत् । तथाहि – अपरोक्षज्ञानपदं व्यर्थमेव, परोक्षज्ञानमात्रस्य जन्यसविकल्पकजन्यत्वात् । अनवधारणात्मकघटापरोक्षे व्यभिचारश्च । प्रमाणज्ञानत्वमपि यद्यबाधितार्थज्ञानत्वं, तदा त्वन्मते असिद्धिः, निर्विकल्पके व्यभिचारश्च । यद्यन्तःकरणवृत्त्यवच्छिन्नज्ञानम्, तदा अस्मन्मते असिद्धिरिति । अप्रयोजकश्चायं हेतुः । न च ज्ञानेनाज्ञाननिवृत्तमित्यनुभवस्याप्रामाण्यप्रसङ्गो बाधकः, तादृशानुभवासिद्धेरुक्तत्वात् ।

यदपि मूलाज्ञानानुमानं ब्रह्मसाक्षात्कार इत्यादि– तदपि न सम्यक्, ब्रह्मस्वरूपसाक्षात्कारे प्रतिबन्धकब्रह्मसाक्षात्कारे च त्वदभ्युपगते बाधात्, अनवधारणात्मकप्राथमिकब्रह्मसाक्षात्कारे च बाधात् । घटादिसत्त्वे त्वदभिमतैककोटिकानवधारणे च व्यभिचारः । मूलाज्ञानानुमानानां दूषितत्वेन दृष्टान्ते साध्यवैकल्याच्च । अप्रयोजकत्वाच्च । न च मूलाज्ञानानङ्गीकारे मोक्षशास्त्रानर्थक्यप्रसङ्गः, आनन्दात्मावारकाविद्यानिवृत्त्यन्यस्य पुरुषार्थस्यासम्भवादिति वाच्यम्;– दुःखध्वंसस्यैव मोक्षत्वोपपत्तेः । न च तस्यापुरुषार्थत्वम्, स्वतः पुरुषार्थतया सुखवत् दुःखाभावस्यापि पुरुषार्थतया लोकसिद्धत्वात् । यदुक्तं तत्त्वज्ञानं विनापि प्रागभावक्षयादेव मोक्षसिद्धेः शास्त्रानर्थक्यमिति, तन्न, तत्त्वज्ञानं विनापि कस्यचिन्मोक्षसम्भवेऽपि अविलम्बेन मोक्षेच्छोः समाहृत्य भोगेन मोक्षसिद्धेः, तत्साधनीभूतयोगजधर्मसिद्ध्यर्थं तत्त्वज्ञाने प्रवृत्त्युपपत्तेः मोक्षशास्त्रस्य तं प्रति सार्थकत्वात् । वरिष्ठः खलु स एव वादी स्वतोऽपि यः कञ्चिदपि शास्त्रार्थमङ्गीकरोति, त्वन्मते क्वचिदपि न मोक्षशास्त्रसार्थक्यम् । एतच्चाविद्यानिवृत्तिभङ्गे द्रष्टव्यम् । बन्धहेतुभूतधर्माधर्मादिनिवृत्तिर्वा मोक्षोऽस्तु ।

न च तस्य सत्यत्वे ज्ञानानिवर्त्यत्वप्रसङ्गः, सत्यस्यापि विपादेर्गरुडादिध्याननिवर्त्यत्वात्। न च ध्यानं न ज्ञानम्, तस्य ज्ञानत्वेनानुभवसिद्धत्वात्। न च सत्यस्याधिष्ठानज्ञाननिवर्त्यत्वानुपपत्तिः, अधिष्ठानज्ञाननिवर्त्यत्वाभावस्य इष्टत्वात्। अधिष्ठानभूतब्रह्मज्ञानानिवर्त्यत्वात्। आनन्द एव वा मोक्षोऽस्तु। न च जन्यत्वे तस्यामृतत्वानुपपत्तिः, अजन्यभावत्वेऽप्यविद्याया विनाशवज्जन्यभावत्वेऽपि तस्याविनाशित्वोपपत्तेः। प्रवाहरूपेण वाऽमृतत्वमस्तु। न च शरीराद्यभावान्मुक्तावानन्दोत्पत्त्यसम्भवः, चन्दनसंयोगादिजन्यसुखस्य शरीरसापेक्षत्वेऽपि शरीरनिवृत्तिसापेक्षस्य तदपेक्षत्वासम्भवात्। न हि किञ्चिज्ज्ञानं घटसन्निधानसापेक्षमिति घटाभावज्ञानमपि तथा। नित्यानन्दाभिव्यक्तिरेव वा मोक्षोऽस्तु। न चाभिव्यक्तेः ज्ञानरूपायाः कार्यत्वे अनित्यत्वापत्तिः, शरीराद्यभावात् प्रकाशस्याप्यनुपपत्तिरिति वाच्यम्, पूर्वोक्तरीत्या सुखवदेव तदुपपत्तेः। नित्यभूतैव वा अभिव्यक्तिरस्तु। उपलब्धेर्नित्यत्वे इदानीमनुपलम्भो न स्यादिति चेत्? किमनुपलम्भशब्देन ज्ञानाभावो विवक्षित? उत भावरूपाज्ञानम्? उतानुपलम्भोपलब्धि.? नाद्यद्वितीयौ, इष्टापत्तेः; न तृतीय, अनुपलम्भभ्रमसम्भवात्। न च दोषाभावः, कर्मण एव दोषत्वात्। न चानन्दोपलम्भयोर्व्यवहारप्रसङ्ग, स्वमतेऽपि तुल्यत्वात्। न चावरणादव्यवहार इति वाच्यम्, तस्य सत्यत्वेऽद्वैतहानि, मिथ्यात्वे व्यवहारस्य दुर्वारत्वात्। गुञ्जापुञ्जभ्रमेऽपि वह्नेर्दाहकत्ववत्। न चोपलम्भस्यापि स्वप्रकाशतया तस्मिन् भासमाने अनुपलम्भभ्रमासम्भव., स्वमतवदेव नित्यज्ञानस्य भ्रमाविरोधित्वकल्पनोपपत्ते।

उपादानत्वपक्षकानुमानमप्यप्रयोजकत्वेनैव निरस्तम्। न च सर्गाद्यकार्यस्योपादानान्तरानिरूपणम्, ईश्वरपरतन्त्रप्रकृतेरेवोपादानत्वसम्भवात्। न च तस्या अनादिज्ञाननिवर्त्यत्वेन श्रुतिसिद्धतयाऽविद्याया एवोपादानत्वमायातमिति वाच्यम्, सत्यस्यापि ज्ञाननिवर्त्यत्वेन त्वदभिमताविद्याया एव मध्यसिद्धेः। प्रकृतेर्ज्ञाननिवर्त्यत्व चासिद्धम्। "गौरनाद्यन्तवती" इत्यादि श्रुत्या नित्यत्वेनैव सिद्धे। यच्च जाताजातभेदव्यवहारानुपपत्तिरूपतर्कान्तरम्, तदप्यसत्, जाताजातयोरभेदासिद्धेः, द्रव्यस्याजातत्वात् घटत्वाद्यवस्थाया एव जातत्वात्। मृत्त्वाश्रयस्यैव घटावस्थाश्रयत्वात् सामानाधिकरण्यव्यवहारः। घटो जात. इति व्यवहार. कुण्डली जात इतिवत् जातावस्थाश्रयत्वमात्रेण।

किञ्च– अज्ञानोपादानकत्वे वा कथं तदुपपत्तिः? भेदाद् व्यावहारिकत्वे व्यावहारिकाभेदानुपपत्तेः । विनिगमकाभावाच्च नान्यतरस्य प्रातिभासिकत्वम् । एवं 'पीतघटसमानकालीनं' त्याद्यनुमानमप्ययुक्तम्, अप्रयोजकत्वात् । न चानुगताभिधानुपादानकत्वेऽयं घट इत्याद्यनुगतबुद्ध्यभावप्रसङ्गः, घटत्वादिभिरेव तदुपपत्तेः । नच घटत्वादेरनुगतजातिकल्पने गौरवात् धर्मानुगता विशेषैव घटाघटत्वव्यनुगतव्यवहारनिमित्तमिति वाच्यम्,– तस्या अनुगतघटप्रतीत्यालम्बनत्वे पटेऽपि तत्प्रसङ्गात् । व्यक्तिविशेषस्यापि तद्बुद्धौ कारणत्वात्तदभावादेव न पटे घटव्यवहार इति चेत्? तर्हि विषयाजन्यापरोक्षप्रमा कुतो न स्यात्? किञ्च व्यक्तिविशेषाभावात्तद्व्यवहाराभावेऽपि इदं घटत्वमिति व्यवहारः स्यादेव । काले जातेरसत्त्वेऽपि यथा अयं घट इति व्यवहाराभावेऽपि काले घटत्वमित्यादिव्यवहारः, तथा पटे घटत्वमिति व्यवहारप्रसङ्गः । अज्ञानस्यैव घटत्वात्मकत्वे तस्योपादानत्वान्मृद्घट इतिवत् इदं घटत्वमिन्नघट प्रतीतिः स्यात्, न तु घटे घटत्वमिति । किञ्च व्यक्तिविशेषाभावान्माभूद्घटप्रतीतिरन्यत्र, घटे तु कथं पटप्रतीतिः? तादृशव्यक्तिविशेषत्वादिति चेत्, ? तर्हि घटान्तरे कथं तत्प्रतीतिः? तस्यापि तादृशव्यक्तिविशेषत्वादिति चेत्,? तर्हि तादृशव्यक्तिविशेषाभावात्पटे पटप्रतीत्यभावः, तादृशव्यक्तिविशेषसत्त्वाच्च घटेषु सर्वेषु घटप्रतीतिः, तादृशव्यक्तिविशेषस्यैवानुगतप्रतीत्यालम्बनत्वे किमज्ञानकल्पनया? किञ्च द्रव्यत्वेन जानामि घटत्वेन जानामीत्यादिप्रतीतिर्नोपपद्यते, तयोर्भेदाभावात् । अज्ञानस्याज्ञानाविषयत्वाच्च । द्रव्यं घट इति पर्यायः स्यात्, प्रवृत्तिनिमित्ताभेदात् । ब्रह्मण एव वा प्रमेयत्वस्य वा कालस्यैव वा एव सत्यनुगतप्रतीतिहेतुता स्यात्, सत्यत्वात् न त्वज्ञानस्य । किञ्चानुपादानत्वेऽपि दण्डकुण्डलादिवदनुगतप्रतीतिहेतुत्वसम्भवात् कथमुपादानत्वम्? किञ्चाज्ञानमपि किं प्रतिकार्यं भिन्नम्? उतैकम्? आद्ये अनुगतप्रतीत्यसम्भव एव । ननु सर्वेषु घटेष्वेकमुपादानम्, तथा पटेष्वप्यपरमिति चेत्? हन्त तर्हि न तज्जातिकल्पनायाः क प्रद्वेषः! । द्वितीयेऽपि किमेकैकदैवानन्तकार्योपादानत्वम्, उत न? द्वितीयेऽनेककार्योत्पादासम्भव एव । न ह्येकेन मृत्पिण्डेन युगपदनेककार्योत्पादसम्भवः । आद्ये कथमनुगतव्यवहारः, उपादानभेदात् । अज्ञानैक्यादनुगतव्यवहार इति चेत्? तर्हि मृदनन्योपादानत्वादघानुगतव्यवहारोऽस्तु ।

अनादिभावत्वपक्षकानुमानमप्ययुक्तम्, प्रकृतेर्नित्यत्वस्य प्रमाणसिद्धत्वेन प्रकृतित्वे व्यभिचारात्। तस्या एवात्र ज्ञाननिवर्त्यत्वसाधने बाधात्। तदतिरिक्तज्ञाननिवर्त्यवृत्तित्वसाधनेऽनादिद्वयकल्पनागौरवात्। अनादित्वभावत्व पक्षकोत्तरानुमानद्वयमपि उक्तगौरवादेव निरस्तम्। सर्वस्य कार्यजातस्यानाद्यनन्ततया श्रौतप्रकृतित्व एवोपपत्तेः सर्गादित्याद्यनुमाने च जडनित्यप्रकृत्युपादानकत्वेनार्थान्तरता ।

सत्प्रतिपक्षाश्चोक्तहेतवः। तथाहि— त्वदुक्तपक्षस्त्वदुक्तसाध्याभाववान्, त्वदुक्तपक्षसाध्याभाववदन्यतरत्वात्, साध्याभाववान् दृष्टान्तः; अन्यसविकल्पकाऽन्यचाक्षुषघटप्रमाणज्ञानं स्वजननायोग्यस्वजन्यध्वंसप्रतियोगिस्वव्यतिरिक्तवस्तुपूर्वकं न भवति, घट न जानामीत्यनुभवविषयातिरिक्तस्वाजनकानिवर्तकज्ञानत्वात्, धाराद्वितीयज्ञानवत्। ज्ञानत्वमात्रं स्वाजनकज्ञानेच्छादिप्रयत्नानन्तरभाविनि विरोधिगुणतया तन्निवर्तकज्ञाने व्यभिचारि, महापथादिपुण्यदर्शनदेवतादिपुण्यदर्शनरूपतया धर्माधर्मनिवर्तकज्ञानेऽपि व्यभिचारीति पूर्वप्रतीकम्। घटं न जानामीत्यनुभवविषयातिरिक्तानिवर्तकज्ञानत्वमसिद्धम्, साद्यनिर्विकल्पकनिवर्तकत्वात्, *प्रागभावस्य घट न जानामीत्यनुभवविषयतायास्सन्दिह्यमानत्वात्* सन्दिग्धासिद्धिश्चेति तद्वारणाय स्वाजनकेति। तथाच विशिष्टाभावस्य सत्त्वान्नासिद्धिः। स्वाजनकानिवर्तकज्ञानत्वमात्र उक्तसाध्यव्याप्यमपि इदानीमसिद्धमित्यतः पूर्वप्रतीकम्। विशिष्टाभावश्च सिद्ध एव। नच स्वाजनकेति विशेषणं न जानामीत्यनुभवविषयातिरिक्तपदं वा स्वरूपासिद्धिवारकत्वाद्व्यर्थम्, परिशिष्टभागस्यैव गमकत्वादिति वाच्यम्;— घट न जानामीत्यनुभवविषयातिरिक्तस्वाजनकनिवर्तकत्वाभावस्य तदन्योन्याभावस्य वाऽखण्डाभावत्वेन वैयर्थ्याभावात्। घटान्तरनिवर्तके घटे व्यभिचारवारणाय ज्ञानत्वादिति। दृष्टान्ते पूर्वोत्तरघटज्ञानयोर्द्वयोरपि घट न जानामीत्यनुभवविषयत्वात् पूर्वज्ञानस्य स्वाजनकत्वाभावाच्च साधनलाभः।

स एव पक्षः। स्वसमानाधिकरणप्रागभावव्यतिरिक्तस्वजन्यध्वंसप्रतियोगिस्वदेशगतप्रत्यक्षस्वव्यतिरिक्तवस्तुपूर्वकं न भवति, घट न जानामीत्यनुभवविषयीभूतस्वान्यजन्यज्ञानातिरिक्तभिन्नप्रत्यक्षभावानिवर्तकज्ञानत्वात्, आद्यनिर्विकल्पकवत्, घट न जानामीत्यनुभवविषयीभूतेति स्वान्यजन्यज्ञानातिरिक्तविशेषणम्। घट

न जानामीत्यनुभवविषयभिन्नप्रत्यक्षभावानिवर्तकज्ञानत्व द्वितीयज्ञाने व्यभिचारोऽस्ति ज्ञानातिरिक्तपदम्। स्वनिवर्तकत्वेनासिद्धिवारणार्थं स्वान्येति पदम्। इच्छादिनिवर्तकज्ञाने व्यभिचारवारणाय घटं न जानामीत्यनुभवविषयेति। प्रत्यक्षभावानिवर्तकत्वमसिद्धम्, स्वनिवर्तकत्वात्, भावरूपाज्ञाननिवर्तकत्वसन्देहात् सन्दिग्धासिद्धं चेति पूर्वप्रतीकम्। निर्विकल्पकनिवर्तकतया स्वोत्पादकादृष्टनिवर्तकतया चासिद्धमिति प्रत्यक्षपदम्। धाराद्यज्ञाने द्वितीयादिज्ञानप्रागभावनिवर्तकत्वात्तस्य च घटं न जानामीत्यनुभवविषयत्वसन्देहात् तत्र सन्दिग्धासिद्धिवारणार्थम्, आद्यनिर्विकल्पके साधनवैकल्यपरिहारार्थं च भावपदम्। घटान्तरनिवर्तकघटे व्यभिचारवारणाय ज्ञानत्वादिति। दृष्टान्ते ज्ञानाद्यनन्तरभाविनिर्विकल्पके तन्निवर्तकत्वेन साध्यसाधनयोरभावादाद्यपदम्। हेतौ च स्वशब्दः समभिव्याहृतपरः, पक्षीकृतज्ञानमात्रपरत्वे प्राथमिकघटज्ञानोत्तरसविकल्पकनिवर्तके घटनिर्विकल्पके व्यभिचारात्।

स्वसमानाधिकरणप्रागभावातिरिक्तस्वजननायोग्यस्वजन्यध्वंसप्रतियोगिस्वदेशगतस्वातिरिक्तवस्तुपूर्वकं न भवति, घटं न जानामीत्यनुभवविषयातिरिक्तस्वाजनकभावानिवर्तकत्वात्, धाराद्वितीयज्ञानवत्। अत्र हेतुगतविशेषणानां प्रथमसाध्यहेतुपदेन प्रयोजनानि, भावपदन्तु धाराद्यज्ञाने घटं न जानामीत्यनुभवविषयतया सन्दिह्यमानस्वानन्तरभाविघटसविकल्पकप्रागभावनिवर्तकतया सन्दिग्धासिद्धिवारणाय। अतएवाभावत्वाच्च न व्यर्थता।

स्वप्रागभावव्यतिरिक्तस्वविषयसदृशादिजननयोग्यध्वंसचाक्षुणनियतध्वंसप्रतियोगिस्वसमानाधिकरणवस्तुपूर्वकं न भवतीति वा साध्यम्, तृतीयहेतुरेवात्रापि द्रष्टव्यः, तथोक्त एवात्रापि दृष्टान्तः।

इच्छाद्वेषप्रयत्नासमानकालीनसामग्रीजन्यभावरूपप्रत्यक्षप्रमाजनकस्वसामग्रीकालीनजन्यविशिष्टज्ञानाविषयविषयघटादिप्रत्यक्षप्रमाज्ञानातिरिक्तप्रत्यक्षानिवर्तिका न भवति, इच्छाद्वेषप्रयत्नासमानकालीनसामग्रीजन्यभावरूपप्रत्यक्षप्रमाजनकज्ञानत्वात्, द्वितीयादिज्ञानवत्। इच्छानिवर्तके इच्छाजनके व्यभि-

व्यावारणार्थं विशेषणद्वयम् । स्वनिवर्तकत्वेनेच्छादौ व्यभिचारवारणाय ज्ञानत्वादिति विशेष्यम् ।

यद्वा, प्रत्यक्षमानधर्माजनकघटादिप्रत्यक्षप्रमाकार्यस्वसमानाधिकरणातिरिक्तप्रत्यक्षनिवर्तिका न, कार्यातिरिक्तप्रत्यक्षनिवर्तिका न, जन्यज्ञानासहकृतसामग्रीजन्यध्वंसप्रतियोगिजातीयातिरिक्तज्ञानान्यप्रत्यक्षनिवर्तिका न, जन्यज्ञानासहकृतसामग्र्यजन्यध्वंसप्रतियोगिवृत्तिबाध्यावृत्तिजातिमदतिरिक्तज्ञानान्यप्रत्यक्षनिवर्तिका न, जन्यज्ञानाजन्यध्वंसप्रतियोगिजातीयातिरिक्तज्ञानान्यप्रत्यक्षनिवर्तिका न, जन्यज्ञानाजन्यध्वंसप्रतियोगिवृत्तिबाध्यावृत्तिजातिमदतिरिक्तज्ञानान्यप्रत्यक्षनिवर्तिका न, गुणत्वानधिकरणप्रत्यक्षनिवर्तिका न, स्वस्थितिक्षणनियतस्वविनाशसामग्रीमद्भिन्नप्रत्यक्षनिवर्तिका न, इति वा साध्यम् । प्रत्यक्षमानधर्माजनकज्ञानत्वात्, द्वितीयज्ञानवत् । चेष्टानपेक्षज्ञानाजन्यप्रत्यक्षानिवर्तिका न, चेष्टाजन्यान्यकार्यातिरिक्तप्रत्यक्षनिवर्तिका न, चेष्टानिमित्तजातीयातिरिक्तप्रत्यक्षनिवर्तिका न, अहमनुभवविषयधर्मातिरिक्तानिवर्तिका नेति वा साध्यम् । तत एव, तद्वत् ।

घटध्वंसाजनकघटापरोक्षप्रमाणज्ञानं घटं न जानामीत्यनुभवविषयानिवर्तकं न भवति, घटध्वंसाजनकत्वात्, पटमात्रगोचरज्ञानवत् । योग्यताभावस्य साध्यत्वान्न द्वितीयादिज्ञानेऽज्ञातसिद्धसाधनम् । स्वसामग्रीकाले स्वसमानाधिकरणज्ञानाविषयविषयकत्वं वा पक्षे विशेषणम्, ततः फलोपधानाभावसाधनेऽपि न दोषः ।

अयं घटाभावः एतदभावाज्ञानान्योन्याभावान्यः, प्रमेयत्वात्, घटवत्; अज्ञानं स्वस्वेतरवृत्तित्वरहिताभाववृत्तिधर्माधिकरणम्, मेयत्वात्, घटवत्; अज्ञानत्वं स्वस्वेतरवृत्तित्वरहिताभाववृत्तिवृत्तिधर्माधिकरणम्, मेयत्वात्, घटवत्; अभावत्वं स्वस्वेतरवृत्तित्वरहिताज्ञानवृत्तिवृत्तिधर्माधिकरणम्, मेयत्वात्, घटवत्, इति । महाविद्याभिरपि अज्ञानस्याभावत्वसिद्धिः ।

उपादानत्वमनादिज्ञाननिवर्त्यवृत्ति न भवति, भावमात्रवृत्तिधर्मत्वात्, आत्मत्ववत्; अनादिभावत्वं ज्ञाननिवर्त्यवृत्ति न भवति, अनादिभावमात्रवृत्तित्वात्, आत्मत्ववत्; अनादित्वं ज्ञाननिवर्त्यभाववृत्ति न भवति, अनादि

यच्चागमैस्तत्सिद्धिरित्युक्तम्; तदपि न, तत्रानिर्वचनीयत्वाभिमताज्ञानप्रसङ्गाभावात् । सदसद्वैलक्षण्यादेर्व्याघातग्रस्तत्वाच्च । अनृतशब्दस्यात्र ज्ञानसङ्कोचहेतुभूतकर्मविषयत्वात् । तद्धि ज्ञान

---

मात्रवृत्तित्वात्, आत्मत्ववत्प्रागभावत्ववच्च, भावत्व अनादिज्ञाननिवर्त्यवृत्ति न भवति, भावमात्रवृत्तित्वात्, आत्मत्वघटत्ववच्चेति ।

कथमयुक्तता, "अज्ञानेनावृतं ज्ञान" मित्यादिना तदवगमादित्यत्राह– तत्रे ति । "अनृतेन हि प्रत्यूढा" इति श्रुत्यर्थमाह– अनृते ति । तद्धी ति । अत्र भाष्यम्– "पापस्य च ज्ञानविरोधित्वं 'एष एवासाधु कर्म कारयति तं यमधो निनीषती' त्यादि श्रुत्यावगम्यते" इति । अत्र श्रुतप्रकाशिका— "नन्वियं श्रुतिर्निरयनिनीषाविषया किं न स्यात्? उन्नयनप्रत्यनीकत्वादधोनयनस्येति, न; अत्र विवक्षितमुन्नयनं ह्युपासनानिष्पादनरूपम्। न चोन्नयनमपि नाकादिनयनमिति शङ्कनीयम्, 'एभ्यो लोकेभ्य उन्निनीषती' ति श्रवणतस्य समस्तलोकेभ्य उन्नयनस्यापवर्गप्रापणरूपत्वात् । तर्हि गर्भजन्मजरामरणादिसंसारप्रापणमधोनयनं स्यात्, नतूपासननिरोध इति चेन्न,– उन्नयनस्य ज्ञानोत्पादनद्वारकत्वावगमात् । 'स त्वं मनुष्याय हिततमं मन्यसे' इत्युपक्रमपादेन 'मामुपास्स्वे' ति विहितस्योपासनस्याव्यवहितोपायत्वमवगतम् । 'नान्यः पन्था' इत्यादीनि च श्रुत्यन्तराणि तथावगमयन्ति, तच्च कर्मणामपवर्गं प्रत्यव्यवहितोपायत्वे विरुध्येत, अत उपक्रमाद्यविरोधात्साधुकर्मणामपवर्गं प्रत्युपायत्वमुपासनद्वारकमवसीयते, अत कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते । किञ्च यद्यप्युन्नयनाधोनयने स्वर्गनरकप्रापणरूपे, तथाप्यसाधुकर्मणो ज्ञानविरोधित्वं सिद्ध्यति, तथाहि- उन्निनीषाधोनिनीषयोर्निर्हेतुकत्वे परमात्मनो वैषम्यनैर्घृण्यप्रसङ्गात् नेतव्यचेतनगोचरं यद्वृत्तद्वय गतिद्वयनिनीषानिमित्तभूतातिप्रभूतपुण्यपापकर्तृविषयं विज्ञायते, तत्र च गतिद्वयस्य सात्तरोत्तरसाध्वसाधुकर्मकारयितृत्वमीश्वरस्य भूतावेशादिवत् जीवबुद्ध्यपेक्षं भवति, तथा सति ज्ञानचिकीर्षाप्रभावादायूदकादिनुन्नतृणादि

विरोधित्वेन बहुश्रुतिस्मृतिसिद्धम् । ऋतशब्दश्चानुकूले कर्मणि

रिप संसारिणा शास्त्ररहस्यत्वाभावेन कर्मफलभोगानुपपत्ते., एव संसारिणा कर्म फलभोक्तृत्वान्यथानुपपत्तिरूपन्यायानुगृहीत ' एष एवे ' त्यादिक वाक्यद्वय ज्ञान प्रदानद्वारककर्तृत्वविषयमवसीयते । तथासति स्मृत्यनुग्रहश्च भवति– " न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । य हि रक्षितुमिच्छन्ति बुद्धया सयोजयन्ति तम् ॥ यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यापकर्षन्ति सोप नीतो विनश्यति ॥ " इति स्मर्यते । तथा " पुण्य प्रज्ञा वर्धयति क्रियमाण पुनः पुनः । वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नर. ॥ पाप प्रज्ञा नाशयति क्रिय माण पुनः पुन. । नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥ " इति च । तत्र ' बुद्धिमपकर्षन्ति ' ' प्रज्ञा नाशयती ' ति च सम्यग्ज्ञानहानिपूर्वकतद्विपरीतज्ञान निष्पत्तिर्विवक्षिता, अन्यथा कर्मान्तरप्रारम्भानुपपत्ते. । यद्यपीद वचनजात सर्वकर्मदेवतासामान्यविषयम् , तथापि भगवज्ज्ञानस्य सम्यग्ज्ञानसामान्याबहि र्भावादसाधुकर्मणस्तद्विरोधित्वसिद्धिः । तथा विशेषतश्चोच्यते– ' ददामि बुद्धि योग त येन मामुपयान्ति ते । ' 'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मा मप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।' इति च । एव न्यायभूतपूर्वानुगृहीतयानया श्रुत्या सामान्येन ज्ञानविरोधित्वमसाधुकर्मणा सिद्धम् । अस्मादपि निर्वाहात् पूर्वोक्त उपपन्नतर', प्रकरणानुगुण्या " दिति ।

ऋतशब्दश्चे ति । ननु " गुहा प्रविष्टा " विति सूत्रभाष्यविरोधः, तत्रहि 'ऋत पिबन्ता' विति वाक्यमधिकृत्यानुगृहीतम्– "ऋतपान हि कर्मफलभोग एवे" ति, अत्र च श्रुतप्रकाशिका– "कर्मफले" ति अनेन ऋतशब्दार्थ उक्त" इति, अत कथमृतशब्दश्चानुकूले कर्माणि प्रयुक्त इत्युक्तमितिचेत्', उच्यते, " ऋत सत्य तथा धर्म " इत्यादिवचनात् ऋतशब्दस्य कर्मवाचित्वमेव, 'ऋत पिबन्ता' वित्यत्र तु पिबन्ताविति भोगप्रतीते ऋतशब्दस्य कर्मवाचिन स्तत्फले लक्षणया प्रवृत्तिरिति भाष्याभिप्राय । अत एवान्यत्र भाष्यम्– "ऋतमिति कर्मवाची" ति । अत्र च मुख्यार्थप्रतीतिपूर्वकत्वाल्लाक्षणिकार्थ प्रतीतिरनुकूले कर्मणि प्रयुक्त इत्युक्तम् । एतदभिप्रायेणैव– "ऋतमिति धर्म-

प्रयुक्तः— "ऋतं पिबन्ता" वित्यादिषु. ततो नञस्तदन्यत्वेन तद्विरोधित्वेन वानृतशब्द । अत्र सांसारिकं पुण्यमपि मुमुक्षोः प्रतिकूलतया पापमिति तदप्यनृतशब्देन संगृहीतम् । "न सुकृतं न

---

थावि, 'ऋतं पिबन्ता' विति दर्शना" दिति भाष्यम् । एवमृतशब्दस्यानुकूले कर्मणि प्रयोगात् "यथा वृक्षस्य सपुष्पितस्य दूराद्गन्धो वात्येव पुण्यस्य कर्मणो दूराद्गन्धो वाती" त्युक्त्वा, "एवमनृतादात्मानं जुगुप्से" दिति पुण्यप्रतियोगिन्यनृतशब्दप्रयोगात्, "वृजिनमनृतं दुश्चरित" मिति वाक्ये दुश्चरितमनृतमित्युक्तत्वाच्चानृतशब्दो दुष्कर्मपर इत्यभिप्रेत्याह— तत इति । ननु पुण्यमपि हि मोक्षविरोधि, तत्कथमनृतशब्दोक्तपापमात्रप्रत्युदसनमिति शङ्कायां तदप्यत्रानृतशब्देनोच्यत इत्याह— अत्रे ति । सांसारिक मिति । अभिसंहितफलमित्यर्थः । अनभिसंहितफलकर्मण एव मुमुक्षुं प्रत्यनुकूलत्वात्तद्विरोधित्वात् पुण्यस्याप्यनृतशब्देनाभिधानं युज्यत इति भाव । अतएव "स एव धर्मस्सोऽधर्मस्तं तं प्रति नरं भवेदि" ति स्मर्यते । न सुकृत मिति । "नैनं सेतुमहोरात्रे तरतो न जरामृत्यु न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" इतिश्रुतौ सर्वशब्देन दुष्कृतपर्यन्तान् पूर्वोक्तदोषान् परामृश्य पाप्मशब्देनाभिधानात् । शोकादिषु पाप्मशब्दस्यामुख्यत्वेपि सुकृतदुष्कृतयोः प्रवृत्तिनिवृत्तिसम्भवाच्च मुख्यत्वं न्याय्यम्, क्वचिदमुख्यस्य सर्वत्र मुख्यत्वनियमाभावात्, अलौकिकत्वे सत्यनिष्टफलसाधारणकारणत्वस्य प्रवृत्तिनिमित्तत्वात्, तस्य चात्रापि सत्त्वात् ।

एतेन "अनृतेन हि प्रत्यूढा "इति श्रुतिर्भानरूपाज्ञाने मानम्, ऋतं सत्यं न भवतीति अनृतमनिर्वचनीयम्, तदपि 'एतं ब्रह्मलोकं न विन्दन्ती' ति पूर्ववाक्यावगतस्वापकालीनब्रह्मालाभनिमित्तमज्ञानमेव, तदन्यस्य तदा तदलाभनिमित्तत्वासम्भवात्, न तु ऋतं सत्यकर्म– अनृतं पापमिह विवक्षितम्, 'ऋतं पिबन्ता' वित्यत्र सुकृते ऋतशब्दप्रयोगादिति वाच्यम्, सत्यवाचिन ऋतशब्दस्य कर्मणि सत्यावश्यकत्वाभिप्रायेण कर्मफले प्रयोगो ननु कर्मणि, 'सुकृतस्य

दुष्कृत सर्वे पाप्मानोतो निवर्तन्त " इति श्रुते । तमश्शब्दोप्येवं

---

लोक' इति कर्मण पृथग्ग्रहणात्, स्वप्रकाशप्रत्यगभिन्नब्रह्मालाभस्य वास्तवत्वा सम्भवात्, अनिर्वचनीये च तस्मिन् सत्यस्य कर्मणो निमित्तत्वासम्भवाच्च कर्मण स्तदावारकत्वमपि, अज्ञानतु विद्यमानमेवावृणोति, प्राप्तकण्ठचामीकराद्यावारकत्व दर्शनात्, अतस्तदेवानृतशब्दार्थं, उभयत्रानृतशब्दस्य प्रयोगेपि 'अज्ञानेनावृत ज्ञान' मित्यादिशास्त्रप्रसिद्धावारणस्वभावस्याज्ञानस्यैव न किंचिदवेदिषमिति परा मर्शेनापि सिद्धस्य स्वप्रकाशात्मावारणयोग्यतया प्रकृते तदर्थत्वात्, इति न-वीनोक्तं निरस्तम्, अनृतशब्दस्य दुष्कर्मपरत्वस्योपपादितत्वात् । यच्च स्वप्रकाशप्रत्यगभिन्नेत्यादि, तत्र न तावद्ब्रह्माभेदादलाभस्य वास्तवत्वासम्भवः, जीवब्रह्मभेदस्यव्यवस्थापनात् । नाप्यनिर्वचनीये सत्यस्य कर्मणो निमित्तत्वास म्भव, निमित्तपदेन कारणत्वोक्तौ सत्यस्यापि ब्रह्मण जगत्कर्तृत्वाङ्गीकारेण व्यभिचारात् । उपादानत्वविवक्षायामिष्टापत्तिरेव, ब्रह्मण एवोपादनत्वात् । यथा च परिणामिन विना पि सत्यस्य ब्रह्मण उपादानत्वम्, तथार्थापत्तिनिरास उपपादयिष्यते । नाप्यज्ञानस्यालाभनिमित्तत्वसम्भव, तस्याप्यप्राप्तावारकत्वा दर्शनात् । नचाप्राप्तकण्ठचामीकराद्यावारकत्व दृष्टमिति वाच्यम्, — तत्र कण्ठे चामीकरस्य सत्वेन तदप्राप्तेरभावात् । तत्सम्बन्धाज्ञानमेवाप्राप्तिरिति चेत् ? अज्ञानपदेन भावरूपाज्ञानविवक्षायामसिद्धे । हेतुहेतुमतोरभेदप्रसङ्गाच्च । ज्ञानाभावरूपत्वे इन्द्रियसन्निकर्षादिरूपकारणाभावादेव तदुपपत्ते । तत्र ज्ञानस्या ज्ञानाभावोपपादकत्वदर्शने अज्ञाने प्रमाणोपन्यासोव्यर्थं, ज्ञानाभावभिन्नत्वेन तस्य सिद्धत्वात् । नापि चामीकरासम्बन्ध एवाप्राप्ति प्रातिभासिकी, मम कण्ठे चामीकर नास्तीति प्रतीते. परोक्षज्ञानत्वेन तत्र प्रातिभासिकार्थासिद्धे । तत्सत्त्वे प्यज्ञान विनापि तत्सिद्धिरुपपादयिष्यते । किञ्चाज्ञानात् कण्ठ चामीकर न प्राप्तमिति केनाप्यननुभवादज्ञानस्याप्राप्तिहेतुत्वमसिद्धमेव । यच्च उभयत्रानृतशब्दस्येत्यादि, तन्न, 'अज्ञानेनावृत ज्ञान' मित्यत्र कर्मण एवाज्ञानशब्देनाभिधानादित्युक्तत्वात् ।

" नापदाथी " दिति श्रुतितात्पर्यमाह, तमश्शब्दोपी ति । भाष्यान्तरेषु तमश्शब्दस्य मन्त्रप्रकृतौ प्रयोगात्प्रसिद्धात्मस प्रकृतानन्वयेनास्यापि तम

मूलप्रकृतिविषय इति " तम एकीभवति " " यस्य तमश्शरीरं " "आसीदिदं तमोभूतमप्रज्ञात" मित्यादिभिस्सिद्धम् । सदसद्भावोक्तिश्च व्यष्टिचेतनाचेतनविलयपरा । नद्यत्र सदसद्व्यत्ययमुक्तम् । विलयोऽप्यवस्थान्तरमेव न बाधः । एवं माया शब्दोपि " प्रकृतिविषय एव श्रुत्या समर्थितः— " अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः । " " मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर " मिति । प्रकृतिशब्दस्य

---

शब्दस्य प्रकृतिपरत्वमेव युक्तमित्यर्थः । प्रकृतेश्च " गौरनाद्यन्तवती " इत्यादिना नित्यत्वेन सिद्धत्वाच्च त्वदभिमतज्ञाननिवर्त्याज्ञानत्वमिति भावः । ननु सन्मात्रस्य निषेधात्प्रकृतेरपि निषेधस्स्यादित्याशङ्क्याह—सदसद्भावोक्ति रिति । ननु नास्याः श्रुतेर्विलयपरत्वम्, " नासदासीन्नोसदासी " दिति सदसती निषिध्य, ' तम आसी ' दिति तमसो विधानेन तमसोऽनिर्वचनीयत्वप्रतिपादनपरत्वादित्यत्राह— नह्यत्रे ति । अय भावः, किं सदसच्छब्दौ पारमार्थिकनिरुपाख्यपरौ, उत व्यावहारिकप्रातिभासिकपरौ ? नाद्य,— तदानीमिति कालविशेषे निषेधे कालान्तरे तयोरस्तित्वप्रसङ्गात्, तदानीं प्रमाणस्वरसेन तयोर्निषेधासम्भवाच्च । न द्वितीयः, — तमसः पारमार्थिकत्वनिरुपाख्यत्वयोरन्यतरप्रसङ्गात् ।

" इन्द्रो मायाभि " रित्यादिश्रुत्यर्थमाह— एवं मायाशब्दोपी ति । लोके मायाशब्दस्य मिथ्यापरत्वसम्भवेपि ' इन्द्रो मायाभि " रित्यत्र मायाशब्दो न मिथ्यार्थपरः, किन्तु प्रकृतिपर एव, " अस्मान्मायी " ति श्रुतौ विद्यमानमायाशब्दस्य " माया तु प्रकृति विद्या " दिति प्रकृतिपरत्वेन व्याख्यातत्वात्, सर्गकर्तृसम्बन्धिवाचकमायाशब्दस्य प्रकृतिपरत्वौचित्याच्चेत्यर्थः । प्रकृतेश्च नित्यत्वेन सिद्धत्वाच्च त्वदभिमतानिर्वाच्याविद्यारूपत्वमिति भावः । ननु प्रकृतिशब्दस्य योगेन भावरूपाज्ञानपरत्वं तत्र सम्भवति, तस्योपादानत्वस्य योग्यार्थस्य सद्भावादित्यत्राह— प्रकृतिशब्दस्ये ति । रूढिर्योगमपहरतीतिन्यायादिति भावः । ननु प्रकृतिमुद्दिश्य मायात्वविधानादिधेयान्वययोग्यतानुरोधेन प्रकृति

रूढ्या पदार्थविशेषे वृत्तेः उपादानार्थत्वादपि तस्य प्रथमं बुद्ध्युपारोहः । अत्र हि मायाशब्देनाभिहितं किमित्यपेक्षायां प्रकृतिरित्युच्यते, न पुनः प्रकृतेर्मिथ्यात्वं प्रतिपाद्यते । नहि सम्भवति मिथ्याभूतस्योपादानत्वम् । मायाशब्दश्च विचित्रसृष्टिकरार्थवाची, असुरराक्षसास्त्रादिषु प्रयोगात् । "देवमायेव निर्मिते" इत्यादिषु प्रयोगदर्शनाच्च । अतएवैन्द्रजालिकादिष्वपि

---

शब्दस्य योगार्थ एवादेय इत्यत्राह– अत्र ही ति । 'अस्मान्मायी' ति पूर्ववाक्ये मायामायिनोः प्रकृतत्वात्तयोरेवोद्देश्यत्वमुचितम्, न तु प्रकृतेः, अतो मायामायिशब्दाभ्यां कावभिहितावित्यपेक्षायां प्रकृतिमहेश्वरशब्दाभ्यां तद्व्याख्यानमेवोचितमिति न प्रकृतेर्मिथ्यात्वसिद्धिरित्यर्थः । प्रकृतिशब्दस्य योगार्थत्वेपि न मिथ्यात्वसिद्धिरित्याह– नही ति । सत एवोपादानत्वदर्शनात्, 'गौरनाद्यन्तवती' त्यादिश्रुतिभिर्नित्यस्यैवोपादानत्वप्रतिपादनाच्चेति भावः । एवं मायाशब्दस्य मिथ्यार्थपरत्वमङ्गीकृत्यात्र मायाशब्दस्य त्रिगुणात्मकनित्यद्रव्यपरत्वमिति स्थापितम्, इदानीं मायाशब्दस्य मिथ्यावाचित्वमेव नास्तीत्याह– मायाशब्दश्चे ति । विचित्रसृष्टिकरार्थवाची ति । आश्चर्यत्वमेव प्रवृत्तिनिमित्तमिति भावः । "अनुयायिन एव प्रवृत्तिनिमित्तत्वान्मायाशब्दप्रयोगविषयेषु सर्वेष्वप्यनुगतमाश्चर्यत्वमेव मायाशब्दप्रवृत्तिनिमित्त" मिति हि श्रुतप्रकाशिका । ननु न मिथ्यात्वं प्रवृत्तिनिमित्तम्, किन्त्वाश्चर्यमेवेत्यत्र किं विनिगमकमित्यत्राह असुरे ति । ननु ऐन्द्रजालिकादौ मिथ्यार्थेऽपि मायाविशब्दप्रयोगो दृश्यते, तत्र च मायाशब्दस्य मिथ्यार्थपरत्वमेवेत्याशङ्क्यानुगतप्रवृत्तिनिमित्ते सम्भवति नानाप्रवृत्तिनिमित्तकल्पने गौरवात् अत्रत्यमायाशब्दस्य मन्त्रौषधादिमायाधिगतविचित्रसृष्टिकरार्थविषयत्वान्न मिथ्यार्थविषयत्वमित्याह– अत एवे ति । विचित्रसृष्टिकरार्थवाचित्वादेवेत्यर्थः । ऐन्द्रजालिकशब्दः करणपरः, न तु पुरुषपरः, मायाशब्दश्च मायाविशब्दान्तर्गतो विवक्षितः, मन्त्रौषधादेरेव विचित्रसृष्टिकरार्थः । अत्र मायाशब्दो न मिथ्यावचनः, किन्तु मन्त्रौषधादिपर एव, तत्र च विचित्रार्थ

मायाशब्दो मन्त्रौषधादिविचित्रसृष्टिकरार्थत्वादेव, एकरूपप्रवृत्तिनिमित्ते सम्भवति विरुद्धार्थकल्पनायोगात् । तत्र मुख्यामुख्यविभागहेत्वभावाच्च । मायामूलभ्रान्तिविषयेषु क्वचिन्मायाशब्दो लक्षणया, न पुनर्मिथ्यार्थत्वात् ।

मायामृगोऽपि मारीचसृष्टिरेव हि तात्त्विकी ।
न चेद्रामशरेणास्य निधनं नोपपद्यते ॥

शुक्तिरजतादिषु मायाशब्दप्रयोगादर्शनाच्च । ननु भावान्तरमभाव इति भवतां सिद्धान्तः, ततश्च भावरूपमेवाज्ञानं भवद्भि

---

सर्गकरत्वं विचित्रार्थप्रतीतिजनकत्वं वा वर्तत इति, तत्राश्चर्यत्वरूपप्रवृत्तिनिमित्तसद्भावादेव मायाशब्दप्रयोग इत्युक्तं भवति । विरुद्धार्थशब्दो विविधपरः । ननु मायाविशब्दे मायाशब्दो मिथ्यार्थविषय एव किं न स्यात् ? नच नानार्थत्वकल्पनापत्तिः, असुरराक्षसास्त्रादिषु मायाशब्दप्रयोगस्यामुख्यत्वसम्भवादित्यत्राह– मुख्यामुख्ये ति । अन्यथा वैपरीत्यस्यापि सुवचत्वादिति भावः । ननु ऐन्द्रजालिकप्रासादनिगरणादिष्वपि मिथ्याभूतेषु त्वदुक्तप्रवृत्तिनिमित्तशून्येषु मायाशब्दप्रयोगदर्शनान्मिथ्यात्वं प्रवृत्तिनिमित्तं स्यादिति विचित्रार्थसर्गकरत्वमेवाश्चर्यत्वमिति मन्वानस्य शङ्कां प्रौढवादेन परिहरति– मायामूले ति । विचित्रार्थसर्गकरत्वमेव नाश्चर्यत्वम्, किन्तु रूपान्तरेणापि, तच्च तत्रापि सम्भवत्येवेति भावः । ननु सर्वत्रासुरास्त्रादिष्वपि मायाशब्दप्रयोगो मिथ्यात्वादेवेत्यत्राह– मायामृग इति । इदं चोपलक्षणम् । असुरास्त्रादेर्भिन्नधादिकं च तन्मिथ्यात्वे न स्यादिति भावः । अन्वयव्यभिचारमप्याह– शुक्तिरजतादिष्वि ति । स्वमतव्यामोहितानां प्रयोगस्त्वनादेय इति भावः ।

ननु मिथ्यार्थानुपपत्तिर्भावरूपाज्ञाने मानम्, भावकार्यस्य रजतादेरुपादानान्तरासम्भवात् ; नचात्मोपादानम्, तस्याविद्यातदुपादानत्वे परिणामित्वान्तरस्यावश्यकत्वात्, परिणामितयोपादानत्वे परिणामस्य परिणामिसमानसत्ताकत्वनियमेन कार्यस्यापि सत्यत्वप्रसङ्गात्, तस्य निरवयवत्वेन परिणामायोगाच्च;

नापि शुक्त्यादि काचादिकं चोपादानम् अननुगतत्वात्, काचादेरजतायना श्रयत्वाच्च, अत परिशेषादज्ञानमेवोपादानम् एव ब्रह्मणो जगदुपादानत्वं श्रुतमन्यथानुपपद्यमानं भावरूपाज्ञानं कल्पयति, निरवयवस्य निर्विकारस्य ब्रह्मणः परिणामित्वासम्भवात्, अधिष्ठानतयोपादानत्वस्य मिथ्यापरिणाम्यज्ञानं विनानुपपत्ते, ब्रह्ममात्रकार्यत्वे जडस्य जडत्वस्याकस्मिकत्वप्रसङ्गाच्च, नच विकारस्याविद्यापरिणामत्वे गौरवेण ब्रह्मोपादानत्वभङ्गप्रसङ्ग इति वाच्यम्, श्रुतिबलेन तस्याप्युपादानत्वात् कार्ये सत्तादात्म्यानुभवेन तदुपादानत्वस्यावश्यकत्वाच्च; अविद्यावत् ब्रह्मणोप्युपादानत्वे विकारित्वापात इति चेन्न,—द्विविधं ह्युपादानत्वं परिणामित्वं तात्सत्त्वाप्रदत्वं च, तत्राद्यमज्ञानस्यैव तद्वत्तु विकारि, द्वितीयं तु ब्रह्मण इति न तद्विकारि, किञ्च यद्यदात्मककारणतादात्म्यापन्नं जायते तदात्मकत्वं ह्युपादानत्वम्, वियदादिकार्यवर्गश्च चैतन्यसत्तानुविद्धो जडानुविद्धश्च जायत इति उभयस्याप्युपादानलक्षणलक्षितत्वात् उभयमुपादानम्, एवं स्वप्रकाशानन्दस्वरूपानवभासानुपपत्तिरपि भावरूपाज्ञाने मानम्, आवारकेण विना स्वप्रकाशात्मकब्रह्मस्वरूपानवभासस्यायोगात्, नच ब्रह्मणो जीवभेदादेव तदनवभास, तस्य निरस्तत्वात्, अविद्यातिरिक्तेन प्रकाशावरणायोगाच्च न कर्मण आवारकत्वम्, एवं चिदानन्दरूपब्रह्मण अविद्यां विना जडदुःखात्मकप्रपञ्चतादात्म्यानुपपत्तिरपि मानम्, तन्निवृत्त्यतिरिक्तोपदेशाद्यप्रयोजनाभावादिति । अत्रोच्यते— न तावन्मिथ्यार्थानुपपत्तिर्मानम्, मिथ्यार्थस्यैवासिद्धे । अस्तु वा मिथ्यार्थं शुक्तिरजतादि, तथापि नाज्ञानसिद्धि । उपादानाभावे कथं तदुत्पाद इति चेत्? रजतावयवादिकल्पकारणाभावे कथं तदुत्पाद । यदि मिथ्यात्वान्न तदपेक्षा, तदा तत एवोपादाननैरपेक्ष्यमप्यस्तु । अस्तु वात्मन एवोपादानत्वम्। नच निरवयवत्वादनुपादानता, निरवयवत्वेन सत्यपरिणामाभावेपि मिथ्याभूतपरिणामसम्भवात् । घटाकारेण परिणममानमृत्पिण्डस्यैव इदानीं शरावाकारेण परिणमत इति भ्रान्तिसिद्धमिथ्याशरावपरिणामो दृश्यते, तत्र च यथा घटपरिणामदशायां शरावपरिणामायोग्यस्यापि मृत्पिण्डस्य मिथ्यात्वादेव शरावपरिणामसम्भवः, एवं ब्रह्मणो निरवयवस्यापि मिथ्याभूतोपादानत्वसम्भवश्चेति । नचासत्यस्यासत्योपादानत्वं वाच्यमिति वाच्यम्, दृश्य

दर्शनात् । नन्वुपादानोपादेययोरखाल्लक्षण्यनियमदर्शनादेव तत्सिद्धिरिति चेन्न,–सर्वथा सालक्षण्यस्य मृद्घटयोरप्यदर्शनात् । यत्किञ्चित्सारूप्यस्य शुक्तिरजतादावपि रूपवत्त्वादिना सत्त्वात् । यदुक्तं ब्रह्मणः परिणामित्वेनोपादानत्वे परिणामस्य परिणामिसमानसत्ताकत्वनियमेन कार्यस्यापि सत्यत्वप्रसङ्ग इति; तत्र किं परिणामशब्देन कार्यमात्रं विवक्षितम्, उत रूपान्तरापत्तिः? नाद्यः, प्रपञ्चस्याविद्यानिवृत्तेश्च तदभावात् तयोर्यत्किञ्चित्परिणामित्वाभावात् । न द्वितीयः, रूपान्तरापत्तेः परिणामिमात्रसापेक्षत्वात्, गौरवेण स्वसमानसत्ताकपरिणाम्यपेक्षाभावात् । ननु स्वसमानसत्ताकरूपान्तरापत्तेरेव परिणामशब्दार्थत्वात् कथं तदभावे परिणामत्वमिति चेन्न,– लाघवेन रूपान्तरापत्तेरेव परिणामत्वात् । नच ब्रह्मपरिणामित्वश्रुतिविरोधः, परिणामस्यासत्त्वेन विरोधाभावात्, अविद्याया मिथ्यात्वेन निरवद्यश्रुतिवत् । सत्यप्रकृतिरिदमर्थ एव वोपादानमस्तु । नच शुक्त्यादेरननुगतत्वेनानुपादानता, रजतादिकार्यस्याप्यननुगतत्वात्, क्लृप्तत्वेन लाघवात् शुक्त्यादेरेवोपादानत्वौचित्याच्च । अन्यथा सत्यकार्येऽपि मृदादेरनुपादानत्वप्रसङ्गात् । ननु सत्यकार्यमात्रं प्रत्यननुगतत्वेऽपि तत्तद्घटादिकार्यं प्रति अनुगतिरस्त्येव, प्रकृते च मिथ्यारजतमात्रेऽपि न शुक्तिरनुगता, रङ्गेऽपि रजतभ्रमदर्शनादिति चेन्न, अविद्याया अप्यननुगतत्वात् तत्रापि, रङ्गाज्ञानस्य क्वचिदुपादानत्वं क्वचिच्छुक्त्यज्ञानस्येति । यदि च रजताधिष्ठानतावच्छेदकावच्छिन्नचैतन्यावारकाज्ञानत्वेनानुगमः, तर्हि तदधिष्ठानतावच्छेदकत्वेनानुगमोऽस्तु। एतेन ब्रह्मणो जगदुपादानत्वश्रुत्यर्थोपपत्तिरपि निरस्ता, ब्रह्मोपादानकत्वसम्भवस्योपपादितत्वात् । यदुक्तं ब्रह्ममात्रोपादानकत्वे जडस्य जडत्वमाकस्मिकं स्यादिति, तन्न, मृदुपादानकस्य घटानुपादानकस्यापि घटस्य घटत्वदर्शनात् । ननु तन्मात्रोपादानकत्वे तद्रूपता स्यादिति चेत्? सदनुविद्धतया प्रतीतेस्तदिष्टत्वात् । गोमयाद्युपादानवृश्चिकादेर्गोमयत्वाभावेन व्यभिचाराच्च । एवं ब्रह्मानवभासानुपपत्तिरपि न मानम्, जीवब्रह्मणोर्भेदव्यवस्थापनात् । किञ्च कोऽयमनवभासः, यदनुपपत्त्याऽज्ञानं कल्प्यते? न तावदवभासाभावः, स्वरूपात्मावभासस्य नित्यत्वेनाभावासिद्धेः । वृत्त्यात्मकावभासाभावस्तु कारणाभावादेवोपपन्नः । नापि भावरूपाज्ञानम्, तत्सिद्ध्यसिद्ध्योस्तस्य कल्पकत्वायोगात् । नापि नास्ति न प्रकाशत इति व्यवहारयोग्यता, तस्या अनादित्वेना

ऽभ्युपगन्तव्यम्, स तत्किमर्थं निषिध्यत इति । अत्र ब्रूमः, यदर्थं भवता प्रसाध्यते तदर्थमस्माभिः प्रतिषिध्यते । यदि भवता ज्ञानाभावात्मकमज्ञानं भावरूपमिति प्रसाध्यते तदा न वयं प्रतिक्षिपामः । अस्ति हि नित्यस्य प्रमाणशब्दाभिलपनीय विषयाभिमुख्यास्याविशेषाद्विलक्षणः तत्प्रागभावादिशब्दाभिलप्यो वस्थाविशेषः । न चैतावदेव भवता साध्यते, अपितु ज्ञान प्रागभावातिरिक्तः कश्चित्सदसदनिर्वचनीयो जगत्कारणत्वब्रह्म तिरोधायकत्वादिविशिष्टः प्रसाध्यते । स च निष्प्रमाणत्वा दस्माभिः प्रतिक्षिप्यते ।

इति शतदूषण्यां भावरूपाज्ञानभङ्गः

एकोनचत्वारिंशो वादः ।

---

ज्ञानेनैवाव्यानपेक्षणात् । सापेक्षत्वेऽपि ब्रह्मैवापेक्ष्यतां किमज्ञानेन । नच ब्रह्मणः तत्प्रयोजकत्वे मुक्तावपि तत्प्रसङ्गः, तस्याज्ञानेन निरस्तत्वात् । नच पुनरप्यादप्रसङ्ग इति वाच्यम्, अनादेर्यदेव ब्रह्माधीनस्यापि कारणाभावादेवा नुत्पादोपपत्तेः । अज्ञानसद्भावेऽपि यथाऽऽवरणानुपपत्तिस्तथा वक्ष्यते । धर्मैणैवा नवभास उपपद्यते । यदुक्तम्— क्रमेण प्राप्तावारकत्वं नास्तीति, तन्निरस्तमेव । ब्रह्मण प्रपञ्चतादात्म्यानुपपत्तिरपि न मानम्, तादात्म्यस्यासिद्धेः । तत्सि द्धावपि तस्य मिथ्याऽज्ञानं विनानुपपत्त्यभावात् । ननु मिथ्याभूतप्रपञ्चतादा त्म्यमज्ञानं विना सत्यस्य वस्तुनोऽनुपपन्नमिति चेत्? तर्ह्यज्ञानेन वा कथं तदुपपत्तिः । तादात्म्यस्य मिथ्यात्वादिति चेत्,— अज्ञानं विनापि मिथ्या वस्तुनो भ्रमोपादानत्वस्योपपादित त्वात् । एवं मोक्षशास्त्रोपदेशानुपपत्तिरपि न तत्र

सानम्, अविद्यानिवृत्त्यतिरिक्तपुरुषार्थस्योपपादितत्वात्; अज्ञाननिवृत्त्यनुपपत्तेर्वक्ष्यमाणत्वाच्च ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
मायरूपाज्ञानभङ्गो नाम

एकोनचत्वारिंशः स्कन्धः ।



श्रीरस्तु।

## अथ चत्वारिंशो वादः।

अखिलचिदचिदन्तर्यामितां प्राप्य तिष्ठन्
स्वयमखिलगुणाढ्यस्सूरिभिर्नित्यसेव्यः।
निजचरणनिषेवावैभवेनापराधान्
व्यपनयति नराणां व्यक्तमेनं भजामः॥

ये पुनः प्रसक्त ब्रह्मणोविद्यादिरूपमसाध्यदोष मिषद्यन्त

---

वादार्थं सूचयन् मङ्गलमाचरति— अखिले ति। मृषावादिनो हि तत्त्व मस्यादिसमानाधिकरणश्रुतिबलात् जीवब्रह्मणोरभेदमिच्छन्तः अज्ञानस्य निराश्रय त्वासम्भवात् ब्रह्माश्रयत्वे वाच्ये ब्रह्मणो निरवद्यत्वश्रुतिविरोधाज्जीवभावापन्नस्यैव तदाश्रयत्वमिति वदन्ति, तदनुपपन्नम्, सामानाधिकरण्यस्यान्तर्यामित्वनिबन्धन त्वादित्यभिप्रायेणाह–चिदिति। जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावे सिद्धे हि तयो र्विभक्ततया निरवद्यत्वसावद्यत्वव्यवस्थासिद्धिः, स एव न सम्भवति, अरूपे विद्य मानस्य तत्र प्रतिबिम्बासम्भवादित्यभिप्रायेणाह–अचिदि ति। सर्वशक्त्यनिरतिशया नन्दाद्यात्मकत्वात् ब्रह्मणस्तदभिन्नस्य जीवस्य किञ्चिज्ज्ञत्वदुःखित्वाद्यवद्यावहा ज्ञानाश्रयत्वासम्भव इत्याह– स्वयमखिलगुणाढ्य इति। स्वय मित्यनेन 'स्वा भाविकी ज्ञानबलक्रिया च' त्यादिना प्रतिपादित निरुपाधिकत्व विवक्षितम्। तेन च न कालभेदेन सार्वज्ञ्यकिंचिज्ज्ञत्वादेर्विरोधपरिहारसम्भवः। ब्रह्मणो निरवद्यसूरिसेव्यत्वात्तदभिन्नस्य जीवस्य कथ सावद्यत्वमित्यभिप्रायेणाह– सूरिभि रिति। स्वाश्रितदोषासहिष्णोः स्वाभिन्नदोषसहत्वस्य सुतरामसम्भवात् कथ तदभिन्नस्य जीवस्य सदोषत्वमित्यभिप्रायेणाह– निजे ति। बहुप्रमाणसिद्धत्वा भिप्रायेण व्यक्त मित्युक्तम्। प्रसक्त मिति। संसारस्य जीवगततरात् तन्मूल भूताज्ञानमपि तद्गतमेवेति तदभिन्नस्य ब्रह्मणोप्यज्ञानसंसारादिः प्रसज्यते, तच्च निर्दोषत्वश्रुतिविरुद्धमिति ब्रह्मणि दोषपरिहारार्थमाहुरित्यर्थः। असाध्यत्व–अप रिहार्यत्वम्, अपरिहार्यत्वमित्येव परमार्थ परिहाराभावमात्रमेव, न तु तथा परि

इत्याहु:— न ब्रह्मणि साक्षादज्ञानसंसारादिगन्धः, अविद्यान्तःकरण प्रतिबिम्बितस्य तस्य जीवत्वात्; जीवाश्रयत्वाच्चाज्ञानसंसारादेः। यद्यपि मूलबिम्बस्वरूपेण प्रतिबिम्बेनापि भवितव्यम्,

---

हारः परं तु शक्यत इत्यर्थः। बिम्बस्य प्रतिबिम्बाभिन्नत्वात् प्रतिबिम्बधर्मो बिम्बे न निषेद्धुं शक्यत इत्यत उक्तं साक्षा दिति। वस्तुतो ब्रह्माभिन्नजीवगतत्वेन परम्परया ब्रह्मसम्बन्धित्वेऽपि न साक्षाद्ब्रह्मण्यज्ञानादिकमित्यर्थः। संसारो— जन्म। आदिशब्देन तत्कार्यपरिग्रहः। मतभेदाभिप्रायेण अविद्यान्तःकरणप्रतिबिम्बितस्ये त्युक्तम्। मूलबिम्बस्वरूपेणे ति।

अत्र छायावत् प्रतिबिम्बं द्रव्यान्तरमिति मतनिरासो बोध्यः। तथाहि अभाव्य पूर्वः पक्षः— बिम्बप्रतिबिम्बैक्यं न तावत् प्रत्यक्षगोचरम्, इमे चैत्रतच्छाये भिन्ने इति वत् इमे चैत्रतत्प्रतिबिम्बे भिन्ने इत्येव पार्श्वस्थेन ग्रहणात्, स्वकरतत्प्रतिबिम्बे भिन्ने इत्येव स्वेनापि ग्रहणाच्च, ननु यथा बहिः स्थितश्चैत्रो यत्स्थलक्षण प्रतिपन्नः तत्स्थलक्षण एव वेश्मान्तरस्थितोऽपि भाति, तथा यत्स्थलक्षणग्रीवस्थं मुखं तत्स्थलक्षणमेव दर्पणस्थमपि भाति, न तद्वस्त्वन्तरत्वे युज्यते, तस्मादेकमेकदेशस्थं च मुखं भ्रान्त्या विभिन्नं भिन्नदेशस्थं च भातीति चेत्? उच्यते, किमनेन सव्येतरहस्तयोरिवात्यन्तसादृश्यधीरूपन्यस्ता, प्रत्यभिज्ञा वा? नाद्यः, तयैक्यासिद्धेः, अन्त्येऽसिद्धिः, किञ्चित्स्वच्छताम्रादौ प्रतीते मुखच्छायामात्रे मुखप्रस्थानविशेषाप्रतीत्या प्रत्यभिज्ञाभावस्य स्फुटत्वात्, स्वनेत्रगोलकादौ स्वस्याभिज्ञाभावेन प्रत्यभिज्ञायोगाच्च, सूर्यपार्श्वे प्रतिसूर्य इति वत् दर्पणे मम मुखच्छायत्येवानुभवेन दर्पणे मम मुखं लग्नमित्यननुभवाच्च, चैत्रप्रतिबिम्बमेव दृष्टं न चैत्रः, चैत्रस्तु तेनानुमित इत्यनुभवायोगाच्च, प्रतिमुखे प्राङ्मुखत्वादिना दृश्यमानेऽपि स्वमुखे तद्बुद्ध्यभावाच्च, अतएव बालानां प्रतिबिम्बे बालान्तरभ्रमः, क्वचित् प्रतिमुखे मम मुखमिति व्यपदेशस्तु स्वच्छायाशिरसि स्वशिरोव्यवहारवत् मार्गविन्यस्तपादाकृतौ स्वपादव्यवहारवच्च गौणः, भेदज्ञाने सत्यभेदव्यवहारस्य गौणत्वनियमात्; किंच बिम्बप्रतिबिम्बयोर्भेदसाक्षात्कारे तावन्न विवादः, अन्यथा त्वयापि कस्य

भ्रमत्वमुच्येत, नच भेद भेदक च साक्षात्कुर्वन्नभेदमपि साक्षात्कुर्वन्दृष्टः ; नचैक्ये साक्षात्कृते सोपाधिकभेदभ्रमोऽपि युक्त , तदुपादानस्यानैक्याज्ञानस्य ऐक्यज्ञानेन निवृत्ते , नचोपाधिनिदृष्टिसिद्धकृतमेव ज्ञानमज्ञाननिवर्तकम्, ज्ञाते यदापि न जानामीत्यननुभवन ज्ञानस्य स्वप्रागभाव प्रतीयमान प्रत्ययान्तरा नपेक्षस्यैव निवर्तकत्वात्, तस्मात् बिम्बप्रतिबिम्बैक्ये न प्रत्यक्ष मानम् ; नाप्यनुमान मानम्, अत्यन्तसादृश्यस्य सव्येतरकरादौ व्यभिचारात्, विरोधाच्च, वैधर्म्याभावस्य चासिद्धे , क्रियासाम्यस्य च छायादावनैकान्त्यात ; बिम्बकारणमात्रजन्यत्वस्य च बिम्बादर्शाधीने प्रतिबिम्बेसिद्धे. पृथक् दृष्टकार्यानुरोधेन परिवेषेन्द्रचापच्छायाप्रतिसूर्यादावित्र कारणस्य कल्प्यत्वात् , प्रतिबिम्बमपि हि छायाविशेष , न हि भेरीघातादिकृतकारणाभावाद्ध्वनावुपरते ऽप्युपलभ्यमान प्रतिध्वनिर्न शब्दान्तरम् , एतन दर्पणादौ न मुखव्यक्त्य तर मस्ति, तज्जन्मकारणशून्यत्वात् , शशमस्तकविषाणवदिति विवरणोक्तानुमान निरस्तम् , एतनैव– 'अभिज्ञाया भेदो भाति, प्रत्यभिज्ञाया त्वभेद , तत्र भेदधीर्मुखान्तरैक्ये हेत्वभावेनोपपत्तिहीनत्वात् भ्रान्ति , अभेदधीस्तु सापपत्तिकत्वात् प्रमे ' ति निरस्तम् , अभेदधीरव नास्तीत्युक्तत्वात् , छायादाविव कारणस्य कल्प्यत्वेन भेदबुद्धेस्सोपपत्तिकत्वाच्च, स्वल्पद्रव्यानन्तर्भावे समोव द्रव्यान्तरत्वसम्भवाच्च, ' नोपरक्त न चारिस्थ ' मिति स्मार्तव्यवहारस्तु चित्रित सिंह इति लोकव्यवहारवत् ' यथा दारुमयी योषा यथा चर्ममयो मृग. ' इति स्मार्तव्यवहारवच्च गौण , तत्पक्षेपि हि वारिस्थशब्दोऽमुख्य , वारिणि सूर्यान्तराभावात् , गगनस्थस्य च वारिस्थत्वायोगात् , भेदस्तु प्रत्यक्षेण न्यूनाधिकपरिमाणत्वचलत्वाचलत्वोपाधियुक्तत्वायुक्तत्वत्वग्ग्राह्यत्वतदग्राह्यत्वप्रत्यङ्मुखत्वपराङ्मुखत्वरूपेण कस्तूरीतत्प्रतिबिम्बयोस्सौरभतदभावरूपेण गुडतत्प्रतिबिम्बयोर्माधुर्यतदभावरूपेण वह्नितत्प्रतिबिम्बयोरौष्ण्यतदभावरूपेण पतितत्प्रतिबिम्बयोर्गुरुत्वतदभावरूपेण सशब्दभेरीतत्प्रतिबिम्बयोश्शब्दतदभावरूपेण चानुमानेन, "यथैषा पुरुषच्छाया एतस्मिन्नेतादातता । छाया यथा पुरुषस्य पुमधीना च दृश्यते । एवमेवात्मनास्सर्वे ब्रह्मणा परमात्मन" इत्यादि श्रुत्या, "तवैव सदृशी च्छाया बिम्बस्य प्रतिबिम्बवत् । बहरसूर्यस्य यद्वत्सूर्यस्य सदृशा रुचे ।.

एवमेवात्मना लोके स्वात्मनमतमा मताः ॥ " इत्यादिस्मृत्या च सिद्धेः; न च बिम्बातिरेकेण दर्पणे कम्बुग्रीवत्वाभावात् तत्र तदन्वयाभाव इति वाच्यम्, तथापि वस्तुतलगतं कम्बुग्रीवादि तत्स्वरूपस्यैव दर्पणगतत्वेनारोपिततया तद्रूपादियुक्तत्वेन तद्गन्धादियुक्तस्यैव दर्पणस्थत्वेन प्रतीत्यापत्तेः; एतेन " दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम् । व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् " मिति निरस्तम्, परावृत्य स्वमुखस्यैव ग्रहणे पार्श्वस्थस्य मुखस्य प्रतीत्ययोगात्, अस्मिन् पक्षे दर्पणादेर्नेत्राभिघातजन्यमात्रोपक्षीणत्वेन दर्पणैक्य इव दर्पणभेदेऽप्यनेकमुखप्रतीतेः मणिकृपाणादिषु विरुद्धरूपानेकमुखप्रतीतिश्चायोगाच्च; विरलावयवस्य जलस्य नेत्राभिघातकत्वे स्वच्छजलान्तर्गतशिलाद्यग्रहणापत्तेश्च, अस्या प्रक्रियाया स्वच्छताया अनुपयोगेन शिलाद्यभिहतनेत्रस्यापि स्वमुखग्राहकत्वापाताच्च, प्रतिचन्द्रादिदर्शने चन्द्रादिदर्शनजन्यसुखादेः कपिलादिप्रतिबिम्बदर्शने कपिलादिदर्शनजन्यपुण्यादेश्च प्रसङ्गाच्च, सूर्यकस्यापि सूर्यमहद्दर्शनप्रसङ्गाच्च, अतिस्वच्छदर्पणादावपि किञ्चित्स्वच्छतास्रादावपि मुखमहत्त्वाविशेषप्रतीत्यापाताच्च, किञ्च "नेक्षेतोद्यन्तमादित्य" मित्यनेन उद्यत्सूर्यप्रतिबिम्बस्यापि निषेधः स्यात्, वारिस्थसूर्यदर्शननिषेधे गगनस्थसूर्यदर्शनस्यापि निषेधः स्यादिति ।

अत्र ब्रूमः— विपुलपरिमाणस्य पर्वतप्रतिबिम्बादेरल्पपरिमाणे दर्पणादौ वृत्त्यसम्भवात् न तत्र द्रव्यान्तरोत्पत्तिसम्भवः । किञ्च त्वदुक्तदुर्व्यापेनाङ्गुल्यवष्टम्भेन चन्द्रादिद्वित्वप्रतीतिस्थलेऽपि द्रव्यान्तरोत्पत्तिप्रसङ्गः । यदि च तत्रापि दोषादेव ब्रूषे, किमपराद्धं शुक्तिरजतादिना । यदि च कल्पककारणाभावात् तत्र रजताद्युत्पत्त्यसम्भवः, तर्हि प्रतिबिम्बे कथं तत्सम्भवः । यदि च तत्रापूर्वमेव सामग्र्यन्तरं कल्पयसि, शुक्तिरजतेऽपि कल्पयसि । तस्मादसत्ख्यातिं परिहर, स्वीकुरु वा सर्वत्र यथार्थख्यातिम्, परिहर वा प्रतिबिम्बस्य बिम्बभेदम् । किञ्च बिम्बप्रतिबिम्बयोर्भेदे न वारिस्थमादित्यं पश्येदिति वारिस्थस्यादित्यव्यपदेशो न युज्यते, न ह्यादित्यप्रतिबिम्बमादित्यः, तथा सति ब्राह्मणप्रतिबिम्बस्यापि ब्राह्मणत्वेनोपाध्यपनयनादिना प्रतिबिम्बनाशे तदपनायकस्य ब्रह्महन्तृत्वापत्तेः । उपाधिदाहात् गृहप्रतिबिम्बदाहे गृहदग्धृत्वापत्तेः । उदकुम्भादौ सुराप्रतिबिम्बे सति सुरा

सुखसर्गप्रयुक्तसुखाद्यापत्तेः। कपिलादिप्रतिबिम्बदर्शनेन कपिलादिदर्शनजन्यपुण्यापत्तेश्च। त्वया द्रव्यान्तरत्वाङ्गीकारेण तेजोद्रव्यात्मकादित्यमण्डलत्वासिद्धेश्च। त्वन्मते कथं वारिस्थशब्दान्वय इति चेन्न,— वारिस्थत्वेन न पश्येदित्यर्थात्, रजतमभादिति वत्। येचानुमानाभासा उपन्यस्ताः ‘न्यूनाधिकपरिमाणवत्त्वे’त्यादिना, ते साध्याविशेषान्निरस्ताः। या च श्रुतिरुपन्यस्ता, न सा बिम्बप्रतिबिम्बभेदमाह, किन्तु छायातद्वतोरेव। स्मृतिरपि लौकिकप्रतीत्यनुसारेण दृष्टान्तमाहेति न तयापि भेदसिद्धिः। भ्रान्तिसिद्धार्थानुवादेपि तात्पर्यविषयभूतार्थस्याबाधात् प्रामाण्यमप्ययथार्थवादवन्न हीयते। यच्चोक्तम्— दर्पणे रूपादियुक्तस्येव गन्धादियुक्तस्यापि कस्तूर्यादेर्ग्रहणप्रसङ्ग इति, तदापातत, गन्धस्याचाक्षुषत्वेन तस्य प्रतिबिम्बनानर्हत्वात्। अन्यथा तवापि कथं तत्र गन्धानुत्पत्तिः। एतेन— दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम्। व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् ॥*॥ इति सुरेश्वरम्। स्वमुखस्यैव ग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोग इत्यनुक्तोपालम्भ एव, स्वमाननमेवेत्यनुक्तेः, येषामुपाधौ प्रतीतिस्तैस्सर्वैरुपाध्यभिहता दृष्टिर्युज्यत इत्यत्र तात्पर्यात्। दर्पणभेदे च मुखप्रतिबिम्बभेदप्रतीतिः मणिकृपाणादौ विरूपप्रतीतिश्चोपाधिभेददोषाभ्यामेव यथादर्शनमुपपद्यते। अन्यथा तवापि तद्दशप्रतिबिम्बोत्पत्तौ का गतिः। नापि जलस्थशिलाद्यग्रहणापत्तिः, कतिपयनायनरश्मिनिवृत्तावप्यनिवृत्तरश्मिभिर्ग्रहणसम्भवात्। दृश्यते हि काचादिप्रतिहतानां द्युमणिकिरणानामन्यत्र प्रसृतावपि कैश्चित्किरणैस्तत्काचादिप्रकाशः। न चास्वच्छेऽपि नयनप्रतिघातप्रसङ्गः, अस्वच्छत्वादेव। न च काचादिभिरिव भित्त्यादिभिरपि सूर्यरश्मिप्रतिघातो दृष्टः। अन्यथा कथं तत्रोत्पत्तिर्नोपेयेत। न च चन्द्रप्रतिबिम्बदर्शने चन्द्रदर्शनजन्यसुखापत्तिः, दुर्गपत्तेः। न चापरावृत्तनायनरश्मिसन्निकर्षाधीनचन्द्रदर्शनजन्यसुखापत्तिः, तादृशकारणाभावादेव तादृशकार्यस्याप्यसिद्धेः। किञ्च गोत्राभिमुखस्यैव चन्द्रस्य तच्चैतन्योत्पादनद्वारा सुखहेतुत्वात् कथमापादनम्। कपिलादिप्रतिबिम्बदर्शने पुण्यं नास्तीति यदि प्रमाणं पश्यसि तदा चक्षुरभिमुखस्यैव कपिलादेर्दर्शनं हेतुरस्तु। न च सूर्यस्यापि दुर्दर्शत्वभङ्गः, दुर्दर्शत्वं हि गोलकान्ते

तथापि यथा मणिकृपाणदर्पणादिप्रयुक्ताल्पत्वमलिनत्वतरळत्वादयो धर्माः प्रतिबिम्बैकवर्तिनो वस्तुतस्तदभिन्नेऽपि मुखे न सम्बध्यन्ते नापि परस्परं सङ्कीर्यन्ते तथात्रापि ब्रह्मप्रतिबिम्बभूतजीवगता दोषा ब्रह्मणि न सम्बध्यन्ते प्रतिजीवं नियताश्च भवन्ति। वस्तुतो ब्रह्माव्यतिरिक्तानां जीवानां कथमशुद्धिरिति चेन्न;– मुखाव्यतिरिक्तानां प्रतिबिम्बानां कृपाणाद्युपाधिकश्यामत्वादिवदौपाधिकाशुद्धिसम्भवात्। अत एव जीवेश्वरबद्धमुक्तशिष्याचार्यादिव्यवस्थाश्च सिद्ध्यन्ति। नन्वविद्यास्वरूपलाभे तत्र जीवाख्यप्रति

---

देन वेदनाविशेपजननात् भवति, तथैवानुभवात्, सच गोलकस्य सूर्याभिमुख्ये सति तदीयगाढालोकस्य गोलके प्रवेशात् स्यात्, अत एव सूर्यकदर्शनेपि तद्दर्शनहेतूपाधिप्रतिहततपनकिरणाना कतिपयाना गोलके प्रवेशात् न घटादिवत् सुदर्शना सूर्यकस्य, अत एव गोलकवेदनाविशेषादेव दुर्दर्शत्व अत एवाभ्यासादिसाधितपाटवगोलकाना वेदनाविरहात् सुदर्श एव सूर्यः। विरलमेघावृतसूर्यस्य सुदर्शत्वञ्चेममर्थ ज्ञापयति। नच किञ्चिदस्वच्छताम्रादौ मुखसंस्थानविशेषप्रतीत्यापत्तिः, स्वच्छताविशेषस्यैव संस्थानविशेषप्रतीतौ प्रतिबिम्बोत्पत्ताविव हेतुत्वकल्पनादिति।

बिम्बप्रतिबिम्बयोरभेदाज्जीवगता धर्मा ब्रह्मणि स्युः, तत्तज्जीवगतधर्माणामपि परस्परसाङ्कर्यप्रसङ्गः, इति शङ्का यद्यपी त्यादिना निरस्ता; इदानीं ब्रह्मगतशुद्धिर्जीवे स्यादित्याशङ्का परिहरति–वस्तुत इति। अत एवे ति। बिम्बधर्माणां प्रतिबिम्बगतत्वाभावात् प्रतिबिम्बधर्माणां बिम्बगतत्वाभावात् तत्तत्प्रतिबिम्बधर्माणां परस्परमसाङ्कर्याच्चेत्यर्थः। नन्वविद्यास्वरूपे सिद्धे तदुपाधौ प्रतिबिम्बप्रकाशः, तत्प्रकाशेच सति तत्समर्पकजीवप्रतिबिम्बत्वलाभात् प्रतिबिम्बस्वरूपजीवाश्रयाविद्यासिद्धिरित्यन्योन्याश्रय इत्याशङ्क्य, प्रतिबिम्बान्तराश्रिताविद्योपाधिना प्रतिबिम्बान्तरप्रकाशे तदाश्रयाविद्यान्तर तदविद्यया च प्रतिबिम्बान्तरमिति बीजाङ्कुरन्यायाद्वा अविद्याया मिथ्यात्वेन इतरेतराश्रयस्वरूपानुपपत्तेः भूषणत्वाद्वा अविद्याजीवतत्सम्बन्धाना स्वरूपत एवानादित्वाद्वा न दोष इत्याह–नन्वि त्यादिना।

बिम्बप्रकाशः, तत्प्रकाशे तदाश्रयाविद्याक्लृप्तिरित्यन्योन्याश्रयणं प्रकटमिति चेन्न,— उभयोर्बीजाङ्कुरन्यायेनानादितया परिहारात् । नच प्रासादनिगरणादिवदवस्तुरूपत्वेनानुपपन्नतैकवेषायामविद्यायामितरेतराश्रयत्वादयो वस्तुदोषाः क्षतिमावहन्ति । यद्वा स्वरूपत एवाविद्यानां तत्कल्पितानाञ्च जीवानामनादित्वमस्तु, एकजीववाद इवानेकजीववादेऽपि तदविरोधात् । मुखप्रतिबिम्बश्यामत्वादेरिव जीवाशुद्धेरपि मिथ्यात्वात् ज्ञाननिवर्त्यत्वमप्युपपद्यते । प्रतिबिम्बस्थानीयानामपि जीवानां परमार्थब्रह्माव्यतिरेकात् । "अनेन जीवेनात्मनानुप्रविश्य" इत्यपि परब्रह्मणो जीवतादात्म्यानुसन्धानमप्युपपद्यते । अत एव "क्षेत्रज्ञञ्चापि

---

नन्वेकजीववादिनेव स्वरूपानादित्वस्योक्तत्वादनेकजीववादिना तदनुक्तेः कथमेतत्पक्षे अयं परिहार उच्यत इत्याशङ्क्य, तैरनुक्तत्वेऽपि एकजीववाद इव तदङ्गीकारे विरोधाभावात् जीवानादित्वमुक्तमनुग्रहधियैव परिहारः समञ्जस एवेत्याह— एकजीववाद इवे ति । ननु उपाधिप्रयुक्तधर्माणां भेदादीनां घटाकाशादिगतानां सत्यत्वदर्शनात् न जीवगताशुद्धेरौपाधिकत्वान्मिथ्यात्वमुपपद्यते, तदभावे च न ज्ञाननिवर्त्यता स्यात्, तदभावे च मोक्षस्य तत्त्वज्ञानसाध्यता न स्यात्, जीवगताशुद्धिनिवृत्तेरेव मोक्षत्वादित्याशङ्क्य, प्रतिबिम्बोपाधिप्रयुक्तधर्मस्य मिथ्यात्वदर्शनादिहाप्यशुद्धेर्मिथ्यात्वं ज्ञाननिवर्त्यत्वं चोपपद्यत इत्याह—मुखे ति । नन्वेवं जीवस्य ब्रह्मप्रतिबिम्बरूपत्वे ततो भिन्नत्वेनाभेदायोगात् ब्रह्मणो जीवतादात्म्यानुसन्धानं न स्यादित्याशङ्क्य, समानसत्ताकयोरेव भेदाभेदयोर्विरुद्धत्वात् पारमार्थिकाभेदे सत्येव उपाधिवशादनिर्वचनीयो भेद उत्पद्यत इति जीवतादात्म्यानुसन्धानमुपपद्यत एवेत्याह— प्रतिबिम्बे ति । तर्हि पारमार्थिकाभेदसत्त्वे जीवधर्माणां व्यवस्था न स्यादित्याशङ्क्य, पूर्वोक्त परिहार

मां विद्धी" त्यादिकमपि निर्व्यूढम् । एवं परमार्थतो ब्रह्मव्यतिरेकेपि काल्पनिकभेदाश्रयणेन व्यवस्थेत्युक्तमिति ।

अत्र ब्रूमः— तत्र तावदन्तःकरणप्रतिबिम्बाद्यसम्भवस्यान्यत्र प्रतिपादनात्तन्निबन्धनजीवभेदादिकॢप्तिरपि निर्मूलैव, अथापि वदामः ।

---

स्मारयति एव मिति । तत्रताव दिति । आदिपदेनाविद्याप्रतिबिम्बं गृह्यते । अन्यत्र— वादान्तरे । अय भावः— जीवस्य प्रतिबिम्बरूपत्वे जीवब्रह्मविभागस्याविद्याधीनतयाऽनादिरनभङ्गप्रसङ्गः; ननु तदधीनत्वं न तज्जन्यत्वम्, किन्तु तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वम्, प्रयुक्तत्वं च न व्याप्यत्वं व्यापकत्वं वा, तुल्यनाशयोः परस्पराधीनत्वाभावात्, किन्तु जन्यत्वम्, तच्च जीवब्रह्मविभागेऽनादिभूतेप्युपपद्यत एव, विभागस्याविद्याव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादिति चेन्न,— आवरणस्याविद्याधीनत्वाभावप्रसङ्गात्; न ह्यावरणनिवृत्तिरविद्यानिवृत्त्यधीना, प्रत्युतावरणस्याविद्यानिवृत्तिप्रतिबन्धकत्वाङ्गीकारादविद्यानिवृत्तिरेवावरणनिवृत्त्यधीना, किञ्च विभागस्याप्यावरणाधीनतयावरणानिवृत्त्युत्तरक्षण एव निवृत्त्याऽविद्यानिवृत्त्या सहैव विभागनिवृत्त्युपपत्तेर्न विभागनिवृत्तेरविद्यानिवृत्त्यधीनता, किञ्च तत्कार्यस्य वा तत्कार्यविरोधिनो वा तदधीनत्वव्यवहारो दृश्यते, यथा घटो दण्डाधीनः सेवको राजाधीनः गुणो गुण्यधीनः इति, तद्बहिर्भावात् कथं तस्य तदधीनत्वम्; किञ्च प्रतिबिम्बप्रतीत्युपयोगितया लोहादौ घर्षणादिसाध्यं जलतैलादौ स्वभावसिद्धं च किञ्चिद्वैलक्षण्यं तत्प्रतिबिम्बोपाधौ दृश्यते, तच्चाविद्याया नास्त्येवेति कथमुपाधित्वम्; ननु श्रुत्या जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावप्रतीत्या तदुपाधौ तादृशवैलक्षण्यं तदभावेपि चाऽविद्यादेः प्रतिबिम्बोपाधित्वं कल्प्यत इतिचेन्न, प्रतिबिम्बस्यानादिसिद्धतया उपाध्यनपेक्षणात्, प्रतिबिम्बस्योपाध्यपेक्षा लोके दृष्टेति चेन्न,— तत्र प्रतिबिम्बप्रतिभासस्य बिम्बप्रतिबिम्बभेदस्य च जन्यतयाऽन्वयव्यतिरेकाभ्यां दर्पणादेः कारणत्वकल्पनेपि जन्यत्वविरहात् न ब्रह्मप्रतिबिम्बे तदपेक्षा; यदि च प्रतिबिम्बे तादृशस्य लोके दर्शनादेव प्रकृते

तथा कल्पयसि, तत एव जन्यत्वमपि कल्पयेत्, जन्यस्य कारणसापेक्षत्वस्य लोके दर्शनात्, अजन्येऽपि तादृशत्वे ब्रह्मणापि निरवधिभेदान्तरप्रसङ्ग, ननु 'उपाधिना क्रियते भेदरूप' इति श्रुत्यैव उपाधिसापेक्षत्वमुपपाद्यत इति चेत्? न, स्वाभाविको जीवब्रह्मभेद किन्तु बिम्बत्वप्रतिबिम्बत्वोपाधिवशादित्येव श्रुत्यर्थस्योपपत्ते, तर्हि दृष्टान्तवैषम्य स्यात्, तत्र हि सूर्यकादेर्जलाद्युपाधि निबन्धनत्व प्रतिपाद्यत इति चेन,– जलाद्यनुपादाने दृष्टान्ते बिम्बप्रतिबिम्ब भावो न प्रतीयेतेति तदर्थं तदुपन्यासात्, पक्षान्तरेऽपि दृष्टान्तवैषम्य समान मेव, 'अयो द्द गच्छति' ति हि सूर्यस्यानधिकरणत्व प्रतीयते, नच सूर्यस्याऽधि करणत्वमस्ति किन्तु तथा भ्रान्तिरेव, नहि दार्ष्टान्तिके साऽस्ति, अज्ञानाद्यभिन तयैव प्रतीते, क्षेत्रेष्वप्यपि प्रतिबिम्बरूप आत्मा शरीरेषु वर्तत इत्यर्थ, यद्वा यथा सूर्यो जलनिष्ठतया प्रतीयमानस्तद्गतक्रियादिभेदाश्रयतया प्रतीयते, तत्त्वतो न तदाश्रय, एवमात्माप्यन्त करणाभिन्नतया प्रतीयमानस्तद्गतकर्तृत्वा द्याश्रयतया प्रतीयते, न तु तत्त्वतो कर्तृत्वादिधर्मवानित्यर्थ, न चान्त क रणस्य प्रतिबिम्बोपाधित्व प्रतीयते, न हीदमभिन्नतया प्रतीते रजतेऽपीदन्त्व भासत इत्युक्त युक्त प्रतिबिम्बोपाधित्वम्, "एकधे" त्यत्रापि बिम्बप्रति बिम्बत्वमात्र दृष्टान्त, जलसङ्कीर्तनस्य प्रयोजन पूर्ववदेव यथा, चन्द्रो जल गततया प्रतीयमानो जलगतैर्भेदैर्युज्यते तथात्माऽन्त करणाभिन्नतया प्रतीयमान स्तद्गतभेदैर्युज्यत इत्यर्थ, "रूप रूपमि" त्यत्रापि प्रतिशरीर बिम्बात्मनो वृत्तिरेव प्रतिपाद्यते, न तु तत्र प्रतिबिम्बोपाधि, यद्वा प्रतिरूपवदुपाधिगतैर्भेदै र्युज्यत इत्यर्थ, ननु जीवब्रह्मणोरभेदस्तावत्प्रतिपाद्यते, तयोस्साक्षयत्व निरवद्यत्व च तत्सर्व बिम्बप्रतिबिम्बभाव अविद्यादेरुपाधितया तस्य प्रतिबिम्बपक्षपातित्वे च सत्येवोपपद्यत इति चेन्न,–तथापि व्यवस्थाभावस्योपपादितत्वात्, नच द्विगुणीकृत्य तत्र वृत्त्यर्थं तत्कल्पना, आकाशादेरन्यथा दृश्यमानस्य वक्ष्यमाणत्वात्, किञ्चाचाक्षुष त्वान्न प्रतिबिम्बसम्भव, न चान्यथानुपपत्ति, आकाशस्य प्रतिबिम्बासद्ध, अभ्र नक्षत्रादेरेव हि प्रतिबिम्बनम्, आकाशप्रतिबिम्ब व्यवहारस्तु तत्रैवाकाशत्वभ्रमा दुपपन्न, अत एव ह्याकाशस्योपरिदेशस्थत्वव्यवहारो लौकिकानाम्, अथवा आकाशस्यैव प्रतिबिम्बताम्, नचाकाशस्याचाक्षुषत्वम्, अरूपित्वादिति वाच्यम्,– नील नभ इति प्रतीते रूपसद्भावात् नच समीपेऽपि तथानुभवप्रसङ्ग, आलो-

कम्पेर भूतलादिना दूरेणैव तथैत्याभिव्यक्ते , यद्वा आरोपितनीलविशिष्टस्यैव वा प्रतिबिम्बन, आरोपितरूपविशिष्टवेन चाक्षुषत्व कल्प्यताम्, अन्वयव्यतिरेकाभ्या रूपहीनस्यैव वा ऽ चाक्षुषत्व कल्प्यताम् , सर्वथैव यदञ्जनप्रत्य याञ्जनवत्प्र प्रतीयते तस्यैव प्रतिबिम्बन प्रतीयत इति निरस्तम चाक्षुषत्वाभाव , तस्याकाशा नाकाशत्वे नेदानीं विरोधितन्त्रम् । किञ्च ब्रह्मणस्सर्वपदार्थव्यापि अन्तर्बहिश्च व्या प्य वर्तमानस्य कथ तत्रैव प्रतिबिम्बनम् ? न हि जले वर्तमानस्य तत्रैव प्रति बिम्बन दृश्यते । दृश्यते ह्याकाशस्येति चेन्,— जलान्त स्थितप्रदेशातिरिक्तप्रदेश स्यैव तत्र प्रतिबिम्बनात्, अत एव हि तत्र नैल्य साभनश्चत्त्व चोपलभ्यते, एतेन द्विगुणीकृत्य वृत्त्यर्थं प्रतिबिम्बकल्पनमिति निरस्तम् , न चात्रापि प्रदेशान्तरस्यैव प्रतिबिम्बनम्, स्वाभाविकप्रदेशभेदासिद्धे , औपाधिकोऽस्त्विति चेत ? कोऽय मुपाधि ? अविद्यातदभावाविति चेन,— प्रतियोगितदभावयोरेकत्रासम्भवात् , वृक्षादौ मूलाग्रच्छेदेन भेदो वाच्य इति स्वैवोक्ते , न चाश्राप्यवच्छेदकान्तरात् भेद , अनवस्थापातात् , तथैव जीवब्रह्मानाक्रान्त चैतन्यमिदानीं नास्तीत्युक्त स्वाच्च, किञ्चोपाधिप्रतिस्फालितो निवृत्तनायनरश्मीनां प्रतिबिम्बज्ञानकारणतया लोकविदुत्वात् कथ तदभावे ब्रह्मण प्रतिबिम्बसम्भव ,पराङ्वृत्त्यधीनसन्निकर्षाभावा देव हि मलस्थस्य न जले प्रतिबिम्बदर्शनम् ? अयत्वात्र तदपेक्षेति चेत् , तर्हि प्रतिबिम्बप्रतीतिकारणाभावेपि तामभ्युपगच्छत परमसाहसिकस्य तबोपाधिपरि त्यागे कियानिव भार , किञ्चैवमावाशप्रतिबिम्बकथा चानुपपन्न स्यात् , किञ्च प्रतिबिम्बदर्शन चैतन्यमेव, तदेव ह्युपाधिसम्बन्धात् स्वात्मान भिन्नतया पश्यतीति चेन,— किं प्रतिबिम्बमुपाधिनिष्ठतया पश्यति, उतोपाध्यभिन्नतया ? नाद्य , अविद्याभिन्नतया स्वात्मान पश्यचैतन्य कथ तन्निष्ठतया पश्येत् , नचा भेदमानमसिद्धमिति वाच्यम् , तथा सत्यमानस्य तदभेदाप्रतीत्या व्यावहारिक सत्त्वस्याभावप्रसङ्गात् , ननु यथा प्रत्यक्षणैकत्वेन प्रतीयमान एव चन्द्र अङ्गुल्य वष्टम्भादिवशाद्द्वित्वप्रतीति तथा ऽ विद्योपाधिवशात्तन्निष्ठतया प्रतीयमानस्यापि तदभिन्नत्वप्रतीतिरविरुद्धैवेति चेत् ? सत्यम् , तत्र हि द्वित्व प्रातिभासिकत्वाद्व्याव हारिकैकत्वाविरुद्धमेव, ब्रह्मणि चाज्ञाननिष्ठत्वमज्ञानाभिन्नत्व चोभय व्यावहारिक मेवेति कथ तयोरसम्भव , न द्वितीय , स्वनिष्ठविम्बभेदभ्रमजनकत्वोक्तिविरो

किं जीवानामकल्पितेन स्वाभाविकेन रूपेणाविद्याश्रयत्वम्, उत तदतिरिक्तेन तस्मिन् कल्पितेन, अथ कल्पिताकारविशिष्टस्वरूपेण? न प्रथमः, ब्रह्माज्ञानवादप्रसङ्गात्। न द्वितीयः, जडाज्ञानवादावतारात्; जडस्य नित्याज्ञत्वेन तन्निवृत्तेरशक्यत्वप्रसंगाच्च । जडस्य स्वाज्ञाननिवृत्तिवाञ्छानुपपत्तेः, जडस्याज्ञानप्रसंगाभावाच्च, अज्ञाननिवृत्तेः

---

यात्; बिम्बात् भेदज्ञानेऽपि प्रतिबिम्बादभेदज्ञानमुपपद्यत इति चेन्न,– बिम्बप्रतिबिम्बयोरेकत्वेन तन्निरूपितभेदाभेदयोस्समानसत्ताकयोरेकत्रासम्भवात्; किञ्च– आविद्योपाधिवशाद्भेदप्रतीतिमात्रेण कथं प्रतिबिम्बभावः, तथा सत्यङ्गुल्यवष्टम्भादिना भिन्नतया प्रतीयमाने चन्द्रेऽपि तत्कल्पनाप्रसङ्गात्; ननु श्रुतिबलात्तदङ्गीकार इति चेन्न;– श्रुतेस्तत्परत्वासिद्धेः, तथाहि– "अत एव चोपमा सूर्यकादिव" दित्याह सूत्रकारः; अत्र भाष्यम्—"यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणः न तत्प्रयुक्तदोषभाक्त्वम् अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत् परमात्मा तत्र तत्रावस्थितोऽपि निर्दोष इति शास्त्रेषूपमा क्रियते– "आकाशमेकं हि यथा घटादिषु पृथक् भवेत् । तथाऽऽत्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्।। एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति ।

किं जीवाना मिति । विशेष्यमात्रस्य भोजनान्वयेऽपि दण्डी भुङ्क्त इति व्यवहारात् स्वरूपेण तदाश्रयत्वेऽपि जीवस्याज्ञानाश्रयत्वोक्तिर्न विरुद्धेति भावः । उत तदतिरिक्तेने ति । विशेषणमात्रान्वयेऽपि स्वर्गी ध्वस्त इत्यादिव्यवहारादिति भावः । इष्टापत्तिमाशङ्क्याह– जडस्ये ति । नित्यत्वं यावदाश्रयानुबन्धित्वम्, जडस्य यावत्स्वरूपमज्ञतया तस्मिन् सत्येव तदज्ञाननिवृत्तिरनुपपन्ने त्यर्थः । अज्ञानाश्रय एव तन्निवृत्तिरूपा मुक्तिरवश्य वाच्या, अन्यथा बन्धमोक्षयो र्वैयधिकरण्यप्रसङ्गादिति भावः । ननु जडस्य यावत्स्वरूपानुबन्ध्यज्ञानं ज्ञानाभाव एव, न भावरूपाज्ञानम्, तस्याश्रये विद्यमान एव निवृत्तिरस्त्वित्याशङ्क्य जडत्वात् स्वाज्ञाननिवृत्तिवाञ्छानुपपत्तेरज्ञाननिवृत्तेरर्थ्यमाणत्वाभावात् जडत्वादेवास्वानन्दावभासाप्रसक्त्या तदनवभासार्थकल्पिताज्ञानस्याप्यप्रसक्तत्वेन तत्समानाधिकरणतन्निवृत्तेरत्यन्तासिद्धत्वाच्चाज्ञाननिवृत्तेः पुरुषार्थत्वासम्भवान्मोक्षशास्त्रव्याकोप इत्याह– जडस्य स्वाज्ञानेत्या दिना । हेतुद्वयस्यैकसाध्यान्वयेऽपि द्वितीयहेतौ

पुरुषार्थत्वमपि न स्यात् । नच तृतीयः, तत्र किं स्वकल्पिताकार विशिष्टा वा स्वयमविद्या तिष्ठेत्, अविद्यान्तरकल्पिताकारविशिष्टेवा? पूर्वत्र आत्माश्रयत्वमन्योन्याश्रयणं वा, स्वकल्पिताकार-विशिष्टस्वरूपलाभे सति स्वात्मन्याश्रयवर्णनात् । उत्तरत्राप्युक्तचोद्याव तारे अविद्यान्तरापेक्षायां अन्योन्याश्रयचक्रकानवस्थान्यतमापत्तेः । किञ्च सर्वजीवभेदकल्पिकाविद्या किमेका, उत प्रतिजीवं भिन्ना? पूर्वत्र एकमुक्तावविद्याविनाशात् सर्वमुक्तिप्रसंगे कथं बद्धमुक्तव्यव-

---

जडपदस्य हेतुपरत्वाच्च वैयर्थ्यमिति ध्येयम् । तृतीयेपि ब्रह्मजडाज्ञानवादः पूर्वोक्तस्तदवस्थ एव । अज्ञानस्य व्यासज्यवृत्तित्वाभ्युपगमे च मुक्तिसंसारयोरपि तथात्वापत्तिरित्यभिप्रायेणाह– न च तृतीय इति । विकल्पमुखेन दूषणान्तर माह– तत्रे ति । किं स्वकल्पिताकार स्वयमेव, उत धर्मान्तरम्? नाद्य इत्याह पूर्वत्रे ति । द्वितीय आह– अन्योन्ये ति । ननु अविद्या स्वकल्पिताकार विशिष्टमात्मानमाश्रयति चेत् कथमात्माश्रय, कथञ्चान्योन्याश्रय, आश्रयणस्य कल्पिताकारवैशिष्ट्यापेक्षायामपि स्वरूपे तदनपेक्षणादित्यत्राह– स्वकल्पिते ति । कदाचिदप्यज्ञानस्य निराश्रयत्वानङ्गीकारादिति भावः । अविद्यान्तरकल्पिता कारविशिष्टे अविद्या तिष्ठतीति द्वितीयपक्षे तस्याविद्यान्तरस्य स्वकल्पिताकार विशिष्टे वृत्त्यङ्गीकारे पूर्ववदात्माश्रयान्योन्याश्रयान्यतरापातेनाविद्यान्तरकल्पिता कारविशिष्टाश्रयत्वे वक्तव्ये तस्याविद्यान्तरस्य स्वनिर्वाह्याश्रयताकाविद्यापेक्षाया मन्योन्याश्रय, स्वनिर्वाह्यनिर्वाह्याविद्यान्तरापेक्षाया चक्रकम्, तत्परिजिहीर्षया अविद्यान्तरापेक्षायामनवस्थापात इत्याह– उत्तरत्रे ति । एवमज्ञानस्य जीवाश्रयत्वे दोषमुक्त्वा प्रसङ्गादज्ञाने दूषणान्तरमप्याह– किञ्चे ति । सर्वमुक्तिप्रसङ्ग इत्यनन्तरं कथमन्यस्य बन्ध इत्यध्याहार्यम् । एकमुक्तावविद्याविनाशात् सर्वमुक्तिप्रसङ्गे कथमन्यस्य बन्ध, अन्यस्यामुक्तत्वे च प्रत्यक्षसिद्धेऽविद्यास्थि-त्यवश्यम्भावात् कथमेकस्यापि मोक्ष, ततश्च कथं बद्धमुक्तव्यवस्थेति योजनीयम् । एकस्य मुक्तत्वात् सर्वमुक्तिर्वा स्यात् एकस्य बद्धत्वात् सर्वबन्धो

स्था; अन्यस्यामुक्तत्वे स्वाविद्यास्थितत्ववश्यम्भावात् कथमेकस्यापि मोक्षः। उत्तरत्रापि जीवभेदे स्थिते तन्मूलाविद्याभेदक्लृप्तिस्तन्निश्चयाच्च जीवभेदक्लृप्तिरिति परस्पराश्रयणम्। नच सत्यो जीवभेदस्त्वयेष्यते। नच तदा तत्सिद्ध्यर्थमविद्याकल्पनमपेक्ष्यते। प्रत्यक्षादिसिद्धजीवभेदानुसारेण तत्कल्पकाविद्याभेदक्लृप्तौ को विरोध इति चेन्न;—*प्रत्यक्षादिसिद्धस्य जीवभेदस्य अस्मन्मतेन सत्यतायां* तन्मूलभूताविद्याकल्पनवैयर्थ्यात्। ब्रह्माज्ञानवादेन तु जीवभेदस्य मिथ्यात्वेनैव जीवैक्यात् तद्भेदक्लृप्त्यर्थाविद्याभेदक्लृप्त्यनुपपत्तेः।

---

चा स्यात् न तु व्यवस्थेति वाक्यार्थः। यद्वा नाध्याहारः कार्यः, किन्तु सर्वमुक्तिप्रसङ्गस्य व्यवस्थाविरह एव साध्यः। मास्तु व्यवस्थेत्यत्राह—अन्यस्ये ति। त्वदीयबन्धस्येदानीं प्रत्यक्षसिद्धत्वात् कथमेकस्यापि शुकवामदेवादेर्मुक्ततया प्रमाणप्रसिद्धिरित्यर्थः। उत्तरत्रे ति। जीवभेदे निश्चिते तद्भेदोपपादकतया अविद्याभेदक्लृप्तिः, क्लृप्ते चाविद्याभेदे उपाधिभेदे उपाधेयभेदस्यावश्यकत्वात्तया जीवभेदक्लृप्तिरिति परस्पराश्रय इत्यर्थः। ननु त्वन्मत इव जीवभेदनिश्चयस्य नोपाधिभेदनिश्चयाधीनतेत्याशङ्क्य, अस्मन्मते जीवभेदस्य सत्यतया उपाध्यनपेक्षत्वान्न जीवभेदज्ञानस्योपाधिभेदज्ञानापेक्षा, त्वन्मते चाविद्योपाधिकत्वा जीवभेदस्य तज्ज्ञानमुपाधिभेदज्ञानापेक्षमेव, न हि घटादिभेदज्ञानाभावे आकाशभेदज्ञान दृष्टमित्यभिप्रायेणाह— न च सत्य इति। गत्यन्तराभावात् जीवभेदस्य सत्यत्वमिष्यत इत्याशङ्क्य, तथा सत्यविद्याभेदकल्पनमेवानुपपन्नमित्याह— न च तदे ति। ननु प्रत्यक्षेण श्रुतिस्मृतिभ्यां च जीवभेदस्य सिद्धौ स्वाभाविकस्य तस्य श्रुतिस्मृतिभ्यामेव निरासात् तस्यौपाधिकत्वेऽवश्य वाच्ये सति तत्सिद्धये अविद्याभेदकल्पनमुपपद्यत एव, आकाशादिभेदे तु तथा मानाभावादुपाधिभेदप्रतीत्यैव तद्भेदप्रतीतिरित्याशङ्कते— प्रत्यक्षादी ति। किं प्रत्यक्षादिसिद्धो जीवभेद अस्मन्मत इव सत्यतयेष्यते, उत ब्रह्माज्ञानमत इव मिथ्यात्वेन, इति विकल्पमभिप्रेत्य क्रमेण दूषयति—प्रत्यक्षे ति। मिथ्यात्वेने ति।

उभयपक्षोक्तधिनः परमार्थस्य वाऽपरमार्थस्य वा भवदभिमतस्य जीव भेदस्याप्यसिद्धेः । किंच–याभिरविद्याभिर्जीवाः कल्प्यन्ते किं तासां ब्रह्मैवाश्रयः, उत जीवा एव? आद्ये ब्रह्माज्ञानमपरिहार्यम् । द्वितीये भिन्नजीवाश्रयाविद्याभेदासिद्धौ जीवभेदः, तत्सिद्धौ च तदाश्रयाविद्या भेदसिद्धिरिति मिथस्संश्रयः । अथ जीवभेदकल्पनार्थं नाविद्यान्तरा पेक्षा, बद्धमुक्तव्यवस्थासिद्ध्यर्थं कल्पिताभिरेवाविद्याभिर्जीवभेदस्यापि सिद्धिरिति चेन्न,— प्रागुक्तपरस्पराश्रयानतिलङ्घनात् । बीजाङ्कुर न्यायेन तदुल्लङ्घनमिति चेत्? किं याभिरविद्याभिर्ये जीवाः कल्प्यन्ते तासां तज्जीवाश्रयाणामेव बीजाङ्कुरन्यायमिच्छसि, उत पूर्वपूर्वजी वाश्रयाभिरविद्याभिरुत्तरोत्तरजीवक्लृप्तिं? न प्रथमः, तत्र बीजाङ्कुर

---

अभावेनेत्यर्थः नहि ब्रह्माज्ञानवादे व्यावहारिकोऽपि जीवभेदोऽस्ति, प्रमाणं चान्तःकरणावच्छिन्नभेदविषयम्, न जीवभेदविषयमिति भावः । नन्वस्तु जीवभेदस्य सत्यत्वम्, तथापि न सिद्धान्तिमत इव स्वाभाविकत्वम्, किन्त्वाकाशादिभेदवदौपाधिकत्वमेवास्तु, अतः कथमविद्यानपेक्षा, अथवा जीवभेदो मिथ्यैवास्तु, अथापि न ब्रह्माज्ञानमत इव मिथ्या, किंतु व्यावहारिक इत्याशङ्क्याह–उभयपक्षेति । स्वाभाविकभेदसत्यत्वमतोक्तधिनः औपाधिकसत्यस्य जीवभेदस्य मानाभावा देवासिद्धेः, अत एव जीवभेदासिद्धिमतोक्तधिनो व्यावहारिकस्य वा जीवभेदस्या सिद्धेरित्यर्थः । यथा चासिद्धिस्तथा वादान्तरे द्रष्टव्यमिति भावः । अपी त्यत्र प्राक् अर्थे ति पतितमिति प्रतिभाति । अथवा भवदभिमतस्येत्यस्यापरमार्थस्ये त्यर्थः, परमार्थस्य वा अपरमार्थस्यापि नेति योज्यम् । अपिशब्देनैव वा वा– शब्दार्था विवक्षितः । उत्तरपक्ष एवाह– किञ्चे ति । अपरिहार्य मिति । तत्र चानुपपत्तिरुक्तैवेति भावः । द्वितीये अविद्याभेदे सति जीवभेदः, तस्मिंश्च सति भिन्नजीवाश्रयत्वम्, तस्मिंश्च सति अविद्याभेद इति चक्रकमभिप्रेत्याह– द्वितीय इति । अनन्तरोक्तान्योन्याश्रयपरिहारं शङ्कते–अथ जीवे ति । बद्धे ति । इदानीं बन्धस्यानुभवात् शुकादिमुक्तेश्च प्रमाणसिद्धत्वात् स्वाभाविकभेदस्य च निषेधादिति भावः । वादादावुक्तम् यान्योन्याश्रयं स्मारयति – प्रागुक्ते ति ।

न्यायस्यासम्भवात् ; नहि यदङ्कुरोत्पादकं यद्बीजं तदेव तस्यारम्भकम् । नापि द्वितीयः, जीवानां भंगुरत्वादिप्रसङ्गेन जीवनित्यत्वाजरत्वादिश्रुतिविरोधात्; अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गाच्च । सन्तानैक्यादविरोध इति चेन्न;— क्षणभङ्गवादस्य दुर्निरसनत्वप्रसंगात् । जीवब्रह्मणोरत्यन्तवैदेशिकत्वप्रसङ्गाच्च । अथ ब्रह्मण एव पूर्वपूर्वजीवभावाश्रयाभिरविद्याभिरुत्तरोत्तरजीवभावप्रकल्पनमिति मन्यसे, तदपि दत्तोत्तरम् , अविद्याप्रवाहकल्पितजीवभावस्यापि तद्वत्प्रवाहानादित्वे ध्रुवरूपताभंगप्रसङ्गात् । नच तदिष्टम् , आमोक्षाज्जीवभावस्य ध्रुवत्वाभ्युपगमात् । यत्त्ववस्तुरूपायामविद्यायां नेतरेतराश्रयत्वादयो वस्तुदोषाः क्षतिमावहन्तीति, तद्ब्रह्माज्ञानवादे दुर्घटत्वपक्षदूषणेनैव निरस्तम् । एवं च सति ब्रह्माज्ञानवादे मुक्तानामज्ञानसद्भावे को विरोधः । शुद्धविद्यास्वरूपे तत्र तेजसीव तमसः कथमशुद्धेरसम्भव इति चेन्न, अवस्तुभूतायामसम्भवस्यैव त्वया गुणत्वस्वीकारात् । अन्यथा कथं प्रागुक्तेषु बाधकेषु जीवेषु जीवाश्रयाविद्यानुवृत्तिः । तेन जीवाश्रयाविद्यामपि दुर्घटयं, सुघटयं वा ब्रह्माश्रयाविद्यामेव ।

यत्तु मिथस्संश्रयादिपरिहाराय स्वरूपत एव जीवकल्पिकाविद्यानां तत्कल्पितजीवानां चानादित्वमस्त्वित्यन्वारूढम्, तत्र किमेकैकजीवकल्पिकाविद्या जीवानां जीवान्तरदर्शने कारणम् , नवा?

---

तदेव तस्यारम्भकमिति । तदङ्कुरमेव तद्बीजारम्भकमित्यर्थः । भङ्गुरत्वादीति । आदिशब्देनोत्पत्तिर्गृह्यते । वैदेशिकत्वप्रसङ्गादिति । भेदप्रसङ्गादित्यर्थः । एकस्य ब्रह्मणोऽनन्तैर्जीवैरभेदानुपपत्तेरिति भावः । जीवभावाश्रयाभिरिति । जीवभावाधीनाभिरित्यर्थः । दत्तोत्तरत्वमेवोपपादयति— अविद्येति । तद्वदिति ।

पूर्वत्र जीवान्तरदर्शनस्यापि भ्रमरूपत्वात् तथैवानन्तजीवक्लृप्तिरनिवार्या। तथाच जितमेकजीववादेन, लाघवात्; दोषाणां चाविशिष्टत्वात्। उत्तरत्र जीवानां परस्परवार्तानभिज्ञत्वप्रसंगेन वादिप्रतिवादिशिष्याचार्यादिव्यवस्थाभंगः।

यत्पुनरुक्तं प्रतिबिम्बश्यामतादेरिव जीवाशुद्धेरपि मिथ्यात्वाज्ज्ञाननिवर्त्यत्वमुपपद्यत इति; तदप्यसत्, अशुद्धिनाशे तत्तदशुद्धिहेतुभूताविद्याख्योपाधिविगमे च प्रतिबिम्बस्थानीयो जीवस्तिष्ठति वा, नवा? तिष्ठति चेदाविद्यकभेदस्थितेरनिर्मोक्षः। नचे

---

जीववदित्यर्थः। पूर्वत्रे ति। एकस्य जीवस्य इतरजीवदर्शनं हि भ्रमरूपमेव, अतस्तत्रार्थाभावात् सोपि स्वाप्नजीवान्तरवत्तदविद्याकल्पित इति वाच्यम्, एवं जीवान्तरस्यापि जीवान्तरदर्शनं भ्रमरूपमिति तद्दृष्टजीवान्तरमपि तदविद्याकल्पितं वाच्यम्, ततश्चानेकजीववादे प्रतिस्वप्नन्यायेन बहुजीवकल्पनाप्रसङ्गात् एकएव जीवः स्वप्नन्यायेन तत्कल्पितं जीवान्तरमित्यङ्गीकारे लाघवमिति एकशरीरैकजीववाद एव वरमित्यर्थः। अनेकजीववाद एवाज्ञानस्य जीवाश्रयत्वाङ्गीकारात् अनेकजीवनिरासे अज्ञानस्य जीवाश्रयत्वमपि निरस्तं भवतीति भावः। यद्येकजीववादेप्यज्ञानस्य जीवाश्रयत्वमज्ञानजीवयोरनादित्वाच्चान्योन्याश्रयपरिहारश्चोच्येत, तदानीमपि ब्रह्मजडाज्ञानवादावतारः, व्यासज्यवृत्तित्वे संसारमोक्षयोरपि तथात्वप्रसङ्गः, जीवस्याज्ञानाश्रयत्वेपि ब्रह्मणोपि तत्प्रसङ्गः, बिम्बप्रतिबिम्बयोर्धर्मव्यवस्थानुपपत्तिः, प्रतिबिम्बस्योपाध्याश्रयत्वानुपपत्तिरित्यादिसाधारणदूषणान्यनुसन्धेयानि। नन्वनेकजीववादेपि न प्रतिजीवं बहुजीवक्लृप्तिः, एकाविद्याकल्पितजीवस्याविद्यान्तरकल्पितजीवप्रतिभासोपपत्तेरिति चेन्न,— तदविद्याकल्पितत्वाभावे तत्प्रतिभासानुपपत्तेः, अन्यथा शुक्तिरजतस्यापि साधारण्यप्रसङ्गात्। ननु शुक्तिरजतवज्जीवान्तरमपि परोक्षत एव ज्ञायत इति न दोष इति चेत्? किं तत्परोक्षज्ञानम्? किं वृत्तिः, उत तदुपलक्षितचैतन्यम्, उत तद्विशिष्टम्? नाद्यः, वृत्तेः जडत्वात्, न द्वितीयः, तस्यापरोक्षत्वात्; उक्तदोषाभ्यामेव न तृतीयोपि। वृत्तिप्रतिबिम्बितजीवचैतन्यं तदिति चेत्, किं

जीवस्य स्वरूपोच्छित्तिरेव मोक्षः स्यादित्यवैदिकमतावतारः । मुखात्मना प्रतिबिम्बमिव ब्रह्मात्मना जोऽस्तिष्ठतीति चेत् ? किं प्रतिबिंबस्यात्मा मुखम्? तथा सति सत्यमिथ्यैक्यादिप्रसंगात् । अत एव दार्ष्टान्तिकमपि निरस्तम् । किञ्च यस्य ह्यपुरुषार्थरूपो दोषः स्वनिष्ठतया प्रतिभासते तस्य तदुच्छेदापेक्षा स्यात्, तत्र किं बिम्बस्थानीयेन स्वात्मनैव स्वगताशुद्धिं पश्यति ब्रह्म, उत प्रतिबिम्बस्थानीयेन जीवात्मना, उतान्येन केनचिदात्मना, अथान्य एव कश्चित्पुरुषस्थानीयः पश्यतीति ? न प्रथमः, ब्रह्माज्ञानवादप्रसङ्गात् । न द्वितीयः, स्वाशुद्धिनिवृत्तेः प्रतिबिम्बत्वनाशाविनाभावेन तदुच्छेदापेक्षाविरहप्रसङ्गात् ।

---

तज्ज्ञातृत्वं तज्ज्ञानरूपत्वम्, उत तज्ज्ञानाश्रयत्वम् ? आद्ये कथं जीवस्य जीवान्तरज्ञानम्, जीवप्रतिबिंबस्यैव तज्ज्ञातृत्वात् । बिंबप्रतिबिंबधर्मव्यवस्थाया-स्त्वयैव कल्पनात् । द्वितीयेऽपि न जीवस्य जीवान्तरज्ञातृत्वसिद्धिः, बिम्बस्य प्रतिबिम्बाश्रयत्वासिद्धेः । मुखात्मने ति । बिंबमुखात्मनेत्यर्थः । सत्यमिथ्यैक्यादिप्रसङ्गा दिति । यथा च प्रतिबिम्बस्य मिथ्यात्वं तन्मते शान्य तथोपपादितं प्राक् । प्रतिबिम्बनाशे बिंबनाशः स्यात् इत्यादिशब्देन विवक्षितम् । किञ्चाशुद्धिनिरासश्च तत्साधनानुष्ठानादेव, नान्यथा श्रवणादिविधानवैयर्थ्यापत्तेः, तदनुष्ठानं च तत्फलभूताशुद्धिनिवृत्तीच्छां विना नोपपद्यते, तदिच्छा याश्च त्वन्मते असम्भवात् नाशुध्युच्छेदोपपत्तिरित्याह किंचे ति । बिम्बस्थानीयेने ति । लोकसिद्धमुखादिबिम्बस्थानीयेनेत्यर्थः । प्रतिबिम्बस्थानीयेने ति । लोकसिद्धमुखादिबिम्बस्थानीयेनेत्यर्थः । प्रतिबिम्बत्व दिति । मुखादिप्रसिद्धप्रतिबिम्बस्थले श्यामतादिनिवृत्तेः प्रतिबिम्बनिवृत्त्यविनाभाववदित्यर्थः । किञ्च किं ब्रह्मजीवयोर्बिम्बप्रतिबिम्बभावो मुख्यः, उतामुख्यः ?

मुख्यबिम्बप्रतिबिम्बभावविवक्षायां च द्वयोरपि कल्प्ययोर्मुखादिव दोषप्रतिभासाधारत्वायोगाच्च, तद्वदेवाचेतनत्वात् । न तृतीयचतुर्थौ, असम्भवादनभ्युपगमाच्च । किञ्च जीवकल्पनारूपो भ्रमः किमविद्यायाः, उत जीवस्यैव, अथ ब्रह्मणः ? नाद्यः, अचेतनत्वात् तस्याः । न द्वितीयः, भ्रमविषयतयैव स्वसिद्धौ भ्रमोदयात्प्राक्स्वरूपासम्भवेन निराश्रयभ्रमोदयासम्भवात् । स्वभ्रमाश्रयतया पूर्वमेवा स्वसद्भावे त्वात्माश्रयः । कल्प्यकल्पनायाः स्वकल्पकत्वञ्च शुक्तिरजतादिषु न क्वचिद्दृष्टमिति विरुद्धोपलम्भनाच्च ।

---

अत्र स्वदभिमतव्यवस्थाया असिद्धिरित्यभिप्रेत्य द्वितीयं दूषयति— मुख्ये ति । द्वयो रिति । ब्रह्मणो दोषप्रतिभासाश्रयत्वे जीवस्य दोषप्रतिभासाश्रयत्वे चेत्यर्थः । आदिशब्देन प्रतिमुखपरिग्रहः । तद्वदेवे ति । चाक्षुषस्यैव प्रतिबिम्बोपपादनात् तस्य च जडत्वान्मुख्यबिम्बप्रतिबिम्बभावाङ्गीकारे जीवब्रह्मणोरचेतनत्वप्रसङ्ग इत्यर्थः । बिम्बप्रतिबिम्बभावे सिद्धे प्रतिबिम्बगताशुद्धेः श्यामतादेरिव मिथ्यात्वं स्यात्, तदेव न सम्भवति, प्रतिबिम्बप्रतिभासस्यैवासम्भवादित्याह— किञ्चे ति । न द्वितीय इति । जीवस्य मिथ्यात्वाद्भ्रमविषयतयैव स्वात्मलाभाद्भ्रमोदयात् प्राक् जीवस्वरूपासम्भवेन जीवाश्रयतयाभिमतस्य प्राक्कालीनजीवमनाश्रित्योत्पत्त्ययोगादित्यर्थः । यद्यपि स्वोत्पत्तिकाले जीवाश्रयत्वं भ्रमस्य सम्भवत्येव, तथापि भ्रमात् प्राक् जीवासिद्धौ तस्य भ्रमाश्रयत्वमेवानुपपन्नम्, ज्ञातुरेव तदाश्रयत्वात्, ज्ञातुश्च ज्ञानकारणविधयत्वात्, कारणस्य च पूर्ववृत्तित्वावश्यम्भावादिति भावः । स्वभ्रमाश्रयतये ति । स्वस्यैव स्वभ्रमाश्रयत्वात् भ्रमात् प्राक् स्वस्याभावे च भ्रमाश्रयत्वायोगात् भ्रमात् प्रागेव स्वसद्भाव इत्यर्थः । आत्माश्रय इति । भ्रमात् प्राक्कालीनेन जीवेन भ्रमकाले स्वसिद्धेर्वाच्यत्वादिति भावः । विरुद्धोपलम्भनाच्च इति । कल्प्यस्य स्वाकल्पकत्वस्यैवोपलम्भादिति भावः । न च शुक्तिरजतादेः स्वाकल्पकत्वं जडत्वादेव, न तु कल्प्यत्वादिति वाच्यम्,— जीवस्यापि कल्प्यत्वादेव जडतया कल्पकत्वायोगात् । ननु जीवभाव एव कल्प्यः, न तु

न तृतीयः, ब्रह्माज्ञानवादप्रसङ्गादेव । यत्पुनरुक्तम्— जीवात्मनामपि वस्तुतो ब्रह्माव्यतिरेकाज्जीवेनात्मनेति ब्रह्मणो जीवतादात्म्यानुसन्धानं युक्तमितिः तदप्यसारम्, जीवानुसन्धानस्य कल्पितत्वे ब्रह्माज्ञानवादावतारात् । अकल्पितत्वे सयूथ्यदूरापक्रमणप्रसङ्गात् । अनुभयात्मत्वे त्वनुसन्धानासिद्धेरेव ब्रह्मणो बहुभवनसङ्कल्परूपेक्षणतत्पूर्वकविचित्रसृष्टिजीवात्मत्वानुसन्धानतत्पूर्व - नामरूपव्याकरणादिवदनादिसमस्तव्यापारनिरोधेन समन्वयाविरोध-लक्षणोक्तसमस्तार्थविलयप्रसङ्गात् । अत एव भास्करोऽस्तमितः, ब्रह्मणो जीवतादात्म्यानुसन्धाने स्वात्मनो दुःखाद्यनुसन्धानस्य दुर्वारत्वात् ; तदभावे बहुभवनसङ्कल्पानुपपत्तेरिति ।

---

जीवस्वरूपमिति चेत् ? तत्किं स्वरूपस्यैव कल्पकत्वं ब्रवीषि? तर्हि ब्रह्मण एव भ्रान्तिर्दुर्निवारा । बिंबप्रतिबिंबभेदेन च भ्रान्तितदभावव्यवस्था दुरुपपादेत्युक्तम् । ब्रह्माज्ञानवादप्रसंगा दिति । भ्रमसमानाश्रयत्वादज्ञानस्येति भावः । कल्पितत्व इति । कल्पितविषयत्व इत्यर्थः । अकल्पितत्व इति । अकल्पितविषयत्वे, परमार्थविषयत्व इत्यर्थः । सयूथ्ये ति । स्वत्सयूथ्येन माध्यमिकेन स्वत्परिग्रहो न स्यादित्यर्थः । स एव तस्य चिराभिलषित इति भावः । सयूथ्यक्षीम इति पाठे अपसिद्धान्त इत्यर्थः । अनुभयात्मकत्व इति । सत्यमिथ्याविलक्षणविषयत्वे निरुपाख्यत्वमेव विषयस्य स्यादित्यर्थः । ब्रह्मण इत्यादि । जीवभावस्य निरुपाख्यत्वे सति बहुभवनस्यापि तथात्वात्तत्सङ्कल्पतत्पूर्वकजगत्सृष्टिजीवात्मत्वानुसन्धानपूर्वकानुप्रवेशानुसन्धानतत्पूर्वकनामरूपव्याकरणादीना - मसिद्धौ ब्रह्मणो जगत्कारणत्वप्रतिपादकशारीरकप्रथमाध्यायस्य तदविरोधप्रतिपादकद्वितीयाध्यायस्य च उच्छेद एव स्यादित्यर्थः । एवं मृषावादिमते जीवात्मभावानुसन्धानं नोपपद्यत इत्युक्तम् । तामेवानुपपत्तिं प्रसङ्गात् भास्करमतेप्यतिदिशति— अत एवे ति । वक्ष्यमाणयुक्तेरित्यर्थः । इदं च दूषणं मृषावादिमतेप्यनुसन्धेयम् । तादात्म्यानुसन्धानमेव मा भूदित्याशङ्क्य 'अनेन जीवेने' ति श्रुतिविरोधस्य स्पष्टत्वात् दूषणान्तरमाह-तदभाव इति । भास्करमते हि ब्रह्मणो

यादवप्रकाशमते तु प्रतिसर्गदशायां सन्मात्रपरिशेषस्य ब्रह्मणश्चिद चिदीश्वरसृष्ट्यनुरूपसङ्कल्पप्रसङ्गो न सम्भवतीति विशेष. । प्राचीन कल्पान्ते भविष्यत्सृष्टिसङ्कल्प इति चेन्न;— तथात्वे प्रमाणाभावात् । प्रतिसर्गमनन्तरसङ्कल्पश्रुतेर्बाधकाभावाच्च । अतो यावद्ब्रह्मणः परस्परं च जीवानामत्यन्तभेद· पारमार्थिको नाङ्गी क्रियते न तावज्जीवेश्वरबद्धमुक्तादिव्यवस्थासिद्धिरिति ।

---

ुमयनं सत्योपाधिभिन्नजीवभाव एव, शरीरशरीरिभावानङ्गीकारात् , अधिष्ठान- ानङ्गीकाराच्च । चिद्रूपेण बहुभवनसम्भवात् यादवमते दूषणान्तरमप्याह ादिवे ति । सन्मात्रपरिशेषस्ये ति । सन्मात्र परिशिष्ट यस्मिन् तत्सन्मात्रपरि ष्म् , सत्– चिदचिदीश्वरसमुदायात्मकम् , ब्रह्म अन्यपदार्थः । प्रतिसर्गसम- न्तरे ति । 'सदेव सोम्येदमग्र आसी'दिति सन्मात्रात्मकत्वात्मक प्रलय प्रतिपाद्य, तदैक्षते ' ति सन्मात्रस्यैव बहुभवनसङ्कल्पप्रतिपादनेनार्थात् सङ्कल्पस्य प्रलया न्तर्यसिद्धेरित्यर्थ. । जीवब्रह्मणोरभेदो न केवल जीवतादात्म्यानुसन्धानानुप ादक एव, किन्तु प्रमाणसिद्धव्यवस्थाभङ्गकोपीति प्रसङ्गादभेदेऽपि दूषणमाह ात इति । अत. दुःखाद्यनुसन्धानस्य दुर्वारत्वादेवेत्यर्थ. ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन

तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध

महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां

शतदूषणीव्याख्यायां चण्डमारुताख्यायां

जीवाज्ञानभङ्गो नाम

चत्वारिंशः स्कन्ध. ।

---

जीवाज्ञानविभागादीश्वरचिदचिद्विभागक्लृप्तिरभूत् ।
इति कल्पयता जीवः कारणमीशस्तु तत्कार्यम् ॥

तेनाद्वैतवादिनां पारम्पर्यवैपरीत्यक्लृप्तिः पाषण्डपदपर्यवसानभूमिरिति परित्यजन्ति सन्तः ।

इति शतदूषण्यां जीवाज्ञानभङ्गः

चत्वारिंशो वादः ।

